अर्हम्

चन्द्रकुलाम्बरनिशाकर श्री शान्तिसूरिसङ्कलित स्वोपज्ञवृत्तिसमेत

# धर्मरत्नप्रकरण

श्री आराधनाभवन-जैनसंघ (दादर मुम्बई) ज्ञानद्रव्यसाहाय्येन प्रकाशितम्



पुनर्मुद्रण प्रकाशक

दिव्य दर्शन ट्रस्ट

C/o. कुमारपाल वि शाह

६८, गुलालवाडी, मुंबई-४००००४.

वि. सं. २०३८ मूल्यम् १२-०० रूप्यकाः प्रतयः ५००

वीर सं. २५०८

# शुद्धिसूचा

| पृष्ठ | पङ्क्ति | अशुद्धं | शुद्धं | पृष्ठं | पंक्ति. | अशुद्धं | शुद्धं |
|---|---|---|---|---|---|---|---|
| ६/ | ४० | मन्दिरः | मन्दिरे | २९ | २ | नाणाइमिश्रोनि | नाणाइमओ नि |
| ८/ | १२ | तयात्याम्मदोप | नथाप्याम्मदोप | ३० | ३ | षडिन्यपरार्थः | षड्रिपुपेरर्गः |
| | २६ | कुमम | कुसुम | | २३ | किपाग | किम्पाक |
| ९/ | १० | सत्यवायस्स | सत्यवाइम्म | | २७ | कंडुयणं च | कण्डुयणं व |
| ११ | ४ | कहियपुत्वयुत्तं | कहियं पुव्वयुत्तं | ३३ | १९ | कीटकादि | कीटिकादि |
| १२ | ४० | व्यावृत्तं | व्यापृत्तं | ३४ | ६ | आयार | आयर |
| | ४१ | सत्य | सत्या. | ३६ | ३४ | सुक्पालेहि | संकवालेहि |
| | ४१ | ध्यानं | ध्याने | | ३५ | उस्सुकी | उस्सुक्को |
| १३ | ३४ | सुन्हा | सुण्हा | ३७ | १३ | कुग्गाहमाहिं | कुग्गाहगाहेहिं |
| | ३६ | तेसि | तासि | ३८ | ४० | स्मंविग्नोऽपेक्षो | सविग्नोऽप्येक्षो |
| १६ | २९ | परोपर | परोप्पर | ४० | १६ | मो | मा |
| | ३२ | जं पियाओ | जंपियाओ | | १९ | चेति | गेति |
| १९ | ६ | अन्तरोक्ते | अनन्तरोक्ते | | ३९ | दूपर | दूसप |
| | १६ | आयममाणे | आयंममणाणे | | ४१ | पंचमए | पंचमए |
| | २४ | सग्गाठ | मग्गाहं | | ३२ | मायारण | मायधारण |
| | २७ | जयंति | वयंति | ४१ | ४० | भगवं | भणियं |
| २० | ३४ | अणुदिहयम | अणुद्दियम | ४५ | १९ | व्यापारताभि | व्यापारिताभि |
| २२ | १९ | वराङ्गनामङ्ग | वराङ्गनामङ्ग | ४५ | ७ | स्वदत्तान्या | स्वदत्त्वान्या |
| २३ | ३९ | सन्धपओगणं | सत्थपओगेण | | १० | अणुट्ठियं | अणुट्ठियं |
| २४ | ९ | अट्ठवमट्ठा | अट्ठयमट्ठा | | ३२ | पडिमा धरपुत्त- | पडिमाधरपुत्र |
| | ३८ | जोगस्स | जोगस्स | ४६ | २२ | ननु | न तु |
| २६ | २० | नारी | नारी | | ३२ | चिन्त्यानाम् | चिन्त्यामाम् |
| | ३२ | नासिक्ये | नासिक्ये | | ३७ | साधायन् | साधयन् |

# धर्मरत्नप्रकरणविषयानुक्रमः



## ॥ प्रथमवाच्यस्य विषयोपक्रमः ॥

॥ अर्हम् ॥

॥ न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरीश्वरपादपद्मेभ्यो नमः ॥

विपुलचन्द्रकुलाम्बरनिशाकरश्रीशान्तिसूरिसङ्कलितं स्वोपज्ञवृत्तिसहितं

# धर्मरत्नप्रकरणम् ।

सिद्धं सर्वज्ञमानम्य वक्ष्ये संक्षेपतः स्फुटाम् । विवृत्तिं धर्मरत्नस्य मन्दबुद्धिप्रबुद्धये ॥ १ ॥

इह हि हेयोपादेयादिपदार्थपरिज्ञानशालिना विज्ञातासारसंसारापारपारावारपतितजन्तुसन्तानानवरतदुःखसन्तापेन जन्मजरामरणरोगशोकादिदुःखदौर्गत्यातिपीडितेन भव्यजन्तुना स्वर्गापवर्गादिसुखश्रीसंपादनावन्ध्यनिबन्धनं जिनधर्ममहारत्नमुपादातुमुचितम् । तदुपादानोपायश्च गुरूपदेशमन्तरेण नावबुध्यते । न चानुपायप्रवृत्तानामभीष्टसिद्धिः । इत्यतः कारुण्यपुण्यचेतस्तया धर्मार्थिनां धर्मोपादानपालनोपदेशं दातुकामः प्रकरणकारः शिष्टमार्गानुगामितया पूर्वं तावदिष्टदेवतानमस्कारादिप्रतिपादनाय गाथामाह—

**नमिऊण सयलगुणरयणकुलहरं विमलकेवलं वीरं । धम्मरयणत्थिआणं जणाण वियरेमि उवएसं ॥१॥**

इह पूर्वार्द्धेनेष्टदेवतानमस्कारद्वारेण विघ्नविनायकोपशान्तये मङ्गलमुक्तमुत्तरार्द्धेन चाभिधेयमिति । संबन्धप्रयोजने च सामर्थ्यगम्ये । तथा हि—संबन्धस्तावदुपायोपेयलक्षणः, साध्यसाधनलक्षणो वा । तत्र प्रकरणमुपायः साधनं वा । साध्यमुपेयं वा, प्रकरणार्थपरिज्ञानमिति । प्रयोजनं पुनः द्विविधम्, कर्त्तुः श्रोतुश्च । पुनरनन्तरपरम्परभेदादेकैकं द्विधा । तत्रानन्तरं कर्त्तुः सत्त्वानुग्रहः, श्रोतुः प्रकरणार्थपरिज्ञानम् । परम्परमुभयोरप्यपवर्गप्राप्तिरिति । साम्प्रतं व्याख्या विधीयते । तत्र चायं विधिः—"संहिता च पदं चैव पदार्थः पदविग्रहः । चालना प्रत्यवस्थानं व्याख्या तन्त्रस्य षड्विधा ॥१॥" तत्रास्खलितादिगुणोपेतसूत्रोच्चारणं संहिता, सा च व्यक्तैव । पदानि संस्कृतभाषया । नत्वा सकलगुणरत्नकुलगृहं विमलकेवलं वीरं धर्मरत्नार्थिनां जनानां वितरामि उपदेशमिति । पदार्थस्तु 'नत्वा' प्रणम्य सकलानि समस्तानि यानि रत्नानि तेषां कुलगृहमुत्पत्तिस्थानम् । यो भगवान् वीरस्तम् । इह यद्यपि गुणा वस्तुधर्माः शुभाशुभस्वरूपा अप्यभिधीयन्ते; तथापि शुभा एव प्रत्येतव्याः, इतरेषां रत्नत्वानुपपत्तेः । तथा हि—"जातौ जातौ यदुत्कृष्टं रत्नं निगद्यते हि तत् । इत्येवं सुधियः प्राहुर्निर्विसंवादमुत्तमाः ॥ १ ॥" विमलं ज्ञानावारककर्माणुसंपर्कविकलम्, केवलं केवलज्ञानं यस्य तम् । कर्मविदारणात्तपसा विराजनाद्वर्यवीर्ययुक्तत्वाच्च जगति यो वीर इति ख्यातस्तम् । यतोऽवाचि—"विदारयति यत्कर्म तपसा च विराजते । तपोवीर्येण युक्तश्च तस्माद्वीर इति स्मृतः ॥ १ ॥" तथा दुर्गतौ पततः प्राणिनो धारयतीति धर्मः । उक्तं च—"पततो दुर्गतौ यस्मात्सम्यगाचरितो भवात् । प्राणिनो धारयत्येष तस्माद्धर्म इति स्मृतः ॥ १ ॥" स एवाशेषानर्थविघातहेतुत्वात् कल्याणकलापकरणत्वाच्च रत्नम्, तदर्थयन्ति मृगयन्ते ये ते धर्मरत्नार्थिनस्तेभ्यः 'जनेभ्यः' लोकेभ्यो 'वितरामि' प्रयच्छामि । उपदिश्यत इत्युपदेशो हितप्रवृत्तिहेतुवचनप्रपञ्चस्तमिति । वीरं वर्त्तमानतीर्थाधिनाथं नत्वा धर्मार्थिजनेभ्य उपदेशं वितरामीति पदघटना । भावार्थः पुनरयम्—नत्वेति पूर्वकालाभिधायिनाऽऽक्षिप्तोत्तरकालक्रियेण स्याद्वादशार्दूलनादसंवादिना पदेनैकान्तनित्यक्षणिकवस्तुवादिमृगयोर्मुखबन्धो व्यधायि । तस्मान्नैकान्तनित्यः क्षणिको वा कर्त्ता क्रियाद्वयं कर्तुमीशो भवति, क्रियाभेदे कर्तृभेदात् । ततो द्वितीयक्रियाक्षणे कर्तुरनित्यत्वाभावप्रसङ्गाभ्यां द्वयोरप्यपाकृतिरिति । तथा सकलगुणरत्नकुलगृहमित्यनेन भगवतः समस्तसुरासुरमनुजनायकेषु प्राधान्यमभ्यधायि । तेषां कस्यापि केनापि गुणेन विकलतया सकलशब्दप्रवृत्तेरयोगात् । तथा विमलकेवलमित्यनेन भगवतो ज्ञानातिशयसंपन्नतया तथ्यार्थवादित्वमुक्तम् । तदन्तरेण सूक्ष्मबादरमूर्त्तामूर्त्तादिभावानां याथातथ्येन वक्तुमशक्यत्वात् । तथा धर्मरत्नार्थिभ्य इत्यनेन श्रवणाधिकारिणामर्थित्वमेव मुख्यं लिङ्गमित्यवाचि । तथा चाहुर्वृद्धाः—"तत्थहिगारी अत्थी समत्थओ जो न सुत्तपडिकुट्ठो। अत्थी तु जो विणीओ समुवट्ठिओ पुच्छमाणो य ॥ १ ॥" जनानामित्यनेन बहुवचनान्तेनैतदुदितम् । नैकमेवेश्वरादिकमाश्रित्योपदेशदाने प्रवर्त्तितव्यमपि तु सामान्येन सर्वसाधारणतया जिनागमानुसारेण । स चायम्—"जहा पुन्नस्स कत्थई तहा तुच्छस्स कत्थई । जहा तुच्छस्स कत्थई तहा पुन्नस्स कत्थई ॥ १ ॥" वितराम्युपदेशमितीहैतदाकूतम्—न प्रज्ञागर्वेण, न पराभिभवेच्छया, नापि कस्यचिदुपार्जनाय प्रवर्त्तते । किं तर्हि? कथं नु नामामी प्राणिनः सद्धर्ममार्गमासाद्य साद्यपर्यवसितं शिवशर्माऽवाप्स्यतीत्यनुग्रहबुद्ध्या परेषामात्मनश्च । यतोऽभाणि पूर्वाचार्यैः—"शुद्धमार्गोपदेशेन यः सत्त्वानामनुग्रहम् । करोति नितरां तेन कृतः स्वस्याप्यसौ महान्॥ १ ॥" किं च—"न भवति धर्मः श्रोतुः सर्वस्यैकान्ततोऽहितश्रवणात् । ब्रुवतोऽनुग्रहबुद्ध्या वक्तुस्त्वेकान्ततो भवति ॥ २ ॥" इत्युक्तः सभावार्थः पदार्थः । पदविग्रहस्तु समासादिकपदेषु प्रदर्शित एवेति न पृथगुच्यते । अथ चालना—ननु सकलगुणरत्नकुलगृहमित्युक्ते विमल-

केवलमित्यपार्थकम्, केवलज्ञानस्यापि गुणत्वात्; सकलशब्दस्य च सर्वसङ्ग्रहार्थत्वादित्यत्रोच्यते—सर्वगुणेषु प्राधान्योपदर्शनार्थमस्य पृथगुपन्यासः सत्यस्मिन्नवश्यं परमपदप्राप्तेर्दृश्यते चायं न्यायो लोकेऽपि यथा—'ब्राह्मणा आयाताः वशिष्ठोऽप्यायातः' इत्यादौ। इति गाथार्थः ॥ १ ॥

अथ यथाप्रतिज्ञातं विभणिषुः प्रस्तावनामाह—

**भवजलहिम्मि अपारे दुलहं मणुयत्तणंपि जंतूणं। तत्थवि अणत्थहरणं दुलहं सद्धम्मवररयणं ॥ २ ॥**

भवन्त्यस्मिन्नारकतिर्यङ्नरामररूपेण प्राणिन इति भवः संसारः, स एव जन्मजरामरणजलधारणाज्जलधिः, तस्मिन्ननादिनिधनतया "अपारे" पर्यन्तविकले बम्भ्रम्यमाणानामिति शेषः। 'दुर्लभं' दुरापं 'मनुजत्वमपि' मनुष्यभावोऽपि दूरे तावद्देशकुलारोग्यादिसामग्रीत्यपेरर्थः। यतोऽवाचि भगवता श्रीवर्द्धमानस्वामिनाऽष्टापदादागतं गौतममहामुनिं प्रति—"दुलहे खलु माणुसे भवे चिरकालेणवि सव्वपाणिणं। गाढा य विवागकम्मुणो समयं गोयम ! मा पमायए ॥" 'जन्तूनां' प्राणिनां 'तस्मिन्' मनुजत्वे सत्यपि 'अनर्थहरणम्' इति नार्थ्यन्ते न काम्यन्ते ये दारिद्र्यक्षुद्रोपद्रवादयोऽपायास्ते ह्रियन्ते येन तदनर्थहरणम्। 'दुर्लभं' दुरापं वर्त्तते किं तत्? इत्याह—संश्चासौ धर्मश्च सद्धर्मः सम्यग्दर्शनादिरूपः। स एव वरं प्रधानं रत्नमिवाशेषापायनाशित्वात्तदिति। उक्तं च—"मानुष्यकर्मभूम्यार्यदेशकुलकल्यतायुरुपलब्धौ। श्रद्धा कथकश्रवणेषु सत्स्वपि सुदुर्लभा बोधिः ॥ १ ॥" इति गाथार्थः ॥ २ ॥

१ 'सुदुर्लभो' इत्यपि ॥

अमुमेवार्थं दृष्टान्तविशिष्टं स्पष्टतरमाह—

**जह चिंतामणिरयणं सुलहं न हु होइ तुच्छविहवाणं। गुणविभववज्जियाणं जियाण तह धम्मरयणंपि ॥३॥**

'यथा' इति दृष्टान्तोपन्यासार्थः। येन प्रकारेण 'चिन्तामणिरत्नं' प्रतीतं 'सुलभं' सुप्रापं 'न हु' नैव 'भवति' स्यात् 'तुच्छविभवानां' अल्पधनानां, तन्मूल्योचितविभवाभावादिति भावः। गुणा वक्ष्यमाणस्वरूपाः, तेषां विशेषेण भवनं सत्ता गुणविभवः। अथवा गुणा एव विभवो भूतिर्गुणविभवः, तेन वर्जितानां रहितानां 'जियाणं' इति प्राकृतशैल्या ह्रस्वं, तवकारलोपौ (?)। 'जीवानां' पञ्चेन्द्रियप्राणिनाम्। उक्तं च—"प्राणाः द्वित्रिचतुः प्रोक्ता भूतानि तरवः स्मृताः। जीवाः पञ्चेन्द्रियाः प्रोक्ताः शेषाः सत्त्वा इतीरिताः ॥ १ ॥" अपिशब्दस्य वक्ष्यमाणस्येह संबन्धादेवं भावना कार्या—विकलेन्द्रियाणां तावद्धर्मप्राप्तिर्नास्त्येव पञ्चेन्द्रियाणामपि योग्यताहेतुगुणसामग्रीविकलानाम्। 'तथा' तेन प्रकारेण 'धर्मरत्नम्' सुलभं न भवतीति प्रकृतेन संबन्धः। इति गाथार्थः ॥ ३ ॥

कति गुणसंपन्नः पुनस्तत्प्राप्तियोग्यः? इति प्रश्नमाशङ्क्याह—

**इगवीसगुणसमेओ जोगो एयस्स जिणमए भणिओ। तदुवज्जणंमि पढमं ता जइयव्वं जओ भणियं ॥४॥**

एकविंशतिभिर्गुणैर्वक्ष्यमाणैः समेतो युक्तः, वाचनान्तरेण समृद्धः संपूर्णः समिद्धो वा दीप्यमानो 'योग्यः' उचितः। 'एतस्य' प्रस्तुतधर्मरत्नस्य 'जिनमते' अर्हच्छासने 'भणितः' प्रतिपादितस्तदभिज्ञैरिति गम्यते। ततः किम्? इत्याह—'तदुवज्जणंमि' इति तेषां गुणानामुपार्जने विढपने 'प्रथमं' आदौ 'तस्मात्' ततो हेतोः 'यतितव्यं' उद्यन्तव्यमिदमिहाकूतम्—यथा प्रासादार्थिनः शल्योद्धारपीठबन्धादावाद्रियन्ते तदविनाभावित्वाद्विशिष्टप्रासादस्य। तथा धर्मार्थिभिरेते गुणाः सम्यगुपार्जनीयाः, तदधीनत्वाद्विशिष्टधर्मसिद्धेरिति। 'यतो' यस्मात् 'भणितं' अभिहितं पूर्वाचार्यैरित्यध्याहारः ॥ इति गाथार्थः ॥४॥

१ 'पञ्चेन्द्रियाणां प्राणिनाम्' इत्यसमस्तं क्वचित्। २ 'जुग्गो' इत्यपि ॥

भणितमेवाह—

**धम्मरयणस्स जोगो अक्खुद्दो रूववं पयइसोमो। लोगप्पिओ अकूरो भीरू असढो सुदक्खिन्नो ॥ ५ ॥**
**लज्जालुओ दयालू मज्झत्थोसोमदिट्ठि गुणरागी। सक्कह सुपक्खजुत्तो सुदीहदरिसी विसेसन्नू ॥ ६ ॥**
**वुड्ढाणुगो विणीओ कयन्नुओ परहियत्थकारी य। तह चेव लद्धलक्खो इगवीसगुणेहिं संपन्नो ॥७॥**

अस्य गाथात्रितयस्य पूर्वसूरिप्रणीतस्यार्थः—धर्माणां मध्ये यो रत्नमिव वर्त्तते स धर्मरत्नं जिनप्रणीतो देशविरतिसर्वविरतिरूपः समाचारः, तस्य 'योग्यः' उचितो भवतीत्यध्याहारः। 'एकविंशतिभिर्गुणैः संपन्नः' इति, इत्युत्तरेण योगः। तानेव गुणान् गुणगुणिनोः कथञ्चिदभेद इति दर्शनाय गुणिप्रतिपादनद्वारेणाह—'अक्षुद्रो' भणिष्यमाणस्वरूपः ॥ १ ॥ तथा 'रूपवान्' प्रशस्तरूपोपेतः। वतोः प्रशंसावाचित्वात्। रूपमात्राभिधाने इन्नेव दृश्यते। यथा 'रूपिणः पुद्गलाः प्रोक्ताः' इति ॥ २ ॥ तथा प्रकृत्या स्वभावेन सौम्यः सुन्दरस्वभावः, प्रशान्तचित्तत्वात् ॥ ३ ॥ 'लोकप्रियः' सदाचारचारित्वात् ॥ ४ ॥ 'अक्रूरः' परदोषेक्षणादिक्रूरत्वाभावात् ॥ ५ ॥ 'भीरुः' ऐहिकपारत्रिकापायेभ्यः, त्रसनशीलत्वात् ॥६॥

* 'जोग्गो' 'जुग्गो' इत्यपि। १ "प्रशस्तवाचित्वात्" इत्यपि ॥

'अशठः' सद्भावसारानुष्ठानत्वात् ॥ ७ ॥ 'सुदाक्षिण्यः' अभ्यर्थनासारत्वात् ॥ ८ ॥ 'लज्जालुः' पापप्रवृत्तौ शङ्कित्वात् ॥ ९ ॥ 'दयालुः' कारुणिकचित्तत्वात् ॥ १० ॥ 'मज्झत्थोसोमदिट्ठि' इति एकमेवेदं पदं, प्राकृतत्वाद्विभक्तेरलुक् । ततश्च मध्यस्था रागद्वेषविकला सौम्या वाऽक्रूरा दृष्टिर्दर्शनं यस्य स 'मध्यस्थसौम्यदृष्टिः' यथावस्थितवस्तुतत्त्वदर्शित्वात् ॥ ११ ॥ 'गुणरागी' गुणेषु बहुमानवान्, [१]लघुकर्मत्वात् ॥१२॥ 'सत्कथः' न दुश्चारिचर्याकर्णनकथनरुचिः, सदाचारचारित्वात् ॥१३॥ सुपक्षः शोभनपरिजनः तेन युक्तोऽन्वितो [२]धर्माविरोधिबन्धुपरिवारः, इति भावः ॥ १४ ॥ 'सुदीर्घदर्शी' सुपर्यालोचितपरिणामसुन्दरकार्यकारी, बुद्धिसंपन्नत्वात् ॥१५॥ 'विशेषज्ञः' सारेतरादिवस्तुवेदी न रागद्वेषमूढत्वपूर्वव्युद्ग्राहितत्ववशात् प्रतिपन्नकुग्राहैकतानमानस इति ॥१६॥ 'वृद्धानुगः' परिणतमतिपुरुषच्छन्दोऽनुवर्त्ती ॥१७॥ 'विनीतः' गुरुजने गौरवकृत् ॥ १८ ॥ 'कृतज्ञः' स्तोकमप्युपकारमैहिकं पारत्रिकं वा न विस्मरति ॥ १९ ॥ तथा परेषामन्येषां हितानर्थान् प्रयोजनानि कर्त्तुं शीलं यस्य स 'परहितार्थकारी' प्रत्युपकारानपेक्ष इति भावः । सुदाक्षिण्यादस्य को विशेषः ? इति चेदुच्यते, सुदाक्षिण्योऽभ्यर्थित एव परोपकारं करोति, अयं पुनः स्वत एव परहितरतिरिति ॥२०॥ 'तह चेव' इति तथाशब्दः प्रकारार्थः । चः समुच्चये । एवोऽवधारणे । ततश्च यथैते विंशतिस्तथैव तेनैव प्रकारेण लब्धलक्ष्यश्च धर्माधिकारीति पदयोगः। पदार्थस्तु लब्ध इव प्राप्त इव लक्ष्यो लक्षणीयो धर्मानुष्ठानव्यवहारो येन स 'लब्धलक्ष्यः' सुशिक्षणीयत्वात् ॥ २१ ॥ एभिरेकविंशतिभिर्गुणैः संपन्नो धर्मरत्नयोग्य इति योजितमेव । इति द्वारगाथात्रितयाक्षरार्थः ॥ ५ ॥ ६ ॥ ७ ॥

१ "न कुकर्मत्वात्" इत्यपि । २ "धर्मोविघ्नन्धक–" इत्यपि ॥

भावार्थं पुन प्रकरणकारः स्वयमेवाह—

## खुद्दोत्ति अगंभीरो उत्ताणमई न साहए धम्मं । सपरोवयारसत्तो अक्खुद्दो तेण इह जोग्गो ॥ ८ ॥

इह यद्यपि क्षुद्रशब्दोऽनेकार्थः । तद्यथा—"क्षुद्रस्तुच्छः, क्षुद्रः क्रूरः, क्षुद्रो दरिद्रः, क्षुद्रो लघुः" इत्यादि । तथाऽपीह क्षुद्र इत्यगंभीर उच्यते तुच्छ इति कृत्वा । स पुनः 'उत्तानमतिः' अनिपुणबुद्धिरिति हेतोः 'न साधयति' नाराधयति 'धर्मं' प्रतीतं, तस्य सूक्ष्ममतिसाध्यत्वात् । उक्तं च—"सूक्ष्मबुद्ध्या सदा ज्ञेयो धर्मो धर्मार्थिभिर्नरैः । अन्यथा धर्मबुद्ध्यैव तद्विघातः प्रसज्यते ॥ १ ॥ गृहित्वा ग्लानभैषज्यप्रदानाभिग्रहं यथा । तदप्राप्तौ तदन्तेऽस्य शोकं समुपगच्छतः ॥ २ ॥ गृहीतोऽभिग्रहः श्रेष्ठो ग्लानो जातो न च क्वचित् । अहो ! मेऽधन्यता कष्टं न सिद्धमभिवाञ्छितम् ॥ ३ ॥ एवमेतत् समादानं ग्लानभावाभिसन्धिमत् । साधूनां तत्त्वतो यत्तद्दुष्टं ज्ञेयं महात्मभिः ॥ ४ ॥" तद्विपरीतः पुनः स्वपरयोरुपकारकरणे शक्तः समर्थो भवतीति शेषः । 'अक्षुद्रः' सूक्ष्मदर्शी सुपर्यालोचितकारी 'तेन' [१]प्रकारेण 'इह' धर्मग्रहणे 'योग्यः' अधिकारी स्यात् । इति गाथार्थः ॥ ८ ॥ एत्थ उदाहरणम्—

चेइविसयालंकारभूयाए सोत्तिमइपुरीए पगईए पावभीरू सरलसच्छहियओ [२]वेयवेउत्ततत्तकुसलो खीरकयंबो नाम माहणो होत्था । तस्स य समीवे पवयओ नाम पुत्तो, नारयनामो ठाणंतरागओ, धम्मपुत्तो रायसुयओ य वसू नाम, एए तिन्नि महामइणो अन्नेवि तहाविहाणेण भट्टचट्टाइणो पढंति । कयाइ तस्स गेहे गोयरमडंतो साहुसंघाडगो पविट्ठो । ते

१ "प्रकारणेन" इत्यपि । २ "वेयवेयन्त–" इत्यपि ॥

तिन्निवि च्छत्ते पेच्छिऊणमेगेण साइसएण वीयसाहुस्स सिट्ठं । एएसिं तिण्हं दारयाणं दो अहोगामिणो एगो उड्ढगामी भविस्सइ । सुयमेयं कुडंतरिएण खीरकयंबेण चिंतियं च—एए महाभागा वीयरागमग्गाणुगामिणो नन्नहा जंपंति । संभवइ य रायपुत्तस्साहोगामित्तं। इयरेसिं पुण कोहम्मकम्मकारी संभावियइ ता परिच्छामि ताव दोन्नि एए। तओ तहजुत्तमणुचिट्ठिस्सं । पठ्यते च स्मृतिषु—"भर्त्तुर्भार्याकृतं पापं शिष्यपापं गुरोर्भवेत् । राज्ञि [१]राष्ट्रकृतं पापं राजपापं पुरोहिते ॥१॥" एवं चिंतिऊण कसिणचउद्दसिनिसाए कित्तिमच्छगलगो लक्खारसपडिहत्थो समप्पिओ नारयस्स, भणियं च—एस मए मंतेहिं मूढचेयणो विहिओ तहावि जत्थ न कोइ पासइ तत्थ गंतूण एयं हणाहि, न य अन्नस्स साहियव्वं, जओ एत्थ एस कप्पोत्ति । नारओवि अलंघणीयवयणो गुरुत्ति भाविंतो पत्तो एगं सुन्नरच्छं । किमेत्थ कोइ पेच्छइत्ति निउणं निरुवियंतेण दिट्ठमुवरिं तारामंडलं, अरे! दीसामि एत्थत्ति संभंतो पविट्ठो जक्खमंदिरं। एत्थवि जक्खो पासइत्ति गओ सुन्नगेहं। तत्थवि पंच लोगपाला दिव्वनाणिणो य निहालिंति । नवि एए कत्थइ न पेच्छंति । ता नूणं न हंतव्वो एसोत्ति गुरुआएसो कारणिओ य गुरु न एरिसं करेइत्ति निच्छिऊण पहट्ठमुहपंकओ गओ गुरुसमीवं । निवेइयं नियचरियं । तओ उवज्झाएण चिंतियं । एस ताव सुहुमबुद्धी न दोग्गइं [२]पउणेइ । ता किं मम पुत्तो कुगइं गमिस्सइ ? अहवा तंपि परिच्छामित्ति निच्छिऊण तेणेव विहिणा पेसिओ पव्वयगो । गओ सुन्नरच्छाए । एत्थ न कोइ पासइत्ति तं वावाइऊण समागओ गिहं । जणणिं हत्थपायसोयं मग्गइ । उवज्झाएण वुत्तं किं रे! एयंति ? । तेण पडिवुत्तं पउरो से रुहिरसंचओ

१ "राज्ञः पाप" इत्यपि । २ "पाउणेइ" इत्य[illegible] "तुर[illegible]पि ॥

आसि तेण मे अंगं विलित्तंति। उवज्झाएण भणियं कहिं तुमे यावाइओ ? कहं वा न केण य दिट्ठोसि ? । तेण भणियं सुन्नरच्छा-ए अंधयारंबहुलयाए निस्संचरंताओ लोगस्स न केण य दिट्ठोम्हि । उवज्झाएण वुत्तं कहं न दिट्ठोसि उवरिं नक्खत्तेहिं, पंचहिं लोगपालेहिं, दिवनाणीहिं, अप्पणो य पंचहिं इंदिएहिं? । तेण भणियं न अम्हे एत्तियं बुज्झामो, तो खाइं कीस पेसि-ओम्हि? । तओ उवज्झाओ अहो! निरणुकंपो एस न पावकम्मे पयत्तमाणो संकइ, ता नूणं नरयगामी भविस्सइ । अह कहं पुणाहमेयाओ पावोवलेवाओ मुच्चिस्संति चिंतावरो कह कह किच्छेणवि गमिऊण रयणिं पहायसमए ते चेव मु-णिणो गवेसंतो पत्तो उज्जाणं । तत्थ मुणिणो दट्ठूण वंदिऊण पुच्छिउं पयत्तो । भयवं! गिहकुडुंबे जइ किंपि माणुसं दुन्नए पवत्तई, ता घरसामी वज्झइ वा न वा ? । साहूहिं भन्नइ जइ कोइ तणपूलं जलणपलित्तं करेण धरेइ ता किं ड-ज्झइ वा न वा ? । विप्पेण भणियं डज्झइ । एवं गिहनाहोवि वज्झइत्ति । एवं मुणिवयणमायन्निऊण वुत्तं विप्पेण भयवं! कहं पुण सो मुच्चइ ? । साहुणा भणियं डज्झमाणपूलगपरिच्चाई पुरिसो जहा न डज्झइ, एवं पावगारिणं मणुसं मुयंतो गिहनाहोवि मुच्चइ । एवमायन्निऊण संवेगभाविओ तेसिमेव मुणीण समीवे पव्वइओ खीरकयंबो सुगइसाहगो य संवुत्तो। तओ भग्गा लेहसाला । गओ सट्ठाणं नारओ । गहियमुवज्झायपयं पव्वएण । पत्तो रायपयं वसू । पालिओ पसिद्धिं । नवरं पारद्धिलंपडोत्ति दिणे दिणे पारद्धिं करेइ । तेण कयाइ वणंतरे सुविसत्थं मयजूहमवलोइऊण एगागिणा निहुयप-यसंचारं मुक्को तं पइ सिलीमुहो । सोवि कहंवि पच्चप्फिडिऊण गओ खंडासंडिं । तओ सुविम्हिएण पलोयंतेण करफासेण

१ "बहुलाए" इत्यपि । २ "भाखइ" इत्यपि । "एवं" ३ क्वचिन्नास्ति । ४ 'माणुसं' इत्यपि । ५ 'एय'— इत्यपि ॥

लक्खिया नहयलनिव्विसेसवन्ना फलिहसिला । तओ रयणीए पच्छन्नमाणिऊण ठाविया अत्थाणमंडवे । निवेसियं तदु-वरि सिंहासणं । जाओ जणप्पवाओ राइणो सच्चवाइत्तेण सिंहासणमागासे चिट्ठइत्ति विन्नायवुत्तंतो कोउगेण समा-गओ नारओ । बहुमन्निओ पव्वएण जणणीए राइणा य । नेहवसेण तत्थेव सुहमच्छिउं पवत्तो । अन्यदा पर्वतकेन छात्रेभ्यः "अजैर्यष्टव्यम्" इति वेदवाक्यं व्याचक्षे । तद्यथा—अजैश्छगलकैर्यष्टव्यं यागक्रिया विधातव्येति । ततो ना-रदेनोचे—'भ्रातः! नैवं व्याख्यायते, यतो धर्माय यागक्रिया विधीयमाना न छगलकैर्विधातुमुचिता' इति । इतर उ-वाच—'कथय तर्हि कथं व्याख्यायते?।'नारदोऽवोचत्—'उपाध्यायेनाजाः सप्तवार्षिका व्रीहयोऽलपबीजत्वादत्र व्याख्या-तास्तदुक्तमेवास्माकं प्रमाणम्' इति । तओ पव्वओ उत्ताणमइत्तेण तमसंभरंतो छत्ताण मज्झे लहुगो भविस्सामित्ति महा-भिमाणओ भणिउमाढत्तो । अरे! ममाओवि तुमं पंडिओसि? उवज्झाएण तुह तत्तमाइक्खियं? । किंच जो एत्थ अलि-यवाइ तस्स जीहाच्छेओ दंडो । एत्थ सच्चवाई राया पमाणं । नारएण भणियमेवं होउ । विन्नायवुत्तंताए भणिओ जण-णीए पव्वओ य । पुत्त! नेहवसेण नारओ तुह समीवमागओ ता तेण समं न कलहिज्जइ । सो भणइ अंब! न कलहेमि किं तु छत्तमंडलीए मज्झे एसो मम वक्खाणं दुसेइ । केरिसंति साहिओ संवन्धो । जणणीए भणियं वच्छ! मम स-मक्खं चेव तुह जणएणावि एवं वक्खायं ता को दोसो नारयस्स ? । इयरो आह अंब! जइ एवं ता गया मे जीहा, जओ राया5पि सच्चवाइत्ति एवं चेव भणिही । तओ सा पुत्तनेहमोहिया पुव्वपडिवन्नवरं पत्थिउं पत्ता रायसमीवं । तेणावि

१ "छत्तमंडलीमज्झे" इत्यपि ॥

अब्भुट्ठिऊण पणामपुव्वं पुच्छियमागमणपओयणं । तीएवि वुत्तमेगंते । पुत्त! जइ सरसि पुव्वपडिवन्नं वरं जाएमि । तओ सुट्ठु सरामि अंब! करेहि मे रिणमोक्खं, वरेहि जं भे रोयइत्ति निवेण वुत्ते साहिऊण वइयरं जंपियमिमीए । सव्वहा रक्खेहि भाउणो जीहंति । तओ एवंति पवुत्ते राइणा गया एसा सट्ठाणं । धीरविओ पव्वयओ । बुइयदिणे सहरिसा चाउव्वन-पहाणपरिवुडा पत्ता रायसहं । कहिऊण वइयरं भणिओ राया पहाणलोगेण । देव! तुमं छट्ठो लोगपालो सच्चवाइत्त-गुणेण गयणंगणगओ चिट्ठसि । गुरुभाया दोण्हंपि एएसिं ता जमलजलणओ व तुलचित्तो ता जहट्ठियमेयं पयं पन्नवेहि । किंच—"अग्निस्तम्भं विधत्ते तुलयति हि घटे शुद्धिमेत्यम्बुपाने रक्षःसिंहाहिभूतप्रबलरिपुकृतं साध्वसं संरुणद्धि । मान्यः स्यात् सर्वलोके भवति सुगतिभाक् प्रेत्य सौभाग्ययुक्तः कल्याणं सत्यवादी किमिति न लभते? तद्विभो! ब्रूहि सत्यम्॥१॥" एवं भणिएवि राइणा भवियव्वयावसेणं भणियं । जमेस ओज्झायपुत्तो कहेइ तं चेय सच्चंति भणियाणंतरमेव कुवियाए भ-वणदेवयाए ओमंथिऊण ससिलासीहासणोच्छूढो धरणीए वसू गओ य नरयपुढवीए। अहो! कूडसक्खेज्जमणेण राया का-रिओत्ति खिंसिओ पव्वयओ लोएण निद्धाडिओ नयरीओ । सच्चवाइत्ति पूयओ नारओ । पत्तो नियट्ठाणं । कहाणगसेसं गंथंतराओ नेयं। एत्थ नारएण सुहुमबुद्धिणा छगलो न वहिओ । इतरेण खुद्दबुद्धिणा वहिओ । अओ चेव नारओ सपरोवयारी संवुत्तो । इयरो पुण सपराणत्थहेउत्ति उवणओ ॥

अथ रूपवन्तं स्वरूपतः फलतश्च निरूपयन्नाह—

१ "सव्वाहारक्खेहि" "सव्वाहार रक्खेहि" इत्यपि ॥

**संपुन्नंगोवंगो पंचिंदियसुंदरो सुसंघयणो । होइ पभावणहेऊ खमो य तह रूववं धम्मे ॥ ९ ॥**

संपूर्णान्यन्यूनान्यङ्गानि शिरःप्रभृतीन्युपाङ्गानि चाङ्गुल्यादीनि यस्य स 'संपूर्णाङ्गोपाङ्गः'। उक्तं च—"सीसमुरोयरपिट्ठी दो बाहू ऊरुगा य अट्ठंगा । अंगुलिमाइउवंगा अंगोवंगाणि सेसाणि ॥ १ ॥" स पुनरव्यङ्गिताङ्ग इति हृदयम् । तथा 'पञ्चेन्द्रियसुन्दरः' प्राकृतत्वाद्विशेषणस्य परनिपातः । काणकेकरबधिरमूकत्वादिविकल इत्यर्थः । 'सुसंघयणो' इति शोभनं संहननं शरीरसामर्थ्यं यस्य । न पुनराद्यमेव संहननान्तरेऽपि धर्मप्राप्तेः । "सब्वेसुवि संठाणेसु लहइ एमेव सव्वसंघयणे" इति वचनात् । स सुसंहननस्तपःसंयमानुष्ठानसामर्थ्योपेत इति भावः । एवंविधस्य धर्मप्रतिपत्तौ फलमाह—'भवति' संपद्यते 'प्रभावनाहेतुः' तीर्थोन्नतिकारणं, वैरस्वामिवत् । तथा हि—"रूवाइसयसमग्गो वइररिसी जत्थ जत्थ संचरइ । पावइ तहिं तहिं चिच जिणधम्मो उन्नइं परमं ॥ १ ॥ जम्मंतरकयसुकया रागेण मुणिंमि वइरसामिम्मि । पत्ता गिहवइधूया चरणं हरणं दुहसयाणं ॥ २ ॥" आगमेऽप्युक्तम्—"धम्मोदएण रूवं करेंति रूवंसिणोवि जइ धम्मं । गब्भवओ य सुरूवो पसंसिमो तेण रूवंति ॥ १ ॥" ननु नन्दिषेणहरिकेशबलादीनां कुरूपाणामपि धर्मसिद्धिः श्रूयते, अतः कथं रूपवानेव धर्मेऽधिक्रियते ? इति, सत्यम्, इह द्विधा रूपं सामान्यं अतिशायि च । सामान्यं संपूर्णाङ्गत्वादि, तन्नन्दीषेणादीनामासीदेवेति न विरोधः । प्रायिकं चैतच्छेषगुणसद्भावे कुरूपत्वस्य गुणान्तराभावस्य चादुष्टत्वादत एव वक्ष्यति—"पायद्धगुणविहीणा एएसिं मज्झिमा वरा नेया" इत्यादि । अतिशायिरूपं पुनर्यद्यपि तीर्थङ्करादीनामेव संभवति, तथाऽपि येन प्राणी क्वचिद्देशे काले वयसि वा वर्त्तमानो रूपवानयमिति प्रत्ययं जनानां जनयति तदेवेहाधिकृतं मन्तव्यम् । तदन्वितो हि धार्मिकः सदाचारप्रवृत्त्या भव्यजन्तूनां धर्मे गौरवमुत्पादयन् प्रभावयति धर्ममिति कृत्वा भवति प्रभावनाहेतुरित्युक्तम् । तथा 'क्षमः' समर्थः, चकारो भवति क्रियानुकर्षणार्थः । तथाशब्दः समुच्चये । न केवलप्रभावनाहेतुः, क्षमश्च भवति रूपवान् 'धर्मे' धर्मविषये । सुसंहननत्वफलमिदम् । इति गाथार्थः ॥ ९ ॥ अत्रोदाहरणम्—

विह्मावियसव्वजणा रूवाइगुणेहि चंदणा अज्जा । भेत्तूण कम्मगंठिं वीरस्स पवत्तिणी जाया ॥ १ ॥

सुप्रतीतं चैतदिति न लिख्यते ॥ अथ तृतीयं गुणमधिकृत्याह—

**पयईसोमसहावो न पावकम्मे पवत्तई पायं । हवइ सुहसेवणिज्जो पसमनिमित्तं परेसिंपि ॥ १० ॥**

'प्रकृत्या' अकृत्रिमभावेन, 'सौम्यस्वभावः' अभीषणाकृतिर्विश्वसनीयरूप इत्यर्थः । 'न' नैव, पापे कर्मण्याक्रोशवधादौ हिंसाचौर्यादौ वा 'प्रवर्त्तते' व्याप्रियते 'प्रायः' बाहुल्येनानिर्वाहादिकारणभूते । अत एव भवति 'सुखसेवनीयः' अक्लेशाराध्यः, 'प्रशमनिमित्तम्' उपशमकारणं च । अपिशब्दस्य समुच्चयार्थस्येह योगात् 'परेषाम्' अन्येषामनीदृशानामङ्गर्षिवदिति ॥ श्रूयते चागमे—

किल चम्पायां पुरि कौशिकार्यनाम्न उपाध्यायस्याङ्गर्षिरुद्रकाभिधानौ छात्रावभूताम् । तयोराद्यः सौम्यमूर्त्तिः, प्रियंवदः, सन्न्यायचारी, विनीतविनयो न कस्यापि वञ्चको विशेषतः उपाध्यायस्य । द्वितीयः पुनः विपरीतशीलस्तमुपाध्यायेन श्लाघ्यमानमसहमानो मनस्तापमापन्नस्तच्छिद्रालोकनव्याकुलमनास्तस्थौ । तावन्यदोपाध्यायेन प्रातरेवेन्धनानयनाय नियुक्तौ । ततोऽङ्गर्षिरुपाध्यायाज्ञां सबहुमानमादायारण्यमभ्यगात् । इतरस्तु दीर्घसूत्रितया द्यूतदेवकुलिकोत्प्रेक्षणेक्षणक्षणिकमना मध्यंदिनं यावत् स्थित्वा स्मृताध्यापकनिदेशश्चलितोऽटवीं प्रति । ददर्श च गृहीतोरुदारुभारमायान्तमङ्गर्षिम् । ततो भीतभीतस्त्वरितं गच्छन्नेकत्र विजने नद्यवतारे पन्थकाभिधानपुत्राय भक्तं दत्त्वा निवृत्तां बृहत्काष्ठभारावनम्रविग्रहां ज्योतिर्यशोऽभिधानां वृद्धयोषितमालोक्य विस्मृतधर्मसंज्ञस्तां निहत्य गृहीततत्काष्ठभारः प्रतिनिवृत्त्य द्रुततरगत्या मार्गान्तरेणोपाध्यायमुपसृत्योक्तवान् । उपाध्यायोपाध्याय ! शृणु वल्लभतरच्छात्रस्य चेष्टितम् । स हि त्वदाज्ञां तृणायाप्यमन्यमानः क्वचित् क्रीडाव्याकुलः स्थित्वा चिराह्नं यावत् संप्रत्येवाटवीमटिटीपुरन्तरा वराकीं पन्थकवत्सपालमातरं दारुभाराक्रान्तामालोक्य कृकाटिकामोटनेन मारयित्वा च गृहीततत्काष्ठभार एष आगच्छति । प्राप्तश्चात्रान्तरेऽङ्गर्षिः । ततोऽतिकुपितेनोपाध्यायेन रे पाप ! तत्र गन्तव्यं यत्र मम दृष्टेरगोचर इत्यादिकठोरवचनमुच्चारयता निर्द्धाटितः स्वमन्दिरात् । स च प्रकृतिसौम्यतयाऽध्यापकं प्रत्यमत्सरी निर्गत्य नगरान्नातिदूरवृक्षच्छायोपविष्टश्चिन्तयामास । अहो ! मृगाङ्कमण्डलादङ्गारवर्षणमिवासंभावनीयमेतदजनि । यदयमुपाध्यायः प्रियंवदचूडामणिर्मां प्रत्येवं ज्वलज्ज्वलनज्वालायमाना वाचोऽमुचत् । ततो नूनं भवितव्यमत्र महता ममापराधेन, इत्यात्मानमालोचयति । न च किञ्चिदात्मदुष्कृतमुपलेभे, तथाऽप्यहो ! धिग् मां गुरुजनोद्वेगकारिणमधन्यम् । धन्यास्ते ये सर्वसत्त्वानां प्रीतिमुत्पादयन्तीत्यादिविशुद्धविशुद्धतराध्यवसायहेतून् परिभावयन् समुत्पन्नजातिस्मरणः पूर्वभवाभ्यस्तभावनाभावनतः केवलज्ञानश्रियमाससाद सोऽङ्गर्षिर्महात्मेति । ततस्तन्माहात्म्यरञ्जितैः सन्निहितामरैर्विहितोऽस्य महामहिमा । महता शब्देन चोद्घुष्टं नगरे । भो भो लोकाः !

---

१ 'परान्नं' इत्यपि ॥

महापातकिना रुद्रकेणात्मना वत्सपालजननीं निपात्याङ्गर्षिमहर्षेरभ्याख्यानमदायि, ततो नासौ द्रष्टुमालापयितुं वा योग्यः। इत्यादि श्रुत्वा पश्चात्तापानलदन्दह्यमान उपाध्यायो नागरकलोकेन सहागत्य महर्षि मर्षयाञ्चकार । श्रुत्वा च धर्मं प्रतिबुद्धश्च । रुद्रकोऽपि लोकेन निन्द्यमानोऽजाततीव्रानुतापः परं संवेगमागत्य केवलश्रियमवापेति ॥

तदेवं प्रकृतिसौम्यः प्राणी प्रायेणात्मपरयोरुपकाराय संपद्यते, अतोऽङ्गर्षिवद्धर्माधिकारी स्यादिति ॥ १० ॥

अथ चतुर्थं गुणमधिकृत्याह—

**इहपरलोयविरुद्धं न सेवए दाणविणयसीलड्ढो । लोअप्पिओ जणाणं जणेइ धम्मंमि बहुमाणं ॥११॥**

इहलोकविरुद्धं परलोकविरुद्धं च न सेवते लोकप्रिय इति योगः । तत्रेहलोकविरुद्धं परनिन्दादि । यतोऽवाचि—"सव्वस्स चेव निंदा विसेसओ तह य गुणसमिद्धाणं । उजुधम्मकरणहसणं रीढा जणपूयणिज्जाणं ॥ १ ॥ बहुजणविरुद्धसंगो देसादायारलंघणं तह य । उव्वणभोगो य तहा दाणाइवि पयडमन्ने उ ॥ २ ॥ साहुवसणंमि तोसो सयसामत्थंमि अपडियारो य । एमाइयाणि एत्थं लोगविरुद्धाणि नेयाणि ॥ ३ ॥" परलोकविरुद्धं खरकर्मादि । तद्यथा—"खरकर्मित्वं राज्यं सीरपतित्वं च शुल्कपालत्वम् । विरतिं विनाऽपि सुकृती करोति नैवंप्रकारमयम् ॥ १ ॥" उभयलोकविरुद्धं द्यूतादि । तथा हि—"द्यूतं च मांसं च सुरा च वेश्या पापर्द्धि चौर्यं परदारसेवा । एतानि सप्त व्यसनानि लोके पापाधिके पुंसि सदा भवन्ति ॥ १ ॥ इहैव निन्द्यते शिष्टैर्व्यसनासक्तमानसः । मृतस्तु दुर्गतिं याति गतत्राणो नराधमः ॥ २ ॥" अयमभिप्रायः—एतानि कर्माणि लोकवैमुख्यकारणानि परिहरन्नेव शिष्टजनप्रियो भवति । धर्मस्यापि स एवाधिकारीति । तथा दानं त्यागो विनय उचितप्रतिपत्तिः, शीलं सदाचारपरता, एभिराढ्यः परिपूर्णो यः स लोकप्रियो भवति । उक्तं च—"दानेन सत्त्वानि वशीभवन्ति[1] दानेन वैराण्यपि यान्ति नाशम् । परोऽपि बन्धुत्वमुपैति दानात्तस्माद्धि दानं सततं प्रदेयम् ॥ १ ॥ जेण न किंचिवि कज्जं तस्सवि घरमागयस्स जे सुयणा । नूणं पहट्ठवयणा नियसीसं आसणं दिंति ॥ २ ॥ परिसुद्धसमायारो पावइ किर्त्ति जसं च इह लोए । सव्वजणवल्लहोवि य सुहगइभागी य परलोए ॥ ३ ॥" एतस्य धर्मप्रतिपत्तौ फलमाह—एवंविधो लोकप्रियो 'जनानाम्' असम्यग्दृशामपि 'जनयति' उत्पादयति 'धर्मे' यथावस्थितमुक्तिमार्गे 'बहुमानम्' आन्तरप्रीतिं धर्मप्रतिपत्तिहेतुं बोधिबीजभूतं वा । सुजातवत् । कोऽयं सुजातः ? इति चेदुच्यते—

चम्पायां पुरि मित्रप्रभे राजनि राज्यमनुपालयति सकलश्रेष्ठिश्रेष्ठो धनमित्रनामा श्रेष्ठी बभूव । भार्या चास्य समानरूपगुणा धनश्रीः । तयोश्च जिनधर्माराधनसारं त्रिवर्गसाधनसुखमनुभवतोर्बहोः कालात् जन्मान्तरोपार्जितसुकृतसञ्चयः पुत्रः समुदपादि । तस्य च वर्द्धनकेऽनेकनागरकनार्यः शिरस्यक्षतनिक्षेपं कुर्वाणाः पुत्रक! सुजातो भूया इत्याशिषं प्रददुः। ततः पित्रा 'सुजातः' इत्यभिधानमदायि । अथासौ सितपक्षे शशाङ्क इव कृतसकलकलासंग्रहो यौवनश्रियाऽध्यासितः, समानवयोभिरनेकैर्नागरककुमारकैः परिवेष्टितो यथाभिमतं विजहार । कदाचिद्गीतरागमन्दिरेषु विचित्रस्नात्रसपर्याचर्यवादित्रगीतनृत्यादिविनोदमचीकरत् । कदाचिदाचार्यादिसन्निधौ शुद्धतत्त्वावबोधकारिणीं धर्मकथामाकर्णयत् । कदाचिद्धेतूपपत्तिसारं सारधर्माचारे विचारमाचरत् । कदाचिन्मनोरथातीतदानानन्दितेन दीनानाथकदम्बकेन क्रियमाणं जिन-

१ "वशीभवन्ति" इत्यपि ॥

शासनवर्णवादमश्रृणोत् । ततश्च तेनैवंकुर्वता भूरिभव्यलोको जिनमुनिशुश्रूषापरो व्यधीयत । अन्यदा धर्मघोषमन्त्रिभार्यायाः पियङ्गूनामिकायाश्चेट्यस्तं मित्रमण्डलेन सह विलसन्तमालोकयन्त्यो हृतहृदयाश्चिरं स्थित्वा गृहमागताः। तां बाढमाक्रोशन्तीमेवमूचुः । स्वामिनि ! दृष्टमद्यास्माभिरपूर्वं किञ्चिदाश्चर्यं, तेन व्यामोहिताभिर्विस्मृतप्रयोजनाभिर्न लक्षितो वेलातिक्रमः, अतः क्षमस्वैकमपराधमिति । ततश्च सविशेषं पृच्छन्त्यास्तस्यास्ताभिः कथितम् । अस्तीह धनमित्रश्रेष्ठिसुतः सुजातः। तस्य ललितानि वचनानासगोचराणि विलोकितान्येव सुखमुत्पादयन्ति। किं वा जीवितेन, यदि तस्य स्मितसुन्दरं वदनारविंदं न विलोक्यते। ततः सा प्रियङ्गूस्तद्दर्शनकुतूहलिनी स ममाभ्यर्णमार्गे गच्छन् दर्शनीय इति ताः किंकरीरादिदेश । दृष्ट्वा चान्यदा तं बाढमावर्जितहृदया शेषान्तःपुरिकाणां पुरतः कृतसुजातनेपथ्या नेत्रवक्त्रकरचरणादिक्रियामनुकर्तुमारब्धा । दृष्टा च शनैरागतेन कटकव्यवहितेन मन्त्रिणा सुजात सुजातेत्यालापश्रवणाच्च विचिन्तितमनेन । अहो ! विनष्टमन्तःपुरम् । महाधूर्त्तश्चायं सुजातो गृहमागतोऽवाप्यते । न चाप्राप्तस्य दण्डो विधीयमानः परिणतौ सुखयति, राजादिजनवल्लभत्वादस्य । इत्यादि पर्यालोच्य कूटलेखं लिलेख । तद्वाहकं चाज्ञातपुरुषं शिक्षयित्वा राजान्तिकं निनाय, राज्ञश्च लेखं दर्शयांचकार । तत्र च किल लिखितमिदम्—'भोः सुजात ! त्वयोक्तं दशरात्रमध्ये मित्रप्रभं बद्ध्वा तवार्पयिष्यामि तत्किमद्यापि प्रमाद्यसि ? किलानिवारितप्रचारो भवान् राजमन्दिरः'[1] । इत्यादि लेखार्थमवधार्य राजा कुपितोऽपि न सुजाते संभवतीदमित्यभिधाय मन्त्रिणं विससर्ज चिन्तितवांश्च । यद्यप्ययमेवंविधस्तथाऽपि न प्रकटं दण्ड्यते । यतो न

१ 'सा तेन गृहागमनं' इत्यपि ॥

कोऽप्यस्यापराधं श्रद्धत्ते । विरज्यते च लोको मयीत्युपायान्तरमवधार्य राज्यकार्यचिन्तनव्याजेन देशपर्यन्तवर्त्तिनीमरक्षुरीं नगरीं सुजातं प्रेषयामास । तन्नायकस्य चन्द्रध्वजसामन्तस्य लेखं च ददौ । 'किलायं वणिक् प्रच्छन्नं व्यापादनीयः' इति । चन्द्रध्वजोऽपि सुजातरूपमालोक्य चिन्तितवान् नैवंविधमूर्त्तिनानेन विरुद्धमासेव्यते । तत्किमिदं राज्ञाऽऽदिष्टमिति । भवतु वा किञ्चिन्नाहमेनं द्रुह्यामीत्येकान्ते गत्वा सुजातस्य लेखं दर्शयति स्म, अवादीच्च । यद्यप्येष राजादेशस्तथाऽपि नाहमेवं करोमि, किं तु त्वया मदनुकम्पया प्रच्छन्नमासितव्यमित्यभिधायि । परिणायितः चन्द्रयशोभिधानां किञ्चित्त्वद्दोषरोगभाजं निजभगिनीम् । सोऽपि संसारासारतां भावयंस्तथैव तस्थौ । साऽपि राजपुत्री तत्समीपप्रतिपन्नश्रावकधर्मा तेनैव रोगेणाभिभूता समाधिना विमुक्तकाया सुरलोकं जगाम । ततः सुजातं परमोपकारिणं प्रणिपत्यैवमवादीत् । वद स्वामिन् ! किमिदानीं भवतः संपादयामि ? सुजातः प्राह—यद्यपेतकलङ्कः पितरौ पश्यामि ततः प्रव्रजामीति मे मनोरथस्त्वमापूरयेति । ततो देवश्चम्पाया उपरि महतीं शिलामाधाय नभसि स्थितो राजानमुवाच—यद्भवता कुमन्त्रिलिखितकूटलेखविप्रलब्धेनाकृतापराधो धर्मपुरुषशिरोमणिः सुजातो विनाशितस्तस्य दुर्नयस्य फलमिदानीमनुभूयताम् । एष नयाम्यद्य भवन्तं सपुत्रकलत्रनगरनागरकं यममन्दिरमिति । ततो राजा पश्चात्तापानलदह्यमानमानसः स्वामिन् ! मा मैवमकारुणिको भूः, समादिश कालोचितमित्यभिधाय प्रणतिपूर्वं देवं प्रसादितवान् । सोऽवोचत्—इदानीमपि तं गुरुगौरवपूर्वकं यदि चम्पायां प्रवेशयसि ततोऽस्ति भवतां मोक्षो नान्यथेति । राजा प्रत्याह—महाप्रसादो महाप्रसादः क्व पुनरिदानीं स प्राप्यते ? देवेनोक्तम्—इहैवोद्याने मया नीतस्तिष्ठति । ततः प्रमोदभरनिर्भरेण राज्ञा महाविभूत्या प्रवेशितः । प्रमोदितौ पितरौ । जातो जनानां महानन्दः । प्रभावितो जिनधर्मः । सुजातोऽपि जातवैराग्यप्रकर्षो राजानमनुज्ञाप्य सह पितृभ्यामन्यैश्च भविकलोकैः प्रव्रजितः । सुगतिं स प्राप्तवान् ॥

एवं लोकप्रियो जनानां धर्मबहुमानं जनयति । अन्यैरप्युक्तम्—"युक्तं जनप्रियत्वं शुद्धं तद्धर्मसिद्धिफलदमलम् । धर्मप्रशंसनादेर्बीजाधानादिभावेन ॥ १ ॥" इति गाथार्थः ॥ ११ ॥

अथ पञ्चमो गुणोऽक्रूरस्तं क्रूरस्वरूपप्रतिपादनद्वारेणाह—

**कूरो किलिट्ठभावो सम्मं धम्मं न साहिउं तरइ । इय सो न एत्थ जोगो जोगो पुण होइ अक्कूरो ॥ १२ ॥**

'क्रूरः क्लिष्टभावः' क्रोधादिदूषितपरिणामः 'सम्यग्' अकलङ्कं धर्मं 'न' नैव 'साधयितुं' आराधयितुं 'तरइ' इति शक्नोति । स हि परच्छिद्रावलोकनलम्पटः कलुषमनाः स्वानुष्ठानं कुर्वन्नपि न फलभाग् भवतीति । उक्तं च—"पत्तंपि धम्मरयणं कूरो हारेइ कोहमोहंधो । जह कूलवालनामो समणाभासो गुरुपओसी ॥ १ ॥ तवसुत्तविणयपूया न सङ्किलिट्ठस्स हुंति ताणंति । खमगागमि विणयरया कुंतलदेवी उदाहरणा ॥ २ ॥" 'इति' अस्माद्धेतोरसौ नैवात्र शुद्धधर्मयोग्य उचितः । षष्ठीसप्तम्योरर्थं प्रत्यभेदादस्येति दृश्यम् । योग्यः 'पुनः' एवकारार्थः । ततो योग्योऽक्रूर एवेति योगः । यतः—"नो परलोगो न जिणा न धम्ममो गंडपीलसीलं तु । नत्थट्ठमियावि तहा एमाइ न मन्नई एसो ॥ १ ॥" लघुकर्मत्वात् इति गाथार्थः ॥ १२ ॥

अथ षष्ठगुणस्वरूपमाह—

१ 'धमो नो' इत्यपि । २ 'तत्थट्ठि—' इत्यपि ॥

**इहपरलोगावाए संभावेंतो न वट्टई पावे । बीहइ अयसकलंका तो खलु धम्मारिहो भीरू ॥ १३ ॥**

'इहलोकापायान्' राजनिग्रहादीन्, 'परलोकापायान्' नरकगतिगमनादीन्, 'संभावयन्' मनसा सङ्कल्पयन्, 'न वर्त्तते' न प्रवर्त्तते 'पावे' हिंसाऽनृतादौ । तथा 'बिभेति' उत्त्रसति 'अयशःकलङ्कात्' कुलमालिन्यहेतोः, अतोऽपि कारणात् पापे न प्रवर्त्तत इति योगः । ततः 'खलुः' अवधारणे धर्मार्हः एव पापभीरुर्भवतीति । अयमिह भावार्थः—यः पापकर्मचिकीर्षाभावे युक्तायुक्तमालोचयति, स धर्मोचित इति । उक्तं च—"अणुरायरहसपरिपिल्लियंमि चलियंमि इंदियगामे । ते धन्ना जाणमई जुत्ताजुत्तं वियारेइ ॥ १ ॥ स हि किल—"वहमारणअब्भक्खाणदाणपरधणविलोयणाईणं । सव्वजहन्नो उदओ दसगुणिओ एक्कसिकयाणं ॥ १ ॥" इत्यादिपापफलानि श्रुत्वा सुतरां दुर्गतिहेतून् परित्यजति सुलसवत् ॥ १३ ॥

तथा हि तच्चरितमिदम्—

रायगिहे नगरे कालसूयरिओ नाम सूणाजीवी अहेसि । सो य किर अभवो दिणे दिणे पंच पंच महिससए वावाइयवं । तओ सत्तमपुढवीओवि अब्भहियं पावमज्जियंति । गहिओ चरमकाले महारोगायंकेण । धाउविवज्जया पंचवि इंदियत्थे विवरीए वेएइ । सुरहिसिसिरं विलेवणमसुइउसिणं कद्दमंति मन्नइ । एवं भोयणपाणतूलिमाइसु विभासा । तस्स सुलसो पुत्तो सव्वायरेण पडियारं करावेइ । जाहे सो रइं न लहइ, ताहे सुलसो अभयकुमारं मित्तं पुच्छइ । सो भणइ—भद्द ! जीवघायाओ इमेण घोरं पावकम्ममुवज्जियं, तमिह लोए चेवोइन्नं । तो ठवेहि एयं कंटकसेज्जाए । विलिंपेहि असुइणा ।

१ 'पाप' इति न क्वचित् । २ व्यापादितवान् ॥

पेज्जहि खारतोरविगंधिनीराइं, जेण रइं पाउणंति । सुलसेणावि तहाकएण पत्तपरिओसो कंचि कालं जीविऊण कालगओ गओ सत्तमपुढविं सोयरिओ । ठविओ सयणेहिं सुलसो तस्स पए भणियो य कुणसु जणयववसायं । सोवि जणयाणुभूयं संभरमाणो न तरामि पावफलाणि सोढुंति जंपंतो नेच्छइ । इयरे भणंति—पावं विभागे काऊण गिण्हिस्सामो । तओ तेसिं बोहणत्थं सुलसेण ताडिओ तिण्हकुहाडेण निद्दयं नियपाओ। आरसंतेण य भणिया बंधवाः, भो भो विभायह दुक्खं, गिण्हह थोवं थोवं, जेण मे सुहं भवइ । तेहिं भणियं—वच्छ ! सुट्ठु गिण्हामो जइ अम्हासु संकमइ, किं तु नत्थि उवाओ जेणन्नसंतियं दुक्खमन्नम्मि संकमइ। तो किं भणह तुह्म पावं विभइस्सामोत्ति तेण वुत्ता लद्धनिच्छिया ठिया तुण्हिक्का सयणा। इयरोवि अभयकुमारेण भगवओ समीवे सावगधम्मं गाहिओ। पालिऊण य तं विहिणा पाविओ देवलोगंति ॥१३॥

अथ सप्तमगुणं स्वरूपतः फलतश्चाह—

**असढो परं न वंचइ वीससणिज्जो पसंसणिज्जो य । उज्जमइ भावसारं उचिओ धम्मस्स तेणेसो ॥१४॥**

शठो मायावी, तद्विपरीतः 'अशठः' 'परं' अन्यं 'न वञ्चति' नाभिसन्धत्ते। अत एव 'विश्वसनीयः' प्रत्ययस्थानं भवति । इतरः पुनरवञ्चन्नपि न विश्वासकारणम् । यदुक्तम्—"मायाशीलः पुरुषो यद्यपि न करोति किञ्चिदपराधम् । सर्प इवाविश्वास्यो भवति तथा ह्यात्मदोषहतः ॥ १ ॥" तथा 'प्रशंसनीयः' श्लाघनीयश्च स्यादशठः, इति प्रक्रमः । यतोऽवाचि—"यथा चित्तं तथा वाचो यथा वाचस्तथा क्रिया । धन्यास्ते त्रितये येषां विसंवादो न विद्यते ॥ १ ॥" तथा 'उद्यच्छति' प्रयतते धर्मानुष्ठान इति गम्यते । 'भावसारं' सद्भावसुन्दरम्, न पुनः पररञ्जनाय कूटक्षपकवत् । उक्तं च—"जोवि य पाडेऊणं मायामोसेहिं खाइमुद्धजणं । तिग्गाममज्झवासी सो सोयइ कवडखमउव्व ॥ १ ॥" 'उचितः' पात्रं 'धर्मस्य' उक्तान्वर्थस्य 'तेन' हेतुना 'एषः' अशठः । स्वार्थप्रवृत्तित्वात्तथाविधश्चातिदुर्लभः । यतोऽवाचि—"भूयांसो भूरिलोकस्य चमत्कारकरा नराः । रञ्जयन्ति स्वचित्तं ये भूतले ते तु पञ्चषाः ॥ १ ॥" इति गाथार्थः ॥ १४ ॥

अथाष्टमगुणगणान् व्यावर्णयन्नाह—

**उवयरइ सुदक्खिन्नो परेसिमुज्झिय सकज्जवावारो । तो होइ गज्झवक्को णुवत्तणीओ य सव्वस्स ॥१५॥**

'उपकरोति' उपकाराय प्रवर्त्तते, अभ्यर्थितसारतया । 'सुदाक्षिण्यः' शोभनदाक्षिण्यवान्। कोऽर्थः ? यदिहपरलोकोपकारिप्रयोजनं तस्मिन्नेव दाक्षिण्यवान्, न पुनः पापहेताविति । सुशब्देन दाक्षिण्यं विशेषितम् । 'परेषां' अन्येषाम् । कथम् ? इत्याह—'उज्झितस्वकार्यव्यापारः' परित्यक्तात्मप्रयोजनप्रवृत्तिः, 'ततः' कारणात् भवति 'ग्राह्यवाक्यः' अनुलङ्घनीयादेशः । तथा 'अनुवर्त्तनीयश्च' अभीष्टचेष्टितश्च 'सर्वस्य' धार्मिकलोकस्येति हृदयम् । स हि दाक्षिण्यगुणेनाकामोऽपि धर्ममासेवते । क्षुल्लककुमारवत्—

किर सागेए नयरे पुंडरीओ नाम राया । कंडरीओ से भाया जुवराया य । तस्स य रूवोहामिय सुरंगणा जसभद्दा भारिया। सा कयाइ कयसिंगारा निज्झाइया नरनाहेण। कुसमसरवेयणाविहुरियहियएण पत्थिया य दो तिन्नि वाराओ नेच्छइ भणइ य । कहं भाउणोवि न लज्जसि ? तओ न एयंमि जीवंते एसा ममं इच्छइत्ति छिद्दं लहिऊण घाइओणेण कंडरीओ। तओ विन्नायपरमत्था नत्थि एयस्स अकरणिज्जंति सीलभंगभीया पलाणा जसभद्दा । कहाणयविसेसेण पत्ता सावत्थिं । दट्ठूण वियारभूमिनियंताओ साहुणीओ लग्गा पिट्ठओ पत्ता तदुवस्सयं । पडिया पाएसु कित्तिमइमयहरियाए । धम्मलाभपुव्वमासासिया तीए । एईएवि रुयंतीए नियवुत्तंतं निवेइऊण मग्गिया पवज्जा । उचियत्ति पव्वाविया विहिणा । पालिया पवज्जा । नवरं पच्छन्नो गब्भो मे न पव्वावेहित्ति मयहरिगाए पुव्विं न सिट्ठो सो पइदिणं पवड्ढिओ । पुच्छियाए य साहियो सब्भावो । मयहरियाएवि सिट्ठं सेज्जायरीए । तीएवि माइपिइभूयाए पच्छन्नं पडिजागरियाए जाओ से दारओ सलक्खणोत्ति परिवालिओ अट्ठवासो । तओ पव्वाविओ अजियसेणसूरिणा । कयं से नामं खुड्डगकुमारोत्ति । परिवालियदुवालसवासमसामन्नपरियाओ कयाइ वसंतसमए दट्ठूण तरुणवग्गं विविहकीलाहिं कीलंतं पडिभग्गो संजमाओ। तओ अट्ठवसट्टेण साहिओ सब्भावो संघाडइल्लस्स । तेणावि अणुसासिओ जाहे न बुज्झइ, ताहे निवेइयं जणणीए । तीएवि बहुविहमणुसासिऊण जाहे न बुज्झइ, तओ वुत्तो पुत्त ! दुवालसवासाणि सइच्छाए तए सामन्नमणुचिन्नमियाणिं महवयणेय तत्तियं पालेसु । तओ दक्खिन्नसारयाए ठिओ तत्तियं कालं । तयंते पुच्छिया जणणी भणइ—मम जणणिभूयं पवत्तिणिं पुच्छाहि । पुच्छियाए तीएवि असुहस्स कालहरणंति काऊण पडिच्छाविओ दुवालसवासाणि । एवं आयरिएण उवज्झाएणावि धारिओवि जाहे न चिट्ठइ ताहे अहो! दारुणो कम्मपरिणामोत्ति भावयंतेहिं तेहिं सव्वेहिं उवेहिओ । नवरं पुत्तसिणेहमोहियाए जणणीए चिररक्खियं मुद्दारयणं कंवलरयणं च समप्पिऊण भणिओ, सागेए तुह चुल्लपिया पुंडरीओ राया, तस्स एयाइं दंसेज्जासि जेण परिन्नायमुद्दारयणो तुह रज्जभायं देइत्ति पडिवज्जिऊण गहियवेसो चेव पत्तो सागेयं । आवा-

१ 'भणियं' इत्यपि ॥

सिओ रायभवणेगदेसे। तक्कालं च रायभवणंगणे पवत्तं महापेच्छणयं। मिलिओ पहाणलोगो। अहंपि चिरकालाओ अज्ज पेच्छणयदंसणसुहमणुहवामित्ति काउं पत्तो खुड्डगकुमारोवि। जायमारूढरंगभरं महापेच्छणयं जाव य किंचि सावसेसा जामिणी न य पारिओसियं पडइत्ति आलस्सेण निद्दाइया नट्टिया। तओ मा रंगभंगो होउत्ति तीए वोहणत्थमुग्गीयं मयहरिगाए—"सुट्ठु गाइअं सुट्ठु वाइअं सुट्ठु नच्चियं सामसुंदरि! अणुपालियदीहराइयाओ सुमिणंते मा पमायए"। तं च सोऊण पडिबुद्धेण पक्खित्तं कंवलरयणं चेल्लएण, जुवराएण जसभद्देण कुंडलं, सिरिकंताए सत्थवाहीए हारो, जयसंधिमंतिणा कंकणं, कन्नपालमहामिंठेण रयणंकुसो। पंचवि एयाणि लक्खमोल्लाणि निवडिएसु रायाइपसाएसु जाओ नट्टियाए महालाभो। पभाए पुट्ठो रन्ना चेल्लगो कीस तुमं तुट्ठोसि। तेणावि साहिओ स वुत्तंतो जाव रज्जत्थी समागओम्हि। दंसियं मुद्दारयणं। रन्ना भणियं ता गिण्हाहि हियइच्छियं मंडलं। चेल्लएण भणियं—अलं रज्जेण, सुविणयमेत्तंमि जीवियम्मि संजममेवाणुपालिस्सामित्ति। जसभद्देण सिट्ठं अहंपि, वुड्ढो राया ता रज्जं गिण्हामित्ति चिंतंतो एयाए विवोहिओम्हि। सिरिकंताए वुत्तं अहं चिरपवसियस्स सत्थवायस्स ता पुरिसंतरमन्निसामित्ति वियप्पंतीएयाए विवोहियम्हि। मंतिणावि निवेइयमहमन्नेण राइणा पलोभिओ किं नियसामियं घाएमि न वत्ति? चिंताउलो एयाए संवोहिओम्हि। कन्नपालेणवि कहियं—अहममुगेण वेरिनरिंदेण वहुदव्वं दाऊण पट्टहत्थिं मग्गिओ माराविओ वा किं कायव्वमूढो एयाए वेयाविओम्हित्ति। तओ राइणा अच्छलं तुम्हाणं सव्वेसिं करेह हियइच्छियाइंति वुत्तेहिं सुदेसणासवणपडिवुद्धेहिं गहिया सव्वेहिं खुड्डगकुमारसमीवे पवज्जा। तेहिं सहिओ समागओ गुरुसमीवं खुड्डगकुमारो। कुलाणुरूवमेयंति पसंसिओ गुरुहिं। जाओ सकज्जसाहगोत्ति। एवमेएण संजमो दक्खिन्नगुणेण चिरमणुपालिओ परिणामसुहावहो य संवुत्तोत्ति॥ १५ ॥

अथ नवमं गुणमाश्रित्याह—

लज्जालुओ अकज्जं वज्जइ दूरेण जेण तणुयंपि। आयरइ सयायारं न मुयइ अंगीकयं कहवि ॥ १६ ॥

'लज्जालुओ' इति प्राकृतशैल्या लज्जावान् 'अकार्यं' कुत्सितकृत्यं, नञः कुत्सार्थत्वात् 'वर्जयति' परिहरति 'दूरेण' विप्रकर्षेण 'येन' हेतुना तेन धर्माधिकारीति प्रकृतेन योगः। 'तनुकमपि' स्तोकमपि। उक्तं च—"अवि गिरिवरगरुयदुरंतदुक्खभारेण जंति पंचत्तं। न उणो कुणंति कम्मं सप्पुरिसा जं न कायव्वं ॥ १ ॥" 'आचरति' अनुतिष्ठति 'सदाचारं' शोभनव्यवहारं, तस्यालज्जाहेतुत्वात्। तथा 'न' नैव 'मुञ्चति, उज्झति 'अङ्गीकृतं' आरब्धं धर्ममिति गम्यते। 'कथमपि' स्नेहबलाभियोगादिनापि प्रकारेणेति लज्जाहेतुत्वादारब्धपरित्यागस्य। तथा चाह—"दूरे ता अन्नजणो अंगे च्चिय जाइं पंचभूयाइं। तेसिं चिय लज्जिज्जइ पारद्धं परिहरंतेहिं ॥ १ ॥" प्रायः सुकुलोत्पन्न एवंविधो भवति। इति गाथार्थः॥१६॥

इहोदाहरणम्—

एगंमि नयरे चंडरुद्दो नामायरिओ विहरइ। सो य किर संजलणसीलो पए पए साहूणं रुसइत्ति कोहोदयभीरू भिन्नोवस्सए ज्झाणकोट्ठोवगओ चिट्ठइ। अन्नया एगो सेट्ठिपुत्तो नवपरिणीयनेवच्छो केलिकिलवयंसपरिगओ तमुज्जाणमागओ। तओ परिहासवंदणेण वंदिऊण साहुणो वुत्ता तंमित्तेहिं। भयवं! एस अम्ह वयंसो कुरुवकन्नयालाभाओ वेरग्गिओ तुम्ह समीवे पव्वइउमागओ। तओ केलिकिला एएत्ति न दिंति साहुणो तेसिमुत्तरं। जाहे दोच्चंपि तच्चंपि कोलाहलेन सज्झायविग्घं करिंति ताहे साहूहिं भणिया—जइ एवं गच्छह इह नाइदूरे अम्ह गुरू पव्वावेही। गंतूण गुरुसमीवे तहेव भणिउमारद्धा। तओ ज्झाणवाघायकुविएण भणियं सूरिणा जइ सच्चमेयं ता सिग्घमागच्छ हसंतो समागओ दारओ। खेलमलयभूईए लुंचिउं पवत्ता सूरिणो। ताहे ते वयंसा ससज्झसा मा मा भयवं! एवं करेहि, परिहासो एस अम्हेहिं कओत्ति जाव जंपंति ताव लहुहत्थयाए दरलुंचिओ एस चिंतिउं पवत्तो। लज्जिज्ज इदाणिं दरदिक्खिएहिं परिभमंतेहिं ता संपयं पारद्धनिव्वाहणमेव सेयं। जओ—"अलसायंतेणवि सज्जणेण जे अक्खरा समुल्लविया। ते पत्थरटंकुक्कीरियव्व न हु अन्नहा होंति ॥ १ ॥" एवं भाविऊण भणियं—भयवं! मा एएसिं सुणेहि। अहं तुमं च एत्थ पमाणंति। परियाणियपरिणामेन पव्वाविओ गुरुणा। उवालंभभीया पलाणा इयरे। चेल्लओवि पहट्ठमुहपंकओ वंदिऊण गुरुं भणिउमारद्धो। दमगभावं मोयाविऊण ठाविओहं भदंतेहिं चक्कवट्टित्तिंपए। किं तु पभाए पभूयसयणा मं इओ वाविस्संति, ता करेह पसायं रयणीए देसंतरगमणेण। आयरिएहिं भणियं—अहं रत्तीए न पेच्छामि ता पेहेहि मग्गं जेण सुहेण वच्चामो। आगओ सोहिऊण खुड्डगो। पत्थिया दोवि। अन्नायनिसाचरो गुरू पए पए पक्खलंतो, एरिसो मग्गो सोहिओत्ति भणंतो सीसं सीसे दंडेण ताडेइ। तेणावि एस महप्पा मए संतावे पाडिओत्ति संविग्गेणारोविओ पिट्ठीए। तहावि अंधयारदोसेण परिक्खलंतं तमायरिया पुणो पुणो तार्डेति भणंति य। अरे दुट्ठसेह! एरिसो मग्गो विसोहिओ। सोवि अहो! मे अहन्नया जमेस महप्पा एरिसवसणमुवणीओ। पभाए विस्सामणाइणा तहाजइस्सं, जहा संतावविरहिओ सुहभायणं भविस्सइत्ति

१ "चिर-" इत्यपि ॥

भाविंतो सुज्झाणं पाविऊणापुव्वकरणखवगसेढिकमेण केवली संवुत्तो । सुहं सुहेण य गंतुं पवत्तो । ताहे आयरिया विम्हिया उवसंतकोवा य पुच्छंति । अज्जो ! कीस संपयं न खलसि ? । तेण भन्नइ, जेण सुट्ठु पेच्छामि वत्तिणीं । सूरीहिं भणियं, चक्खुणा नाणेण वा ? । सो वेइ नाणेणं । केरिसेण छाउमत्थिएण केवलिएण वा ? । भयवं ! केवलिएणंति तव्वयणमायन्निऊणाउट्टा सूरिणो केवली आसाइओत्ति अप्पाणं निंदिउं पवत्ता । एत्थंतरे पहाया रयणी, दिट्ठा य केसुलुंचएण कोमले तस्स मत्थए रुहिरारुणा दंडपहारवणा । आयरिएहिं विचिंतियं च । धिरत्थु मे पंडिच्चस्स, धिरत्थु मे वयपरिणामस्स, धिरत्थु मे दीहरसमणभावस्स, जेण मए एस कोहपिसाओ न वसीकओ । पेच्छ एएणाज्जदिणदिक्खिएणावि विढत्तपरमोवसमेण सकज्जमाराहियंति । एवं महावेरग्गमग्गलग्गा सूरिणोवि केवलमुप्पाडिऊण कमेण पाविया नेव्वुइपुरंति । एवं लज्जालुणा चंडरुद्दसूरिसीसेण सामन्नमासाइयमाराहियं चेति ॥

अथ दशमं दयालुत्वगुणमाह—

**मूलं धम्मस्स दया तयणुगयं सव्वमेवणुट्ठाणं । सिद्धं जिणिंदसमए मग्गिज्जइ तेणिह दयालू ॥ १७ ॥**

'मूलं' आद्यकारणं 'धर्मस्य' उक्तनिरुक्तस्य 'दया' प्राणिरक्षा । यतोऽस्या एव रक्षार्थं शेषव्रतानि । तथा चाऽवाचि—"अहिंसैव मता मुख्या स्वर्गमोक्षप्रसाधिनी । अस्याः संरक्षणार्थं च न्याय्यं सत्यादिपालनम् ॥ १ ॥" तथा—"नत्ते मृदं यथा कुम्भो नत्ते बीजं यथाङ्कुरः । निर्मालिन्यस्तथा धर्मो नत्ते स्याज्जीवरक्षणम् ॥ १ ॥ " 'तदनुगतं' तत्सहभावि 'सर्वमेव' विहाराहारतपोवैयावृत्त्यादिसदनुष्ठानं 'सिद्धं' प्रतीतं 'जिनेन्द्रसमये' पारगतागमे । उक्तं च—"न सा दीक्षा न सा भिक्षा न तज्ज्ञानं न तत्तपः । न तद्दानं न तद्ध्यानं दया यत्र न विद्यते ॥ १ ॥ " 'मृग्यते' अन्विष्यते 'तेन' कारणेन 'इह' धर्माधिकारप्रस्तावे 'दयालुः' दयाशीलः । इदमत्र तात्पर्यम्—यः स्वत एव दयालुः स सुखेनेर्यासमितिप्रत्युपेक्षणादौ प्रवर्त्तते, अतो धर्मयोग्यो भवति धर्मरुचिवत् । श्रूयते चागमे—

कश्चित् कुलपुत्रकः परलोकभीरुर्गृहवासमारम्भबहुलमवधार्य तापसानां मध्ये प्रव्रजितः । तानपि कन्दमूलोत्पाटनाद्यारम्भप्रवृत्तानवलोक्य सविषादो जज्ञे । यतस्तेऽपि किल चतुर्दश्यादितिथिष्वनाकुट्टिमाघोषयन्ति स्वकीयाश्रमे । ततो न कोऽपि तस्मिन् दिने पुष्पफलकन्दानयनाय वनं प्रति गच्छति । सोऽपि धर्मरुचिस्तदेकं दिनं बहुमन्यमानोऽहो ! सुन्दरं भवति, यदि सर्वदेयमनाकुट्टिरुद्घुष्यतेति चिन्तयन्नासाञ्चक्रे । कदाचिदासन्नमार्गे साधू व्रजन्तावालोक्य भद्रकतया तावपृच्छत् भो तपोधनौ ! किमरण्यं प्रति प्रस्थितौ युवाम् ? किं भवतां धर्मेऽद्यानाकुट्टिर्न विधीयते ? । तमृजुशीलमालोक्य साधू प्रत्यूचतुः । तापसकुमार ! अस्माकं धर्मे सर्वदाऽनाकुट्टिरेव । यतो वयं न कदाचनापि सचेतनां पृथ्वीमुपमर्दयामः । न सचेतनं वारि व्यापारयामः । नाप्यनेकसत्त्वव्यापत्तिहेतुवैश्वानरमुद्दीपयामः । न चापि तृणलताप्रवालपुष्पफलकन्दादिवनस्पतीन् संघट्टयामः, उत्पाटयामो, भुञ्ज्महे वा । अतोऽस्माकं धर्मे सर्वदाऽनाकुट्टिरेवेति । श्रुत्वेदं दयाशीलतया ताभ्यामेव सह गत्वा गुरोरात्मानं निवेद्य प्रव्रजितः सुप्रव्रजितश्च बभूव धर्मरुचिरिति ॥ १७ ॥

इदानीमेकादशं गुणमाह—

१ "कुव्य" इत्यपि ॥

**मज्झत्थसोमदिट्ठी धम्मवियारं जहट्ठियं मुणइ । कुणइ गुणसंपओगं दोसे दूरं परिच्चयइ ॥ १८ ॥**

मध्यस्था क्वचिद्दर्शने पक्षपातविकला सौम्या च प्रद्वेषाभावाद्दृष्टिर्दर्शनं यस्य स 'मध्यस्थसौम्यदृष्टिः' सर्वत्रारक्तद्विष्ट इत्यर्थः । 'धर्मविचारं' नानापापण्डमण्डलीमण्डपोपनिहितधर्मपण्यस्वरूपं 'यथावस्थितं' सगुणनिर्गुणाल्पबहुगुणतया व्यवस्थितं कनकपरीक्षानिपुणविशिष्टकनकार्थिपुरुषवत् 'मुणति' बुध्यते, अत एव 'करोति' विदधाति 'गुणसंप्रयोगं' गुणैः ज्ञानादिभिः सह संबन्धं 'दोषान्' गुणप्रतिपक्षभूतान् 'दूरं' इति दूरेण 'परित्यजति' परिहरति सोमवसुब्राह्मणवत्—

तेण किर दुब्भिक्खे कुडुंबं निव्वाहिउं सुद्दपरिग्गहो गहिओ । न य तं जीवियंति वेरग्गगओ सुद्धिनिमित्तं पत्थिओ पाडलिपुत्तं । अंतरा य बंभणसुन्हमप्पं तप्पाइयं बंभणनिवारियग्गिदाहं दट्ठूण मरणंपि अविहिणा न सुंदरंति भावेंतो पत्तो एगं सन्निवेसं । पविट्ठो एगस्स अवत्तलिंगिणो मढियाए । सोवि चरियाकालो वट्टइ । अतिही य तुमंति चिट्ठ मढीयाए वोत्तूण पविट्ठो गामं । खणंतरे विउलगहियभत्तो पत्तो य । भुत्तं पज्जत्तं दुवेहिंपि । पत्थावे पुच्छिओ सोमवसुणा केरिसो तुम्ह धम्मो ? किं वा एत्थ तत्तंति ? । तेण भणियं, भद्द ! एगस्स गुरुणो अम्हे दो सीसा आसि । अचिरदिक्खियाणमम्हाण परोक्खीभूओ गुरू । उवइट्ठं च तेण अम्हाणं 'सुहं सोयव्वं, मिट्ठं भुंजेयव्वं, लोयप्पिओ अप्पा कायव्वो' । न य एयस्स अत्थो कहिओ । तओ अहं सबुद्धीए इह गामे चिट्ठामि । मंतोसहाईहिं लोगस्सुवगारं करेमि । अओ चेव लोयप्पिओ भोयणं च मिट्ठं पावेमि । एसा य मज्झ सेज्जा तओहं सुहं सुवामि । एत्तियं तत्तं मए नायं । परमत्थं पुण गुरुणो जाणंति । तओ चिंतियं सोमवसुणा सोहणो गुरुवएसो, न पुण एस परमत्थो । भणियं च कहिं पुण ते गुरु-

भाया। सिट्ठमियरेण अमुगत्थगामे चिट्ठति। दुइयदिवसे तत्थेव गओ सोमवसू, मिलिओ तस्स। तेणावि कयमुचियं भणियं च भोयणावसरे एहि मए सद्धिं चलिया दोवि। पविसंतो गामे भणिओ एगेण अवत्तलिंगीएहिं मम गेहे पालि खेडसु। तेण भणिअं एस पाहुणगो। एही तओ एसोवि, तुमंपि एहत्ति भणंतेण तेण नीया दोवि गिहं। कयं चलणसोयाइयं। भुत्ता दोवि सव्वकामगुणियमाहारं। गया सट्ठाणं। पुच्छिओ वंभणेण सो समायारं। तेणावि कहियपुव्ववुत्तं। तेण भणियं महमेगंतरियं भुंजामि तओ मिट्ठं होइ। ज्झाणज्झयणपरिसंतो जत्थ व तत्थ व सुहं सुवामि। नीरीहचित्तोत्ति पिओ सव्वलोयस्स। एवं गुरुवयणमाराहेमि। तओ सोमवसू सोहणतरो एस, किं तु गंभीरो गुरूवएसो न नज्जइ सब्भावोत्ति भावेंतो पत्तो पाडलिपुत्तं। तत्थ किर पसिद्धो तिलोयणनामो पंडिओत्ति गओ तस्स गेहं। पविसंतो अगवसरोत्ति पडिच्छाविओ दोवारिएण। ताव य गहियकुसुमदंतवणो समागओ पुप्फवडुगो। सो पुण मग्गिज्जंतोवि दंतवणमदाऊण पविट्ठो अब्भंतरं। खणंतरे निग्गंतूण सव्वस्स दाउमारद्धो। किमेस पुव्विंमदिंतो? किमियाणिं देइत्ति पुच्छिए सोमवसुणा सिट्ठं दोवारिएणं। पढमं पहुणो दिन्ने गोरवं होइ इयरहा अवन्ना। तदुवरियं सेसाणं सेसा चेव भवइ। एत्थंतरे तदासन्नगिहे दो पुरिसा आयमणं मग्गंति। दिन्नमेगस्स एगाए तरुणीए तं चेलुगाए, वीयस्स दीहदंडएण उलंकएण। तत्थवि पुट्ठेण कारणं सिट्ठं दोवारिएण। पढमो एयाए भत्ता, वीओ परपुरिसो, अओ एयस्स एवं चेव दाउमुचियंति। अहो! नीइमत्तो परिवारोवि पंडियस्सत्ति चिंतिरस्स भट्टस्स समागया गहिरतूररवा, पूरियदियंतरा, पढंतभूरिभट्टचट्टा, सिवियारूढा, दुवारासन्नमेगा तरुणी। पुच्छियं सोमवसुणा, का एसा? किमेवमागच्छइत्ति। तेण भणियं एसा पंडियधूया, राउले पायपूरणेण पत्तसंमाणा सगिहमागच्छइ। कहंति सुण राइणा पाओलंविओ—"तेन शुद्धेन शुद्ध्यति" तओ इमीए पूरिओ अ—"यत्सर्वव्यापकं चित्तं मलिनं दोषरेणुभिः। सद्विवेकाम्बुसंपर्कात्तेन शुद्धेन शुद्ध्यति ॥ १ ॥" ताव य पविट्ठा गिहमेसा। समाइच्छिया जणएण, परियणेण य। अहो! परियणोवि इमस्स पंडिओत्ति विम्हिओ लद्धावसरो गओ सभागयस्स पंडियस्स पासं। कयाभिवायणो पत्तस्संमाणो निविट्ठो उचियासणे। एत्थंतरे गुरुजाया मए सुविणे भुत्ता ता करेहि मे विसोहिंति विन्नत्तो केण य वडुएणं तिलोयणो। तत्तलोहनारिअवरुंडणाओ ते सुद्धित्ति वुत्ते अब्भुवगयं वडुगेण। कया अग्गिवन्ना लोहनारी। तमालिंगतो सो गहिओ पुव्वनिउत्तपुरिसेहिं। सुद्धो सुद्धोत्ति पडिया ताला। ताव सोमवसुणावि सवुत्तंतनिवेयणपुव्वमग्गियं पच्छित्तं। परिभाविऊण गहियाणेण दो मट्टियागोलगा उल्लो सुक्को य। पक्खित्ता कुडे उल्लो विलग्गो तत्थ न इयरो। तओ भणिओ सोमवसू, भट्ट! सुक्कगोलगसमो तुममओ सुद्धो चेव। पुणो भणियं सोमवसुणा वयगहणं काउमिच्छामि, केरिसस्स गुरुणो समीवे करेमि?। भणियं पंडिएण, जो 'सुहं सोयव्वं, मिट्ठं भुंजियव्वं, लोयप्पिओ अप्पा कायव्वो' त्ति एएसिं तिण्हं पयाणमत्थं वुज्झइ, पालेइ य, निप्पिहो य सव्वहा, तस्स समीवे पव्वयाहि। सोमवसुणा भणियं, को पुण एएसिं पयाणमत्थो?। पंडिएण भणियं, जो रागदोसविरहिओ परिचत्तारंभपरिग्गहो सुहज्झाणोवगओ सुयइ सो सुहं सुवइ। जो महुयरवित्तीए अकयमकारियं मुहालद्धं सव्वपाणिपीडापरिहारेणारत्तदुट्ठो

१ 'पुच्छिओ" इत्यपि। २ 'तदासन्नि' इत्यपि। ३ 'वालुगाए' इत्यपि। ४ "चिंतितस्स" इत्यपि ॥

१ क्वचित् "अ" नास्ति ॥

भुंजइ सो परिणामसुंदरंति मिट्ठं भुंजइ। जो मंतमूलोसहाइयउवयारमकरिंतो परलोयाणुट्ठाणसारयाए सव्वलोयाण वल्लहो होइ सो लोयप्पिओत्ति वुच्चइ। निरीहो जो भत्ताणुरत्तलोयाओ न धणधन्नहिरन्नसुवन्नाइ समीहइत्ति। एवमवहारियभावत्थो चलिओ गुरुमन्निसिउं माहणो। मिलिओ एगत्थ उज्जाणे सुघोसगुरुणं। वंदिऊण पुच्छिओ पुव्वभणियपयाणमत्थं। साहिओ जहुत्तो गुरूहिं। निरीहत्तजाणणत्थं चिट्ठिओ तत्थेव रत्तिं। दिट्ठमावस्सयाइकिच्चं साहूणं। जाव सज्झायं काऊण पसुत्ता साहुणो। आयरिया य वेसमणोववायमज्झयणं परियट्टिउं पवत्ता। तप्पभावेण य समागओ वेसमणसुरो। ट्ठिओ निसुणंतो। परिसमत्ते तंमि अहो! सुसज्झाइयं सुसज्झाइयं भणंतो पडिओ गुरुचलणेसु। विन्नविउं पवत्तो, भयवं! तुट्ठोहं तुम्हाणं, वरेह वरं, हिरन्नं वा, सुवन्नं वा, दुपयं वा, चउप्पयं वा जं भे रोयइ तं सव्वं संपाएमि। आयरिएहिं भणियं धम्मलाभो ते भवउ न केणावि किंचणे पओयणंति। ताहे अहो! भे सुलद्धं जम्म जीवियंति जंपंतो उज्जोइयदिसामंडलो वंदिऊण गुरुं गओ सट्ठाणं सुरवरो। सोमवसूवि अहो! निरीहत्तंति परितुट्ठमणो साहियसब्भावो पव्वाविओ गुरूहिं। जाओ संजमाराहगो। एयारिसो मज्झत्थो धम्मारिहोत्ति ॥ १८ ॥

अथ द्वादशं गुणरागिणं स्वरूपफलोपदर्शनद्वारेणाह—

**गुणरागी गुणवंते वहु मन्नइ निग्गुणे उवेहेइ। गुणसंगहे पवत्तइ संपत्तगुणं न मयलेइ ॥ १९ ॥**

गुणेषु धार्मिकलोकभाविषु रज्यत्येवंशीलो 'गुणरागी'। 'गुणवन्तः' गुरुगुणभाजो यतिश्रावकादीन् 'वहु मन्यते' मनःप्रीतिभाजनं करोति। अहो! धन्या एते, सुलब्धमेतेषां नरजन्मेत्यादि। ~~~ निर्गुणान्निन्दतीत्यापन्नम्। यथा देवदत्तो

दक्षिणेन चक्षुषा पश्यतीत्युक्ते वामेन न पश्यतीत्यवसीयते । तथा चाहुरेके—"शत्रोरपि गुणा ग्राह्या दोषा वाच्या गुरोरपि" इति चेन्नैतदेवं धार्मिकोचितमित्याह—'निर्गुणानुपेक्षते' असंक्लिष्टचित्ततया तेषामपि निन्दां न करोति । यतः स एवमालोचयति—"सन्तोऽप्यसन्तोऽपि परस्य दोषा नोक्ताः श्रुता वा गुणमावहन्ति । वैराणि वक्तुः परिवर्द्धयन्ति श्रोतुश्च तन्वन्ति परां कुबुद्धिम् ॥ १ ॥" तथा—"कालंमि अणाईए अणाइदोसेहि वासिए जीवे । जं पाविज्जइ गुणोवि हु तं मन्नेहं महच्छरियं ॥१॥ भूरिगुणा विरल च्चिय एक्कगुणो वहुजणो न सवत्थ । निद्दोसाणवि भद्दं पसंसिमो थेवदोसेवि ॥२॥" इत्यादि संसारस्वरूपमालोचयन्नसौ निर्गुणानपि न निन्दति, किं तूपेक्षते मध्यस्थभावेनास्त इत्यर्थः । तथा गुणानां संग्रहे समुपादाने 'प्रवर्त्तते' यतते । संप्राप्तमङ्गीकृतं गुणं सम्यग्दर्शनविरत्यादिकं 'न मलिनयति' न सातिचारं करोति । गुणरागित्वस्य फलमेतत् । अन्यथा गुणरागित्वमेव न स्यात् । इति गाथार्थः ॥ १९ ॥

उदाहरणे चात्र धनसार्थवाहवङ्कचूडौ । तथा हि—

घासातवसुसियंगे सज्झायज्झाणवावडे मुणिणो । दट्ठुं गुणाणुराया आउट्टो सत्थवाहो सो ॥ १ ॥

गुरुभत्तिनिब्भरमणो दाणं दाऊण पत्तसंमत्तो । जाओ कमेण धन्नो कल्लाणपरंपराभागी ॥ २ ॥

तहा—

जाओ गुणाणुराओ पुव्वमसंतोवि वंकचूलस्स । पेच्छंतयस्स अणवरयमेव मुणिणो गुणाउत्ते ॥ १ ॥

१ "विरला च्चिय" इत्यपि ॥

तत्तो वहुमाणाओ नियमग्गहणं च पालणं थिरया । पडिवन्नगुणा न हि तेण खंडिया पाणचाएवि ॥ २ ॥

उदाहरणद्वयमपि प्रतीतमिति न लिख्यते ।

अथ त्रयोदशधर्माधिकारिगुणस्यावसरः, स च सत्कथ इति विपर्यये दोषदर्शनद्वारेण तमाह—

**नासइ विवेगरयणं असुहकहासंगकलुसियमणस्स । धम्मो विवेगसारोत्ति सक्कहो होज धम्मत्थी ॥२०॥**

'नश्यति' अपैति 'विवेकरत्नं' विवेकः सदसद्वस्तुपरिज्ञानं, स एव रत्नमज्ञानध्वान्तान्तकारित्वात् । अशुभकथाः स्त्र्यादिकथाः सप्त । तथा चागमः—"सत्त विगहाओ पन्नत्ताओ तंजहा—इत्थिकहा, भत्तकहा, देसकहा, रायकहा, मिउकालुणिया, दंसणभेयणी, चरित्तभेयणी" । तत्राद्याश्चतस्रः प्रसिद्धा एव, तथाऽपि किञ्चिदुद्दिश्यते । तत्र स्त्रीकथा—"सा तन्वी सुभगा मनोहररुचिः कान्तेक्षणा भोगिनी, तस्या हारिनितम्बबिम्बमथवा विप्रेक्षितं सुभ्रुवः । धिक् तामुष्ट्रगतिं मलीमसतनुं काकस्वरां दुर्भगामित्थं स्त्रीजनवर्णनिन्दनकथा दूरेऽस्तु धर्मार्थिनाम् ॥१॥" भक्तकथा—"अहो ! क्षीरस्यान्नं मधुरमधुगावाज्यखण्डान्वितं चेद्रसः श्रेष्ठो दध्नो मुखसुखकरं व्यञ्जनेभ्यः किमन्यत् । न पक्वान्नादन्यद्रमयति मनः स्वादुतांवूलमेकं परित्याज्या प्राज्ञैरशनविषया सर्वदैवेति वार्त्ता ॥ २ ॥" देशकथा—"रम्यो मालवकः सुधान्यकनकः कांच्यास्तु किं वर्ण्यता, दुर्गा गूर्जरभूमिरुद्भटभटा लाटाः किराटोपमाः । कश्मीरे वरमुष्यतां सुखनिधौ स्वर्गोपमाः कुन्तलाः, वर्ज्या दुर्जनसङ्गवच्छुभधिया दैशी कथैवंविधा ॥ ३ ॥" राजकथा—"राजायं रिपुवारदारणसहः क्षेमंकरश्चौरहा, युद्धं भीममभूत्तयोः प्रतिकृतं साध्वस्य तेनाधुना । दुष्टोऽयं म्रियतां करोतु सुचिरं राज्यं ममाप्यायुषा, भूयो वन्धनिवन्धनं बुधजनै राज्ञां कथा हीयताम् ॥ ४ ॥" तथा 'मिउकालुणिया' इति श्रोतृहृदयमार्दवजननान्मृद्वी, सा चासौ कारुणिकी च कारुण्यवती मृदुकारुणिकी । पुत्रादिवियोगदुःखदुःखितमात्रादिकृतकारुण्यरसगर्भा प्रलापप्रधानेत्यर्थः । तद्यथा—"हा पुत्त ! हा पुत्त ! हा वच्छ ! हा वच्छ ! मुक्कामि कहमणाहाहं । एवं कलुणपलावा जलंतजलणेऽज्ज सा पडिया" ॥ 'दर्शनभेदिनी' ज्ञानाद्यतिशयतः कुतीर्थिकप्रशंसादिरूपा । तद्यथा—"सूक्ष्मयुक्तिशतोपेतं, सूक्ष्मवुद्धिकरं परम् । सूक्ष्मार्थदर्शिभिर्दृष्टं, श्रोतव्यं बौद्धशासनम् ॥ १ ॥" इत्यादि । एवं हि श्रोतॄणां तदनुरागात् सम्यग्दर्शनभेदः स्यादिति । 'चारित्रभेदिनी' न संभवन्तीदानीं महाव्रतानि, प्रमादबहुलत्वादतिचारप्रचुरत्वादतिचारशोधकाचार्यतत्कारकसाधुसाध्वीनामभावात् । ज्ञानदर्शनाभ्यां तीर्थं प्रवर्त्तत इति ज्ञानदर्शनकृत्येष्वेवादरो विधेय इति । भणितं च—"सोही न अत्थि नवि दिंतकरिंता नवि य केइ दीसंति । तित्थं च नाणदंसणनिज्जवगा चेव वोच्छिन्ना ॥ ११ ॥" इत्यादि । अनया हि प्रतिपन्नचारित्रस्यापि तद्वैमुख्यमुपजायते, किं पुनस्तदभिमुखस्येति चारित्रभेदिनी । इत्येतासु सङ्गोऽत्याशक्तिः, तेन कलुषितं मनोऽन्तःकरणं यस्य स तथा तस्येतीदमत्र तात्पर्यम्—विकथाप्रवृत्तो हि प्राणी प्रायो रागद्वेषवान् भवति, तद्वशाच्च न युक्तायुक्तं विवेचयति स्वार्थहानिमपि न लक्षयतीति । 'धर्मः' पुनः 'विवेकसारः' एव हिताहितावबोधप्रधान एव भवति, सावधारणत्वाद्वाक्यस्येति । धार्मिको ह्येवमालोचयति—"यावत्परगुणदोषपरिकीर्त्तने व्यापृतं मनो भवति । तावद्वरं विशुद्धे ध्यानं व्यग्रं मनः कर्त्तुम् ॥ १ ॥" 'इति' अस्माद्धेतोः सत्यशोभनास्तीर्थंकरगणधरमहर्षिचरितगोचराः कथा वचनव्यापारा यस्य स 'सत्कथो' 'भूयात्' भवेत् 'धर्मार्थी' धर्मचरणाभिलाषुको येन धर्मरत्नार्हः स्यात् । इति गाथार्थः ॥ २० ॥

अथ सुपक्षयुक्तश्चतुर्दशगुणवानुच्यते—

**अणुकूल धम्मसीलो सुसमायारो य परियणो जस्स । एस सुपक्खो धम्मं निरंतरायं तरइ काउं ॥२१॥**

इह पक्षः परिग्रहः परिकर इत्यनर्थान्तरम् । 'पक्षः परिग्रहेऽप्युक्तः' इति वचनात् । शोभनः पक्षो यस्य स सुपक्षः । तमेव विशेषेणाह—'अनुकूलः' धर्माविघ्नकारी 'धर्मशीलः' धार्मिकः' सुसमाचारः' सदाचारचारी 'परिजनः' प्रतीतो यस्य एष सुपक्षोऽभिधीयते, स च धर्मं 'निरन्तरायं' निष्प्रत्यूहं 'तरइ' इति शक्नोति 'कर्त्तुं' अनुष्ठातुमिति । इह भावार्थः—अनुकूलो धर्मप्रयोजनानि कुर्वतः प्रोत्साहकः साहाय्यकर्त्ता च स्यात् । धर्मशीलो धर्मप्रयोजनेष्वभ्यर्थितो नाभियोगं मन्यते, अपि त्वनुग्रहमिति । सुसमाचारः राजविरुद्धादिकृत्यपरिहारी धर्मलाघवहेतुर्न भवेत् । अत एवंविधः सुपक्षो धर्माधिकारी स्यादिति ॥

इहाणणुकूलपरियणे उदाहरणं—

पुंडवद्धणे नयरे दिवायरो इब्भो अहेसि । तस्स य जोइमईकुच्छिसंभवो पभाकरो पुत्तो । वुद्धभत्ताणि सव्वाणि । अन्नया वाणिज्जकज्जेण गओ पभाकरो हत्थिणपुरं । तत्थ य जिणदासो सेट्ठी । तस्स भारिया पउमसिरी धूया य ओरालसरीरा जिणमई नाम । सुसावगाणि सव्वाणि । तेसिं भंडसालाए भंडं निक्खित्तं पभाकरेण । जिणमईरूवे वाढमज्झोववन्नेण जाइओ जिणदासो । सो भणइ सावगस्स दाहामि, न तुम्हारिसमिच्छादिट्ठिस्स । नत्थि उवायंतरंति सो कवडेण सावगत्तं सिक्खेइ । धम्मं सुणेइ । चेइए वंदइ । साहुणो घयगुलवत्थाइएहिं पडिलाभेइ । सुणमाणस्स उ भावओ परिणओ धम्मो । मंदरागो य जाओ, दारिगाए उवरिं । साहूण सब्भावं कहिऊण गहियाणुव्वओ सावओ जाओ । विन्नायपरमत्थेण दिन्ना से जिणदासेण जिणमई । तं गहाय गओ पुंडवद्धणमेसो । तओ जिणमई सासूनणंदाओ भणंति । वुद्धस्स पाएसु पडाहि, भिक्खू वंदाहि, सा नेच्छइ । तओ ताहिं खिंसिज्जइ । ताहे पभागरो जुयगगेहे ठाइ । इच्छाए साहुवग्गं पडिलाभेइ । अन्नया मायापिईहिं भणिओ पुत्त ! भिक्खुणो निमंतेहि, सो नेच्छइ । तहा त्रिग्गहं काऊण पट्ठविओ । गयस्स भिच्छुएहिं विज्जाहिं मंतिऊण फलं हत्थे दिन्नं । ताहे वाणमंतरीए अहिट्ठिओ घरं गओ भारियं भणइ । भिच्छूण भत्तं देमो । सा नेच्छइ । तो सयमेव काउमारद्धो । साविगा गंतूण सूरीणं कहेइ । तेहिं जोगपडिभेओ दिन्नो । तेण पीयमेत्तेण । वाणमंतरी नट्ठा । साभाविओ जाओ किमेस आरंभोत्ति पुच्छइ । तीए भणियं तुमए चेव भिक्खूणं भत्तमारद्धं । सो भणइ साहू मोत्तूणान्नस्स न देमि । कहमम्मापिउहिं मणा न वंचिओम्हि । तओ तं फासुयभत्तं साहूणं दिन्नंति ॥

एवमणणुकूले परियणे अंतरायं संभवइ । तेण भन्नइ—अणुकूलधम्मसीलाइविसिट्ठपरियणो धम्मारिहोत्ति ॥ २१ ॥

इदानीं पञ्चदशं दीर्घदर्शि ( त्व ) गुणमाह—

**ओढवइ दीहदंसी सयलं परिणामसुंदरं कज्जं । वहुलाभमप्पकेसं सलाहणिज्जं वहुजणाणं ॥ २२ ॥**

'आरभते' प्रतिजानीते दीर्घपरिणामसुन्दरं, कार्यमिति गम्यते, क्रियाविशेषणं वा । द्रष्टुमवलोकयितुं शीलमस्येति 'दीर्घदर्शी' 'सकलं' समस्तं 'परिणामसुन्दरं' आयतिसुखावहं 'कार्यं' कृत्यम् । तथा 'वहुलाभं' प्रचुराभीष्टसिद्धिकं 'अल्पक्लेशं' स्तोकायासं 'श्लाघनीयं' प्रशंसनीयं 'वहुजनानां' स्वजनपरिजनानां, शिष्टानामिति भावः । स किल पारिणामिक्या

१ "आरभइ" इत्यपि ॥

वुद्ध्या सुन्दरपरिणाममैहिकमपि कार्यं करोति । धनश्रेष्ठिवत्ततो धर्मस्यापि स एवाधिकारीति । यत उक्तम्—"वुद्धिजुओ आलोचइ धम्मट्ठाणं उवाहि परिसुद्धं । जोगत्तमप्पणो च्चिय अणुवंधं चेव जत्तेण ॥ १ ॥" को पुणो धणसेट्ठित्ति—

रायगिहे नयरे महाधणो धणो सेट्ठी होत्था । तस्स य पयइभद्दाए सुभद्दाए गेहणीए चउरो पुत्ता । धणपालो, धणदेवो, धणगोवो, धणरक्खिओ य । सव्वेवि ते सुंदेरमंदिरं कलाकुसला सोजन्नपुन्ना य । घरिणीओ तेसिं पहाणकुलुब्भवाओ कमेणं सिरी, लच्छी, धणा, धन्ना य । ते जणयपसाएण निच्चं सुहिया विहरंति । अन्नया सेट्ठी परिणयवओ परलोगहियं काउकामो चिंतेइ—एए पुत्ता मए एत्तियं कालं सुहिणो कया, संपयं पुण जइ सुन्हा काइ गिहकज्जाइं चिंतेइ, तो मइ पव्वइएवि सुत्थिया हवंति । का पुण एयासिं गिहचिंताए उचियत्ति हुं नायं, जा पुन्नाहिया । सा कहं नायव्वा ? वुद्धीए । जओ लोयवाओ—'वुद्धी कम्माणुसारिणी होइ' एमाइ चिंतिऊण सेट्ठिणा पारद्धा तेसिं वुद्धीए परिच्छा । पवत्तिओ गिहे ऊसवो । निमंतिओ तासिमप्पणो सयणवग्गो, भोयाविओ सगोरवं । भुत्तुत्तरे य सुहनिविट्ठो चिचसालिगाए । संमाणिओ कुसुमविलेवणतंवोलाइणा । तस्समक्खं च धणेणाहूया सुण्हाओ, पंच पंच सालिकणे दाऊण भणियाओ य । एए सम्मं पालेयव्वा । जया य मग्गामि तया मम समप्पियव्वत्ति । तओ विसज्जिओ सयणवग्गो । किमेत्थ तत्तंति ? सवियक्को गओ सट्ठाणं । तत्थ जेट्ठसुण्हाए एते पंचवि उज्झिया, जया जाइस्सइ तया जओ तओ अप्पिसामित्ति कट्टु । वीयाए एयं चेव चिंतियं । नवरं छोल्लिऊण मुहे पक्खित्ता । तइयाए सुद्धवत्थे वंधिऊणाभरणकरंडिगाए ठविया, तिसंज्झं पडियारिया य । चउत्थीए पुण समप्पिया कुलहरे, पत्ते पाउसे वविया, उक्खया य, पडिउक्खया य

कया । तेसिं पढमवरिसे जाओ कुलओ । बीए वरसे आढगं । तइयवरिसे खारी । चउत्थे कुंभा । पंचमए कुंभसहस्साणि । पुणोवि सयणसमवायपुव्वं मग्गिया जेट्ठसुण्हा । तीएवि किच्छेण सरिऊण समप्पिआ कुओवि पंच कणा । सवहसावियाए अन्ने एएत्ति,साहिओ सब्भावो । बीयाएवि एवं चेव । नवरं ते मए छोल्लिऊण भुत्तत्ति । तइयाए गंठिबद्धा चेव समप्पिया, किर मए एवं चेव रक्खियत्ति । चउत्थीए कुंचियाओ समप्पिऊण भणियं, मम जणयगिहेसु चिट्ठंति, सगडाइपेसणेण आणावेउ ताओत्ति । सेट्ठिणा भणियं, पुत्ति ! कीस तए एवं कयं ? । तीए भणियं ताएण समाइट्ठं पालेयव्वा एए, ते एवं चेव सम्मं पालिया भवंति । तओ सेट्ठिणा नियाहिप्पायं साहिऊण भणिया तब्बंधुणो, किमेत्थ उचियत्ति ? । तेहिं भणियं तुब्भे चेव बुद्धिनिउणा पमाणं । सेट्ठिणा वुत्तं जेट्ठा उज्झणसीला, ता जं किंचि मज्झगिहे छारछगणकयवराइ उज्झियव्वं तत्थ एयाए अहिगारो । जं किंचि रंधणकंडणसोहणाइ, तंमि बीयाए निओगो । तइया भंडागारसामिणी । चउत्थी सव्वाहिगारिणी । एयाए आएसेण सेसाहिं हिंडियव्वं । एवं चेव एयाओ सुहभाइणीओ भविस्संतित्ति जायमणुमयमेयं सव्वेसिं । तप्पभिइ तासिं नामपसिद्धी जाया; उज्झिया, भोगवई, रक्खिया, रोहिणीति । जायं च सेट्ठिघरं सुत्थं । तओ सलाहिओ सेट्ठी लोएण । तेणावि कयं हियइच्छियं परलोगहियंति । एरिसो दीहदंसी धम्मारिहोत्ति ॥ २२ ॥

इदानीं विशेषज्ञमभिधातुमाह—

**वत्थूणं गुणदोसे लक्खेइ अपक्खवायभावेण । पाएण विसेसन्नू उत्तमधम्मारिहो तेण ॥ २३ ॥**

'वस्तूनां' द्रव्याणां सचेतनाचेतनानां धर्माधर्महेतूनां वा गुणान् दोषांश्च 'लक्षयति' जानाति 'अपक्षपातभावेन' माध्यस्थ्यसुस्थचेतस्तया पक्षपातयुक्तो हि दोषानपि गुणान्, गुणानपि दोषान् व्यवस्यति समर्थयति चेति । उक्तं च— "आग्रही वत निनीषति युक्तिं तत्र यत्र मतिरस्य निविष्टा । पक्षपातरहितस्य तु युक्तिर्यत्र तत्र मतिरेति निवेशम् ॥ १ ॥" अतः 'प्रायेण' बाहुल्येन 'विशेषज्ञः' सारेतरवेदी 'उत्तमधर्मार्हः' प्रधानधर्मोचितो भवतीति शेषः । 'तेन' कारणेन सुन्दरीनन्दवत् । उक्तं च—"एयाउ इमं लट्ठं इमाओ एयंति जो विसेसन्नू । सो पावइ सामन्नं सुंदरिनंदेण एत्थुवमा ॥ १ ॥" इति गाथार्थः ॥ २३ ॥

सांप्रतं सप्तदशगुणमाह—

**वुड्ढो परिणयबुद्धी पावायारे पवत्तई नेय । वुड्ढाणुगोवि एवं संसग्गिकया गुणा जेण ॥ २४ ॥**

'वृद्धः' प्रवयाः 'परिणतबुद्धिः' परिपक्वमतिः परिणामसुन्दरमतिरित्यर्थः । 'पापाचारे' अशुभकर्मणि प्रवर्त्तते नैव, स हि किल यथावस्थितं वस्तुतत्त्वमवबुध्यते । अत्रोदाहरणम्—एगस्स रन्नो दुविहा मंतिणो तरुणा, वुड्ढा य । तरुणा भणंति एए वुड्ढा मइभंसपत्ता न सम्मं मंतिंत्ति । ता अलमेएहिं अम्हे चेव पहाणा । अन्नया तेसिं परिच्छानिमित्तं राया भणइ, भो सचिवा ! जो मम सीसे पण्हिपहारं दलयइ, तस्स को दंडो कीरइ ? । तरुणेहिं भणियं, किमेत्थ जाणियव्वं । तस्स सरीरं तिलं तिलं कप्पिज्जइ, सुहुयहुयासणे वा छुब्भइ । तओ रन्ना वुड्ढा पुच्छिया । तेहिं एगंते गंतूण मंतियं आसंघयप्पहाणा महादेवी चेव एवं करेइ, ता तीए पूया चेव कीरइ । एयमेयत्थं वत्तव्वंति निच्छिऊण भणियं, जं माणुसमेरिसं महासाहसमायरइ, तस्स सरीरं ससीसवायं कंचणरयणालंकारेहिं अलंकिज्जइ । तुट्ठेण भणियं रन्ना, साहु वियाणंति, सच्चदंसिणोत्ति रन्ना ते चेव पमाणं कयत्ति ॥ यतो वृद्धा नाहितहेतुषु प्रवर्त्तन्ते । ततो वृद्धाननुगच्छति यस्तन्मतानुवृत्तिपरतया स 'वृद्धानुगः' सोऽप्येवमेव पापे न प्रवर्त्तत इति भावः । केन हेतुना ? इत्याह—'संसर्गकृताः' साङ्गत्यजनिता गुणाः 'येन' कारणेन प्राणिनां स्युः । अत एवोक्तम्—"उत्तमजणसंसग्गी सीलदरिद्दंपि कुणइ सीलड्ढं । जह मेरुगिरिविलग्गं तणंपि कणयत्तणमुवेइ ॥ १ ॥" इति गाथार्थः ॥ २४ ॥

१ "असंधयए प्पहाणा" इत्यपि ॥

अथाष्टादशं विनयगुणमधिकृत्याह—

**विणओ सव्वगुणाणं मूलं सन्नाणदंसणाईणं । मोक्खस्स य ते मूलं तेण विणीओ इह पसत्थो ॥२५॥**

विनीयते अपनीयते विलीयते वाष्टप्रकारं कर्म येन, स 'विनयः' इति सामयिकी निरुक्तिः । उक्तं च—"जम्हा विणयइ कम्मं अट्ठविहं चाउरंतमोक्खाए । तम्हा उ वयंति विऊ विणओत्ति विलीणसंसारा ॥ १ ॥" स विनयः सर्वगुणानां मूलं वर्त्तते । यतः सूत्रम्—"विणओ सासणे मूलं विणीओ संजओ भवे । विणयाओ विप्पमुक्कस्स कओ धम्मो कओ तवो ॥ १ ॥" कतमानाम् ? इत्याह—सज्ज्ञानदर्शनादीनाम् । उक्तं च—"विणया नाणं नाणा उ दंसणं दंसणाहि चरणं तु । चरणाहिंतो मोक्खो मोक्खे सोक्खं अणाबाहं ॥ १ ॥" ततः किम् ? इत्याह—'चकारस्य' पुनःशब्दार्थस्यैव योगः । 'ते' पुनर्गुणा मोक्षस्य मूलं 'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः' ( त० १ । १ । ) इति वचनात् । 'तेन' हेतुना विनीतः

इह धर्माधिकारे 'प्रशस्तः' श्लाघितः । किल यः प्रकृत्यैव विनीतः स तद्गुणादेव धर्ममवाप्नोत्याराधयति च । पुप्फसालसुतफलसालवत् । इति गाथार्थः ॥ २५ ॥

तथाहि—

मगहमंडलमंडणभूओ धणधन्नसमिद्धो सालिग्गामो नाम गामो । तत्थ पुप्फसालगाहावइस्स फलसालो नाम पुत्तो अहेसि । पयइभद्दओ पयइविणीओ परलोगभीरू य । तेण धम्मसत्थपाढयाओ सुयं । जो उत्तमेसु विणयं पउंजइ सो जम्मंतरे उत्तमुत्तमो होइ । तओ सो ममेस जणओ उत्तमोत्ति सबायरेण तस्स विणए पवत्तो । अन्नया दिट्ठो जणओ गामसामिस्स विणयं पउंजंतो । तओ एत्तोवि इमो उत्तमोत्ति जणयमापुच्छिऊण पवत्तो गामसामिमोलग्गिउं । कयाइ तेण सद्धिं गओ रायगिहं । तत्थ गामाहिवं महंतयस्स पणामाइकुणमाणमालोइऊण इमाओवि एस पहाणोत्ति पओलग्गिओ महंतयं । तंपि सेणियस्स विणयपरायणमवलोइऊण सेणियमोलग्गिउमारद्धो । अन्नया तत्थ भगवं वद्धमाणसामी समोसढो । सेणिओ सबलवाहणो वंदिउं निग्गओ । तओ फलसालो भगवंतं समोसरणलच्छीए समाइच्छियं नियच्छंतो पविम्हिओ । नूणमेस सबुत्तमो जो एवं नरिंदविंददाणविंदेहिं वंदिज्जइ ता अलमन्नेहिं । एयस्स चेव विणयं करेमि । तओ अवसरं पाविऊण खग्गखेडगकरो चलणेसु निवडिऊण विन्नविउं पवत्तो । भयवं! अणुजाणह, अहं भे ओलग्गामि । भगवया भणियं, भद्द! नाहं खग्गफलगहत्थेहिं ओलग्गिज्जामि, किं तु रओहरणमुहपोत्तियापाणीहिं, जहा एए अन्ने

१ 'वद्धमाण–' इत्यपि ॥

ओलग्गंति । तेण भणियं, जहा तुब्भे आणवेह तहेवोलग्गामि । तओ जोगोत्ति भगवया पव्वाविओ, सुगइं च पाविओत्ति । एवं विणीओ धम्मारिहो होइत्ति ॥

अथैकोनविंशस्य कृतज्ञतागुणस्यावसरस्तत्र परेण कृतमुपकारमविस्मृत्या जानातीति कृतज्ञः प्रतीत एव । अतस्तं फलद्वारेणाह—

**बहु मन्नइ धम्मगुरुं परमुवयारित्ति तत्तबुद्धीए । तत्तो गुणाण वुड्ढी गुणारिहो तेणिह कयन्नू ॥ २६ ॥**

'बहु मन्यते' सगौरवं पश्यति 'धर्मगुरुं' धर्मदातारमाचार्यादिकम्, 'परमोपकारी' ममायम्, उद्धृतोऽहमनेनाकारणवत्सलेन भगवताऽतिघोरसंसारकूपकुहरे निपतन्, 'इति' एवंप्रकारतया 'तत्त्वबुद्ध्या' परमार्थसारमत्या स हि भावयत्येवमागमवाक्यम्—"तिण्हं दुप्पडियारं समणाउसो । तं जहा—अम्मापिउणं भट्टिस्स धम्मायरियस्स ।" इत्यादि । 'ततः' तस्मात् कृतज्ञताभावजनितगुरुबहुमानाद् 'गुणानां' क्षान्त्यादीनां ज्ञानादीनां वा 'वृद्धिः' भवतीति गम्यते । तथा हि—स गुरोरुपकारितां परिभावयन्निर्भर्त्सितो न कुप्यति, नापि मानमालम्बते, नापि विनयहानिं विधत्ते, नापि वञ्चनापरिणाममास्कन्दति । अत एव सुप्रसन्नाद्गुरोः सकाशात् ज्ञानादिगुणानाप्नोति । क्रमेण गुरुपदमपि लभते । 'गुणार्हः' धर्मप्रतिपत्तियोग्यः । 'तेन' हेतुना 'इह' धर्माधिकारिविचारे 'कृतज्ञः' उक्तस्वरूप इत्यत्र भीमो दृष्टान्तः ॥

स चायम्—

तगराए नयरीए रइसारो राया समणोवासओ । तस्स य पुत्तो भीमो नामा । सो संगहियकलाकलावो नाणाकीलाहिं कीलंतो भणिओ रन्ना, पुत्त! कहमद्धसिक्खिओवि रमिउमिच्छसि? । तेण भणियं, ताय! कहमहमद्धसिक्खिओऽम्हि । ताहे पढियं रन्ना, बावत्तरीकलापंडियावि पुरिसा अपंडिया चेव; सव्वकलाण पहाणं जे धम्मकलं न याणंति । भीमेण चिंतियं ताओ सच्चमुल्लवइ, जमद्धसिक्खिओहं । जओ नामंपि न मे सुअपुव्वं धम्मकलाए ता तायं चेव पुच्छामि । तओ पुच्छिओ, ताय! कहिं सा लब्भइ? रन्ना भणियं, साहूणं समीवे । तो खाइं नेहि मं तत्थत्ति वुत्ते नीओ सो राइणा साहुसमीवे । तेहिं धम्मो कहिओ । अभिरुइओ कुमारस्स । तप्पभिइं च सिक्खिओ चिइवंदणाइं । गहियाइं अणुव्वयाइं । जाओ परमसावओ । चक्कवट्टिरज्जलाभाओवि अब्भहियं परितुट्ठो जिणधम्मसंपत्तीए । चिंतिउं पवत्तो, अहो! पुत्तवच्छलया तायस्स समुद्धरिओहं जेण रुद्दाओ भवसमुद्दाओ । पडिवोहिओम्हि पलित्तगिहपसुत्तो । सव्वहा परमोवयारिणो इमस्स न विप्पियलेसोवि मए कायव्वो । जइयव्वं च पियं संपाइउंति गहियाभिग्गहो सावगधम्ममणुपालिउं पवत्तो । अन्नया रन्ना रायवाडियं वच्चंतेण दिट्ठा पासाओवरि कीलमाणी एगा सेट्ठिकन्नया । रूवाइसयरंजिएण मग्गाविया । न य दिन्ना सेट्ठिणा भणियं च । जइ इमीए सुओ होही, न सो रज्जं पाविही । जओ अत्थि रन्नो भीमकुमारो रज्जारिहोत्ति । तओ तमलभमाणो राया बाढमरइमणुपविट्ठो । सुयमिणं भीमेणं । तओ मए धरमाणे तायस्स इच्छाभंगोत्ति ससंभमेण गंतूण भणिओ सेट्ठी, देहि धूयं देवस्स । नियमो मे रज्जकरणे । सेट्ठिणा [illegible], तुह पुत्ता होहिंति, ते मम नत्तुयं परिभविस्संति । जइ एवं न परिणिस्सामि चेवाहं । [illegible]ारेण वुत्ते तुट्ठेण दिन्ना परिणाविओ राया । जाया सा चेव महादेवी । [illegible] । सोवि [illegible] ।

जाओ। भीमोवि बंभचेरधारी सम्मं समणोवासगधम्ममणुपालेइ। कयाइ दढव्वओत्ति पसंसिओ सक्केण। तयणु असद्दहंतो एगो देवो गणियारूवं काऊण तज्जणणीरूवेण य गंतूण भणिओ। भो कुमार! उत्तमकुलसंभूओसि, धम्मिओसि, दयालुओसि, अब्भत्थियसारोसि तं एसा वराई मम धूया तुह रूवालोयणसमुच्छलियमयणानलज्जालालिपलिसगसा कालधम्ममुवगच्छइ। जीवइ य तुह ससिणेहदिट्ठिदाणेण। ता करेहि तीए जीवावणेण महंतं पुन्नसंचयंति। कुमारेण वुत्तं भद्दे! न कयाइ विसं भुत्तं जीवावेइ। न सन्निवायस्स दुद्धं पच्छं। ता तीए धम्मोसहं देहि। नाहं वयभंगमंगीकरेमि। एयं चेव कारुण्णं जं परो पावे न पवत्तिज्जइ। एमाइकोमलालावेहिं पडिसिद्धा कुट्टणी। ताहे निप्पकंपोत्ति पसंसिओ भीमो देवेण। कमेण जाओ परलोगाराहगोत्ति। एरिसो कयन्नू सुत्तभणियगुणभायणं भवइत्ति॥ २६॥

अथ विंशतितमगुणी परहितार्थकारी, तत्स्वरूपं नामत एव सुगमम्। अतस्तस्य धर्मप्राप्तौ फलमाह—

**परहियनिरओ धन्नो सम्मं विन्नायधम्मसब्भावो। अन्नेवि ठवइ मग्गे निरीहचित्तो महासत्तो॥२७॥**

यो हि प्रकृत्यैव परेषां हितकरणे निरन्तरं रतो भवति स 'धन्यो' धर्मधनार्हत्वात् 'सम्यग्विज्ञातधर्मसद्भावः' यथावद्बुद्धधर्मतत्त्वो गीतार्थीभूत इति यावत्। अनेनागीतार्थस्य परहितमपि चिकीर्षतस्तदसंभवमाह। तथा चागमः—"किं एत्तो कट्ठयरं जं सम्ममनायसमयसब्भावो। अन्नं कुदेसणाए कट्ठतरागंमि पाडेइ॥ १॥" 'अन्यानपि' मन्दमतीन् 'स्थापयति' स्थिरीकरोति 'मार्गे' शुद्धधर्मे किंविशिष्टः सन्?, इत्याह—'निरीहचित्तो' निःस्पृहमनाः सस्पृहः शुद्धमार्गोपदेष्टापि न प्रशस्यः। उक्तं च—"परं लोकाधिकं धाम तपः श्रुतमिति द्वयम्। तदेवार्थित्वनिर्लुप्तसारं तृणलवायते॥ १॥" किमित्येवंविधः? इत्याह—'महासत्त्वः' इति कृत्वा, यतः सत्त्ववतामेवामी गुणाः संभवन्ति—"परोपकारैकरतिर्निरीहता विनीतता सत्यमतुच्छचित्तता। विद्याविनोदोऽनुदिनं न दीनता गुणा इमे सत्त्ववतां भवन्ति।१।" इति गाथार्थः॥२७॥

इहोदाहरणम्—

विजयवद्धणे नयरे विसालसिट्ठिपुत्तो विजओ नाम होत्था। तेण उवज्झायसमीवे निसुयं, पुरिसेण खमापहाणेण परहियरएण य होयव्वं। जमेत्तो इहलोयपरलोएसु कल्लाणमासाइज्जइ। गहियं तेण तत्तबुद्धीए। अन्नया नवपरिणीयभज्जाणयणकज्जेण गओ ससुरकुलं। आगच्छंतस्स य भज्जाए चिंतियं हद्धी निग्घिणाहं जा जणणिजणए मोत्तूण परगिहं वच्चामि। को पुण उवाओ? जेण एत्तोवि छुट्टेज्जामि। तओ अंतरालपत्ताए नाइदूरे जुन्नकूवं दट्ठूण भणिओ भत्ता। दढं तन्हा इयणिंह मरामि, जइ मे उदगं न देसि। तओ विजओ एहि इओ कूवाओ जलं पाएमित्ति भणंतो चलिओ कूवाभिमुहं। गया पिट्ठओ इयरीवि। विसत्थं कूवालोयणपरं पेल्लिऊण तं झत्ति पलाणा गया गामं। सउणकारणाउ न तेण नीयम्हित्ति साहियं जणयाणं। इयरोवि पडंतो झत्ति विलग्गो कूवतडुब्भवतरुखंधे। तयाधारेण य ओइन्नो कूवाओ। कीस तीए वराईए पेल्लिओम्हित्ति चिंततेण नायं नियगिहे दु(उ)कंठियाए। भणियं च उवज्झाएण खमापहाणेण होयव्वं ता अलं तं पइ कोवेणंति अप्पाणं संठाविऊण गओ गेहं। पुच्छिओ जणणीए किन्नागया सुण्हा? तेण भणियं, आगच्छंती अवसउणकारणाओ मए मुक्का। तप्पभिइं च पेसिज्जंतोवि सो तत्थ न वच्चइ चिंतइ य, किं तीए वराईए दुक्खुप्पायणेण। अन्नया मित्तेहिं वाढमुवहसिओ गओ तत्थ। सगोरवं च केइ दिणे अच्छिऊण गहिऊण य तं समागओ गेहं। कालेण य जाओ परोप्परं सिणेहो। उवरएसु जणएसु ताणि चेव घरसामित्तं पत्ताणि। अन्नया चिंतियं विजएण, अहो! अवितहमुवज्झाएण मुवइट्ठं। दिट्ठो खमागुणो। इयाणिं परहियरओ भवामि। तओ दीणाईण दाणे पवत्तो। दट्ठूण य केइ विवयमाणे पियवयणेहिं उवसामेइ भणइ य। सयणस्स संतियं विप्पियं दिट्ठंपि हियए धारियव्वं। जओ 'जं-पियाओ अजंपियं वरं, परस्सवि पुच्छियाओ अपुच्छियं वरं, सुयाओ असुअं वरं'। एवं सयणभावो सुहावहो होइ। अन्नया जिट्ठपुत्तेण पुच्छियं, ताय! किमेवं सव्वलोयस्स उवइसिज्जइ?। विजएण भणियं वच्छ! अणुहवसिद्धं ममेयं, तेण सव्वलोयस्स उवएसं देमि। पुणो पुत्तेण पुट्ठं, कहं भवओ अणुहवसिद्धमेयंति कहेहि, कोउगं मे वट्टइ। विजएण वुत्तं सिट्ठमेव मए। 'पुच्छियाओ अपुच्छियं वरं, सुयाओ असुयं वरं' तो अलं निबंधेण। तओ पुत्तो दढयरवड्ढियकोउहल्लो पुणो पुणो झिंखइ। अइणिच्छएण भणियं पिउणा। किलाहं तुह जणणीए पुरा जुन्नागडे खित्तो, न य मए तरसावि तं सिट्ठं, तं च परिणामसुंदरं जायं। तएवि न एयमन्नस्स साहियव्वंति। अन्नया सुएण हसिऊण पुच्छिया जणणी, अम्मो! किं सच्चमेयं? तुमए ताओ जुन्नकूवे पेल्लिओ। पुत्त! कहं जाणासित्ति मायाए वुत्ते तेण भणियं। मम ताएण चेव सिट्ठं। तओ नायं भत्तुणा मज्झं पेल्लणंति लज्जिया धसत्ति हिययफुट्टणेण गया पंचत्तमेसा। सोऊण हाहारवं समागओ सेट्ठी। विन्नायवुत्तंतो विसन्नो वाढं। ममेस दोसोत्ति झूरिऊण सुइरं सुद्धिमिच्छंतेण दिट्ठा कहिंवि साहुणो, मग्गिया सुद्धिं। तेहिं भणिओ पव्वयाहि। सो भणइ, कहं निद्धणेहिं परहियमायरिज्जइ? कहं वा परहियविहाणाओ अन्नं कल्लाण-

१ "अइच्छणिएण" इत्यपि॥

कारणं ? । साहूहिं भणियं, भद्द! धम्मोवएसाओ अभयदाणाओ वा अन्नं परहियमेव नत्थि । यत उक्तम्—"नोपकारो जगत्यत्र तादृशः कोऽपि विद्यते । यादृशी दुःखविच्छेदाद्देहिनां धर्मदेशना ॥ १ ॥" तथा—"जीवितार्थे नरेन्द्रोऽपि पूर्णां यच्छति मेदिनीम् । प्राणिरक्षासमं दानमतो लोके न विद्यते ॥ १ ॥" "जो सहस्सं सहस्साणं मासे मासे गवं दए । तओवि संजमो सेओ अदिंतस्सवि किंचणं ॥ १ ॥" एवं सोऊण पडिबुद्धो पव्वइओ विजओ । जाओ सपरोवयारसाहगोत्ति । एवं परहियत्थकारी धम्मारिहोत्ति ॥

इदानीमेकविंशतितमो लब्धलक्ष्यगुणः फलतोऽभिधीयते—

**लक्खेइ लद्धलक्खो सुहेण सयलंपि धम्मकरणिज्जं। दक्खो सुसासणिज्जो तुरियं च सुसिक्खिओ होइ॥२८॥**

'लक्षयति' जानाति प्रतनुज्ञानावरणत्वाल्लब्धमिव लब्धं लक्ष्यं शिक्षणीयानुष्ठानं येन स 'लब्धलक्ष्यः' 'सुखेन' अक्लेशेनात्मनः शिक्षयितुश्च निर्वेदमनुत्पादयन्नित्यर्थः । 'सकलं' समस्तमपि 'धर्मकरणीयं' वन्दनप्रत्युपेक्षणादिकम् । अयमभिप्रायः—पूर्वभवाभ्यस्तमिव सकलं झटित्येवाऽधिगच्छति । तथा चाह—"प्रतिजन्म यदभ्यस्तं जीवैः कर्म शुभाशुभम् । तेनैवाभ्यासयोगेन तदेवाभ्यस्यते सुखम् ॥ १ ॥" अत एव 'दक्षो' द्राक्कारी 'सुशासनीयः' सुखशिक्षणीयः 'त्वरितं' स्तोककालेन चकारस्योपरियोगात् 'सुशिक्षितः' शिक्षापारगामी च ('भवति') स्यात् । आर्यरक्षितवत्—

स हि दशपुरनगरे सोमदेवद्विजन्मनो रुद्रसोमायाश्च पुत्रः । कुतोऽपि पाटलिपुत्रादेश्चतुर्दशविद्यास्थानपारगो भूत्वा स्वं

१ 'प्राण-' इत्यपि ॥

पुरमाजगाम । कृताभिगमो राज्ञा नागरकैश्च स्वगृहं चाविशत् । स्थितो बहिः शालायाम् सर्वस्वजनैरभिनन्दितो, न तु मात्रा । ततश्चोत्कण्ठितो मातुरभिवन्दनाय गृहान्तरविशत् । कृतवान् मातुः पादवन्दनम् । तयाऽपि दत्ताशिषा संभाषितो मध्यस्थवृत्त्या नात्युत्कटप्रमोदया । ततोऽसौ विज्ञाततदाकूतस्तां पप्रच्छ, मातः! मदागमनेन जनः परजनोऽपि परं प्रमोदमाससाद, न पुनर्भवती, किमत्र कारणम् ? । साऽवोचत्, पुत्र! कथमिव मम प्रमोदो भवति ? दुर्गतिगमननिबन्धनानि कुशास्त्राणि पठित्वाऽऽगते । यदि परं दृष्टिवादमधीत्य मां प्रमोदयसि । ततः किमन्यजनेनानन्दितेन, यज्जनन्यै रोचते तदेवाध्येतुमुचितमित्यवधार्य मातरमपृच्छत्, क्व पुनरम्ब! दृष्टिवादः संपद्यते ? । तयोचे, पुत्र! तवैवेक्षुयन्त्रागारे तोशलिपुत्राचार्याणां पार्श्वे लभ्यते। यद्येवं तुष्यतुतरामम्बा, प्रातरेव पूरयामि मनोरथान्, इत्यभिधाय दृष्टिवादपदस्यार्थमनुस्मरन्नतिक्रान्तप्रायायां रजन्यां जननीमापृच्छ्य प्रस्थितोऽसौ सूरीन् प्रति । प्रणतश्चान्तरा पूर्वदिवसाप्राप्तेनेक्षुयष्टिकलापसमर्पणपूर्वकस्वमित्रेण । प्रधानशकुनोऽयमित्यानन्दितेन गणिता इक्षुयष्टयः । नवपरिपूर्णा दशम्याश्चार्द्धमालोक्य चिन्तितमनेन । तत्र दृष्टिवादे कियन्तोऽप्यधिकारा न ज्ञायते, मया नव पूर्णा अध्येतव्याः, दशमश्चार्द्धमिति संचिन्त्य मातुर्धृतिसंपादनाय भणितो वयस्यः । एता मम मातुः समर्पणीया वक्तव्यं च यत्र प्रयोजने तव पुत्रः प्रस्थितस्तत्राहमेव प्रथममभिमुखोऽभवमिति । गत्वा च कथिते तेन मात्राऽपि तदेव फलमबोधि । रक्षितोऽपि प्राप्तः साधूपाश्रयसमीपमज्ञाततद्वन्दनादिव्यवहारो ग्राम्य इव कथं प्रविशामि ? इत्यालोचयन् श्रावकमेकं प्रविशन्तं ददर्श, प्रविष्टश्च तदनुमार्गेण । नैषिधिकीर्याप्रतिक्रमणवन्दनप्रत्याख्यानसाधुवन्दनादि सर्वमक्षुण्णं तेन सह विधायोपविष्टो गुरुसमीपे । ज्येष्ठश्रावकावन्दनाल्लक्षितो गुरुभिरभिनवश्रावकोऽयमिति ; पृष्टश्च देवानुप्रिय! कुतस्ते धर्मप्राप्तिरभूत् ? । रक्षितः प्राह, इतो वृद्धश्रावकात् । कदा? संप्रत्येव। अत्रान्तरे साधुभिरूचे, भगवन्! शय्यातरीसुतोऽयं रक्षितकुमारः, यस्यातीतवासरे राज्ञा प्रवेशोत्सवो व्यधीयत । ततोऽहो! लब्धलक्षितास्येति विस्मितैः स्निग्धमधुरया दृशा विलोक्य भणितोऽसौ सूरिभिः । सौम्य! सर्वजनवल्लभस्य भवतः किमस्माभिरातिथ्यं विधीयताम् ? । ततः प्राञ्जलिपुटः प्रत्याह बटुः, भगवन्! दृष्टिवादप्रदानेन प्रसादः क्रियताम् । सूरिराह, साधु साधु शोभनो मनोरथो भवतो योग्यश्चासि बाढं दृष्टिवादस्य । किं तु नासौ गृहस्थेभ्यो वितीर्यते । यतयोऽप्यधीताचैकादशाङ्गास्तत्पाठाधिकारिणो भवन्ति । स प्राह, यथा चारु भवति तथैव पठामि, प्रदीयतां दीक्षाऽपि । गुरुराह, यद्येवमापृच्छेतां राजस्वजनवर्गौ । तेनोचे, न मम राजादिभिः कार्यम्, मातृमनोरथसंपादनमेव चिकीर्षामीति निवेदितजननीजल्पोऽनल्पमतिविभवः संग्रहीतुमुचितोऽयमिति परिभाव्य प्रव्राजितोऽसौ सूरिणा । स्वजनादिभयाच्च विहृताः सर्वेऽप्यन्यत्र । कथानकशेषमावश्यकादवगच्छेत् ॥

इह पुनर्दृष्टमात्रानुष्ठानग्राही लब्धलक्ष्यो रक्षितवद्धर्माधिकारी स्यादित्यावेदितम् । इति गाथार्थः ॥ २८ ॥

अथ प्रस्तुतोपसंहारद्वारेण प्रकरणार्थनिगमनायाह—

**एए इगवीसगुणा सुयाणुसारेण किंचि वक्खाया । अरिहंति धम्मरयणं घेत्तुं एएहि संपन्ना ॥ २९ ॥**

'एते' पूर्वोक्तस्वरूपाः, एकविंशतिसंख्यागुणाः 'श्रुतानुसारेण' प्रकरणान्तरोपलम्भद्वारेण 'किञ्चित्' असामस्त्येन, तेषां प्रकरणान्तरेषु विचित्रव्याख्याश्रवणात्सामस्त्येन कथयितुमशक्यत्वात् 'व्याख्याताः' स्वरूपतः फलतश्च प्ररूपिताः । कि-

मर्थम् ? इत्याह—यतः 'अर्हन्ति' योग्यतासारं धर्मरत्नं ग्रहीतुं न पुनर्वसन्तनृपवद्राजलीलामिति भावः । कः ? इत्याह—'एभिः' अनन्तरोक्तैर्गुणैः 'संपन्नाः' संगताः संपूर्णा वा । इति गाथार्थः ॥ २९ ॥

आह किमेकान्तेनैतावद्गुणसंपन्ना एव धर्माधिकारिणः, उतापवादोऽप्यस्ति ? इत्युच्यते—

**पायद्धगुणविहीणा एएसिं मज्झिमा वरा नेया । एत्तो परेण हीणा दरिद्दपाया मुणेयव्वा ॥ ३० ॥**

इहाधिकारिणस्त्रिधा विचिंत्या उत्तममध्यमजघन्यभावेन । तत्रोत्तमाः संपूर्णगुणा एव । पादश्चतुर्थांशोऽर्द्धं प्रतीतमेव । गुणशब्दस्य प्रत्येकमभिसंबन्धात् । पादप्रमाणैरर्द्धप्रमाणैश्च गुणैर्ये हीनाः, 'एतेषाम्' उक्तगुणानां मध्यात्ते यथाक्रमं मध्यमा वरा ज्ञेयाः । चतुर्थांशहीना मध्यमाः, अर्द्धेन हीना जघन्या इति भावः । तेभ्योऽपि हीनतरेषु का वार्त्ता ? इत्याह—'एत्तो परेण' इति एभ्योऽपि परेणार्द्धादप्यधिकैः 'हीनाः' रहिताः 'दरिद्रप्रायाः' अकिंचनजनकल्पाः 'मुणितव्याः' वेदितव्याः । यथा हि दरिद्रा उदरभरणचिन्ताव्याकुलतया न रत्नक्रयमनोरथमपि कुर्वन्ति । तथैतेऽपि न धर्माभिलाषमपि विदधति । इति गाथार्थः ॥ ३० ॥

एवं च स्थिते यद्विधेयं तदाह—

**धम्मरयणत्थिणा तो पढमं एयज्जणंमि जइयव्वं । जं सुद्धभूमिगाए रेहइ चित्तं पवित्तंपि ॥ ३१ ॥**

धर्मरत्नमुक्तस्वरूपं, तदर्थिना तल्लिप्सुना, 'ततः' तस्मात्कारणात् 'प्रथमं' आदौ एषां गुणानां अर्जने विढपने 'यतितव्यं' तदुपार्जनं प्रति यत्नो विधेयः, तदविनाभावित्वाद्धर्मप्राप्तेः । अत्रैव हेतुमाह—'यस्मात्' कारणात् 'शुद्धभूमिकायां' अकलङ्काधारे 'रेहइ' इति शोभते 'चित्रं' चित्रकर्म 'पवित्रमपि' प्रशस्तमपि लिखितं सत् । इति गाथार्थः ॥ ३१ ॥

इहाप्यबुधजनविबोधनायागमप्रसिद्धमुदाहरणं वर्णयन्त्याचार्याः—

सागेयपुरे महाबलो नाम राया दूयमापुच्छइ । किं मम रायंतरभावि रायलीलोचियं वत्थु नत्थि ? । दूएण भणियं, सब्वमत्थि देवस्स एगं चित्तसहं मोत्तुं । तीएवि किर नयणमणोहारिविचित्तचित्तावलोयणेण रायाणो चंकमणलीलमायरंति । एयमायन्निऊण रन्ना संजायकोउगेण समाइट्ठो मंती । तेण य कारिया तुरियमेव दीहरविसाला महासहा । समाहूया नयरपहाणा विमलपहासनामाणो दुवे य चित्तयरा । समप्पिया तेसिमद्धद्धभाएण अंतरा चिलिमिलं दाऊण भणिया य । न तुब्भेहिं अन्नोन्नं कम्मं अवलोयणीयं, नियनियबुद्धीए चित्तियव्वं, न य वेठी मंनियव्वा, जहाविन्नाणं भे पसाओ कंजिहित्ति ( १ ) । तओ ते अहमहमिगाए कम्मं पकया जाव वइक्कंता छमासा ताव य ऊसुगेण पुच्छियं रन्ना । विमलेण भणियं, निम्माओ मदीयभागो । विरूविओ रन्ना अइसयसुंदरोत्ति कओ से महापसाओ । तओ पुच्छिओ पभासो, सो भणइ, नाहमज्जवि चित्तारंभं करेमि, जओ भूमिगाकम्ममेव मम निम्मायंति । केरिसं पुण तं भूमिकम्मंति विम्हिएण राइणावणीया परियच्छी, जाव दिट्ठं तत्थ विसेसरम्मं चित्तकम्मं । तओ सकोवमिव भणिओ पभासो, भो ! किमम्हेवि विप्पयारेसि ? । तेण भणियं, न सामी विप्पयारीयइ, पडिबिंबसंकमो एसोत्ति भणंतेण दाविया जवणिगा । विम्हिएण भणियं रन्ना, किमेरिसी भूमी कीरइ ? । पभासेण वुत्तं, देव ! इमीए चित्तं थिरयरं भवइ, वन्नयाण कंती बिउणा वित्थइ,

१ "कज्जिओहित्ति" "कज्जिम्हित्ति" इत्यपि पाठौ दृश्येते ॥

रूवयाणं च भावुल्लासो होइ । तओ तुट्ठेण राइणा कओ से विउणो पसाओ । भणियं च एयमेवं चेव चिट्ठउ । संचारिमचित्ताचित्तसहत्ति अउवा मे पसिद्धी होउत्ति । एस एत्थ उवणओ—जहा चित्तं काऊण कमेण तेण भूमी सुट्ठु परिकम्मिया । एवं धम्मचित्तत्थिणावि एएहिं गुणेहिं आया परिकम्मियव्वोत्ति ॥

आह धर्मो द्विधा, श्रावकधर्मो यतिधर्मश्च । श्रावकोऽप्यविरतो विरतश्च । तत्राद्यस्यान्यत्र—"तत्थहिगारी अत्थी समत्थओ जो न सुत्तपडिकुट्ठो । अत्थी उ जो विणीओ समुवठिओ पुच्छमाणो य ॥ १ ॥" इत्यादिनाधिकारी निरूपितः । द्वितीयस्यापि—"संपत्तदंसणाई पइदियहं जइजणा सुणेइत्ति । सामायारिं परमं जो खलु तं सावयं बिंति ॥ १ ॥" तथा—"परलोगहियं सम्मं जो जिणवयणं सुणेइ उवउत्तो । अइतिव्वकम्मविगमा सुक्कोसो सावगो एत्थ ॥ १ ॥" इत्यादिभिरसाधारणैः श्रावकशब्दप्रवृत्तिहेतुभिः सूत्रैरर्थत एवंविधाः श्रावकधर्माधिकारिण उक्ताः । तथा यतिधर्माधिकारिणोऽप्यन्यत्रान्यथैवोक्ताः । तद्यथा—"पव्वजाए अरिहा आरियदेसंमि जे समुप्पन्ना । जाइकुले हि विसिट्ठा तह खीणप्पायकम्ममला ॥ १ ॥ तत्तो य विमलबुद्धी दुलहं मणुयत्तणं भवसमुद्दे । जम्मो मरणनिमित्तं चवलाओ संपयाओ अ ॥ २ ॥ विसया य दुक्खहेऊ संजोगे नियमओ विओगोत्ति । पइसमयमेव मरणं ऐत्थ विवागो य अइरोद्दो ॥ ३ ॥ एवं पयईए च्चिय अवगयसंसारनिग्गुणसहावा । तत्तो य तव्विरत्ता पयणुकसायऽप्पहासा य ॥ ४ ॥ सुकयन्नुया विणीया रायाईणमविरुद्धकारी य । कल्लाणंगा सद्धा थिरा तहा समुवसंपन्ना ॥ ५ ॥" तदेभिरेकविंशतिभिर्गुणैः कतमस्य धर्मस्याधिकारित्व-

१ विरतश्रावकस्य तु । २ 'अइविवागो हवइ रुद्दो' इत्यपि ॥

मुक्तम् ? इत्यत्रोच्यते—एतानि सर्वाण्यपि शास्त्रान्तरीयाणि लक्षणानि प्रायेण तत्तद्गुणस्थानकस्याङ्गभूतानि वर्त्तन्ते, चित्रस्य वर्णकशुद्धिविचित्रवर्णतारेखाशुद्धिनानाभावप्रतीतवत् । प्रकृतगुणाः पुनः सर्वधर्मस्थानानां साधारणभूमिकेव चित्रप्रकाराणामिति सूक्ष्मबुद्ध्या परिभावनीयम् । वक्ष्यति च—"दुविहंपि धम्मरयणं तरइ नरो घेत्तुमविगलं सो उ । जस्सेगवीसगुणरयणसंपया सुत्थिया अत्थि ॥ १ ॥" अत एवाह—

**सइ एयंमि गुणोहे संजायइ भावसावयत्तंपि । तस्स पुण लक्खणाइं एयाइं भणंति सुहगुरुणो ॥३२॥**

'सति' विद्यमाने 'एतस्मिन्' अन्तरोक्त 'गुणौघे' जघन्यमध्यमोत्कृष्टरूपे 'संजायते' संभवति 'भावश्रावकत्वमपि' दूरे तावद्भावयतित्वमित्यपेरर्थः । आह किमन्यदपि श्रावकत्वमस्ति ? येनैवमुच्यते भावश्रावकत्वमिति, सत्यम्, इह जिनागमे सर्वेऽपि भावाश्चतुर्विधा एव, 'नामस्थापनाद्रव्यभावैस्तन्न्यासः' (त० १ । ५ । ) इति वचनात् । तथा हि— नामश्रावकः सचेतनाचेतनस्य पदार्थस्य यच्छ्रावक इति नाम क्रियते । स्थापनाश्रावकश्चित्रपुस्तकर्मादिगतः । द्रव्यश्रावको ज्ञशरीरभव्यशरीरव्यतिरिक्तो देवगुरुतत्त्वादिश्रद्धानविकलः, तथाविधजीविकाहेतोः श्रावकाकारधारकः । भावश्रावकस्तु—"श्रद्धालुतां श्राति शृणोति शासनं दानं वपेदाशु वृणोति दर्शनम् । कृन्तत्यपुण्यानि करोति संयमं तं श्रावकं प्राहुरमी विचक्षणाः ॥ १ ॥" इत्यादिश्रावकशब्दार्थधारी यथाविधिश्रावकोचितव्यापारपरायणो वक्ष्यमाणः, स चेहाधिकृतः । शेषत्रयस्य यथाकथंचिदेव भावादिति । नन्वागमेऽन्यथा श्रावकभेदाः श्रूयन्ते । यदाह स्थानाङ्गम्—"चउव्विहा सावगा

१ " सर्वधर्माणाम्" इत्यपि ॥ २ अन्यत्र "धनम्" इति । ३ 'समणोवासगा' इत्यपि ॥

पन्नत्ता । तं जहा— अम्मापिइसमाणे १, भाइसमाणे २, मित्तसमाणे ३, सवत्तिसमाणे ४ । अहवा चउव्विहा सावगा पन्नत्ता । तं जहा—आयंसमाणे १, पडागसमाणे २, खाणुसमाणे ३, खरंटसमाणे ४ । एते च साधूनाश्रित्य द्रष्टव्याः । ते चामीषां चतुर्णां मध्ये कस्मिन्नवतरन्ति ? इति उच्यते,—व्यवहारनयमतेन भावश्रावका एवैते, तथाव्यवह्रियमाणत्वात् । निश्चयतस्तु खरण्टसपत्नीसमानौ मिथ्यादृष्टिप्रायौ द्रव्यश्रावकौ । शेषास्तु भावश्रावकाः । तथा हि तेषां स्वरूपमेवमागमे व्याख्यायते—"चिंतइ जइकज्जाइं न दिट्ठखलिओवि होइ निन्नेहो । एगंतवच्छलो जइजणस्स जणणीसमो सड्ढो ॥ १ ॥ हियए ससिणेहो च्चिय मुणीण मंदायरो विणयकम्मे । भाइसमो साहूणं पराभवे होइ सुसहाओ ॥ २ ॥ मित्तसमाणो माणा ईसिं रूसइ अपुच्छिओ कज्जे । मन्नंतो अप्पाणं मुणीण सयणाउ अब्भहियं ॥ ३ ॥ थद्धो छिद्दप्पेही पमायखलियाणि निच्चमुच्चरइ । सड्ढो सवत्तिकप्पो साहुजणं तणसमं गणइ ॥ ४ ॥" तथा द्वितीयचतुष्के—"गुरुभणिओ सुत्तत्थो बिंबिज्जइ अवितहो मणे जस्स । सो आयंससमाणो सुसावओ वन्निओ समए ॥ १ ॥ पवणेण पडागा इव भामिज्जइ जो जणेण मूढेण । अविणिच्छियगुरुवयणो सो होइ पडाइयातुल्लो ॥ २ ॥ पडिवन्नमसग्गाहं न मुयइ गीयत्थसमणुसिट्ठोवि । थाणुसमाणो एसो अपओसी मुणिजणे णवरं ॥ ३ ॥ उम्मग्गदेसओ निन्हवोसि मूढोसि मंदधम्मोसि । इय संमंपि कहंतं खरंटए सो खरंटसमो ॥ ४ ॥ जह सिढिलमसुइदव्वं छुप्पंतं पिहु नरं खरंटेइ । एवमणुसासगं पिहु दूसिंतो भन्नइ खरंटो ॥ ५ ॥ निच्छयओ मिच्छत्ती खरंटतुल्लो सवत्तितुल्लोऽवि । ववहारओ उ सड्ढा जयंति जं जिणगिहाईसु ॥ ६ ॥" इत्यलमतिप्रसङ्गेन । 'तस्य' पुनर्भावश्रावकस्य 'लक्षणानि' चिह्नानि 'एतानि' वक्ष्यमाणानि 'भणंति' अभिदधति 'शुभगुरवः' संविग्नसूरयः । इति गाथार्थः ॥ ३२ ॥

तान्येव लिङ्गान्याह—

**कयवयकम्मो[१] तह सीलवं[२] च गुणवं[३] च उज्जुववहारी[४] । गुरुसुस्सूसो पवयणकुसलो खलु सावगो भावे ॥३३॥**

कृतमनुष्ठितं व्रतविषयं कर्म कृत्यं भणिष्यमाणं येन स 'कृतव्रतकर्मा'१ 'तथा शीलवान्' अपि व्याख्यास्यमानस्वरूपः२ 'गुणवान्' विवक्षितगुणोपेतः३ । चकारः समुच्चये भिन्नक्रमश्च । ततः 'ऋजुव्यवहारी च' शरलमनाश्च ४ 'गुरुशुश्रूषः' गुरुसेवाकारी५ । 'प्रवचनकुशलः' जिनमततत्त्ववित् ६ । 'खलुः' अवधारणे । एवंविध एव श्रावको भवति । 'भावे' भावविषये भावश्रावकः । इति गाथाक्षरार्थः ॥ ३३ ॥

भावार्थं स्वत एव विभणिषुः 'यथोद्देशं निर्देशः' इति न्यायात् कृतव्रतकर्माणमादावाह—

**तत्थायन्नणजाणणगिण्हणपडिसेवणेसु[३] उज्जुत्तो । कयवयकम्मो चउहा भावत्थो तस्सिमो होइ ॥ ३४ ॥**

'तत्र' तेषु षट्सु लिङ्गेषु मध्ये कृतव्रतकर्मा चतुर्धा भवतीति संबन्धः । आकर्णनं श्रवणं१, ज्ञानमवबोधो२, ग्रहणं प्रतिपत्तिः३, प्रतिसेवनं सम्यक्पालनम्४ । सर्वेषामपि द्वन्द्वः, तेषु व्रतानामिति प्रक्रमात् गम्यते । 'उद्युक्तः' उद्यमवान् 'भावार्थः' ऐदंपर्यन्तस्य चतुर्विधस्याप्ययमासन्नभणिष्यमाणो 'भवति' इति व्यक्तम् । इति गाथार्थः ॥ ३४ ॥

भावार्थमेवाह—

**विणयबहुमाणसारं गीयत्थाओ करेइ वयसवणं । भंगयभेयइयारे[३] वयाण सम्मं वियाणाइ ॥ ३५ ॥**

विनयोऽभ्युत्थानादिः । उक्तं च—"अब्भुट्ठाणंजलीकरणं तहेवासणदायणं । गुरुभत्तिभावसुस्सूसा विणओ सो वियाहिओ ॥ १ ॥" बहुमानो मानसः प्रीतिविशेषः । तदुक्तम्—"भावेण अणुदिनं चिय एस गुरू पंडिओ महप्पा य । इय माणसपरिणामो बहुमाणो माणणिज्जेसु ॥ १ ॥" ताभ्यां सारं प्रशस्तं यथा भवत्येवं व्रतश्रवणं करोतीति योगः । इह चत्वारो भङ्गाः—कश्चिद्धूर्त्तो विनयमारं वन्दनादिदानतः शृणोति परिज्ञानार्थी, न पुनर्व्याख्यातरि बहुमानवान् भवति, कर्मगुरुत्वात् १। अन्यस्तु बहुमानवान् भवति न विनयं प्रयुङ्क्ते, शक्तिविकलत्वात्, स च ग्लानादिः २। अन्यस्तु प्रत्यासन्नकल्याणो द्वाभ्यां समेतः शृणोति ३। कश्चिद्गुरुतरकर्मा द्वितयमपि परिहरति शृणोति च, न च तस्मै गुरोरप्यागमानुसारिप्रवृत्तेः कथयितुं युक्तम् ४। यत एवमागमः—"चत्तारि अवायणिज्जा पन्नत्ता । तंजहा—अविणीए १, विगयपडिबद्धे २, अविओसियपाहुडे ३, पवलकोवमाई ४ ।" तहा—"ओहेणवि उवएसो आएसेणं विभागसो देओ । नाणाइवुड्डिजणओ महुरगिराए विणीयस्स ॥ १ ॥" जओ—"अविणीयमंमाणवेंतो किलिस्सई भासई मुसं तह य । घंटालोहं नाउं को कडकरणे पवत्तेज्जा ॥ १ ॥" अतो विनयबहुमानमारं व्रतश्रवणं करोतीति प्रकृतम् । कुतः सकाशात् ? इत्याह—गीतार्थात् । तत्र—"गीयं भन्नइ सुत्तं अत्थो तस्सेव होइ वक्खाणं । गीएण य अत्थेण य संजुत्तो होइ गीयत्थो ॥ १ ॥" तस्मादन्यस्यान्यथाऽपि प्ररूपणासंभवेन विपरीतबोधहेतुत्वादिकं व्रतकर्म १ । भङ्गकभेदातिचारान् 'व्रतानाम्' अनुव्रतादीनां सम्यग् विजानाति । तत्र भङ्गकाः—"दुविहं तिविहेण पढमो दुविहं दुविहेण बीयओ होइ । दुविहं एगविहेणं एगविहं चेव तिविहेणं ॥ १ ॥ एगविहं दुविहेणं एक्केक्कविहेण छट्ठओ होइ । उत्तरगुणसत्तमओ अविरओ चेव अट्ठमओ॥२॥" एते प्रत्येकं पट्ट् पड्ड् भवन्ति । द्विकसंयोगादिप्रकारेण चानेकधा । यत आह—"पंचण्हणुव्वयाणं एक्कगदुगतिगचउक्कपणएहिं । पंचग दस दस पण एक्कगो य संजोगनायव्व ॥ १ ॥ तत्थेक्कगसंजोगे पंचण्हवयाण तीसइं भंगा । दुगसंजोगाण दसण्ह तिन्नि सट्ठा सया होंति ॥ २ ॥ तिगजोगाण दसण्हं भंगसया एगवीसई सट्ठा । पणचउसंजोगाणं चउसट्ठिसयाणि असिआणि ॥ ३ ॥ सत्तत्तरीसयाइं छसत्तराइं च पंचसंजोगे । उत्तरगुणअविरयमेलियाण जाणाहि सव्वग्गं ॥ ४ ॥ सोलस चेव सहस्सा अट्ठसया चेव होंति अट्ठहिया । एसो उ सावगाणं वयगहणविही समासेण ॥ ५ ॥" एवमेकैकव्रतस्य नवभङ्गककल्पनया तथैकविंशतिकल्पनयैकोनपञ्चाशत्कल्पनया च विचार्यमाणा अनेकधा श्रावकव्रतभङ्गका भवन्ति । ते चावहितैरक्षादिसंचारणयाऽवगन्तव्याः । तन्मात्रिका चेयम्—"तिन्नि तिया तिन्नि दुया तिन्नेक्कक्का य हुंति जोगेसु । तिदुएगं तिदुएगं तिदुएगं चेव करणाइं ॥ १ ॥" स्थापनाङ्काः—

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ३ | ३ | ३ | २ | २ | २ | १ | १ | १ |
| ३ | २ | १ | ३ | २ | १ | ३ | २ | १ |

एते तावन्नव भङ्गाः । उक्तं च—"न कुणइ न कारवेई करंतमन्नंपि नाणुजाणाइ । मणवइका एणेक्को एवं सेसेवि जाणेज्जा ॥ १ ॥" एते एवानुमतिप्रत्याख्यानवदादित्रिकविकलाः पूर्वोक्ताः पड्ड् भवन्ति । एतेषामेवानुमतिपरिहारेणैकविंशतिः—"तत्थ पढमपए एक्को भंगो, बीए तिन्नि, तइए तिन्नि, चउत्थे दो, पंचमछट्ठेसु छ छ भंगा लब्भंति सव्वेवि एकविंसा ।" तथैकोनपञ्चाशदेवं भवन्ति—"पढमेगो तिन्नि तिया दो नवगा तिन्नि तह य दो नवगा । अउणापन्नं भंगा सव्वे ते हुंति नायव्वा ॥१॥" एवमनेकधा व्रतभङ्गान् जानाति । तथा भेदान् सूक्ष्मबादरसंकल्पजारम्भजसापराधनिरपराधादिरूपान् जानाति । तथाऽतिचारान् वधबन्धछविच्छेदादीन् जानाति । व्रतानामनुव्रतादीनां सम्यक् सुविचारितान् विशेषेण जानातीति द्वितीयव्रतकर्म २ ॥ ३५ ॥

अथ तृतीयमाह—

**गिण्हइ गुरुण मूले इत्तरमियरं व कालमह ताइं । आसेवइ थिरभावो आयंकुवसग्गसंगेवि ॥ ३६ ॥**

'गृह्णाति, प्रतिपद्यते 'गुरूणां' आचार्यादीनां 'मूले' समीपे । यतोऽभाणि—"उवउत्तो गुरुमूले संविग्गो इत्तरं व इयरं वा । अणुदिट्ठयमणुसरंतो पालेइ विसुद्धपरिणामो ॥ १ ॥" आह स श्रावको देशविरतिपरिणामे सति व्रतानि प्रतिपद्यतेऽसति वा ? किं चातो यद्याद्यः पक्षः किं गुरुसमीपगमनेन ? साध्यस्य सिद्धत्वात् प्रतिपद्यापि व्रतानि देशविरतिपरिणाम एव साध्यः, स चास्य स्वत एव सिद्ध इति गुरोरप्येवं परिश्रमयोगान्तरायदोषपरिहारादिति । द्वितीयश्चेत्, तर्हि द्वयोरपि मृषावादप्रसङ्गात् परिणामाभावे पालनस्याप्यसंभवात् । तदेतत्सकलं परोपन्यस्तमचारु, उभयथाऽपि गुणोपलब्धेः । तथा हि–सत्यपि देशविरतिपरिणामे गुरुसमीपप्रतिपत्तौ तन्माहात्म्यान्मया सद्गुणस्य गुरोराज्ञाऽऽराधनीयेति प्रतिज्ञानिश्चयाद्व्रतेषु दृढता जायते, जिनाज्ञा चाराधिता भवतीति । उक्तं च—"गुरुसक्खिओ हु धम्मो संपुन्नविही कया इय विसेसो । तित्थयराणं आणा साहुसमीवंमि वोसिरओ ॥ १ ॥" गुरुदेशनाश्रवणोद्भूतकुशलतराध्यवसायात्कर्मणामधिकतरः क्षयोपशमः स्यात् । तस्माच्चाल्पं व्रतं प्रतिपित्सोरपि बहुतमव्रतप्रतिपत्तिरुपजायते । इत्यादयोऽनेके गुणा गुरोरन्तिके व्रतानि गृह्णतः संभवन्ति । तथाऽसन्नपि विरतिभावो गुरूपदेशश्रवणान्निश्चयसारपालनातो वाऽवश्यंभावी'

---

१ अन्यत्र "मालवंतो" इत्यस्ति ॥

सरलहृदयस्येति द्वयोरपि गुरुशिष्ययोर्मृषावादाभाव एव गुणलाभात् । शठाय पुनर्न देयान्येव गुरुणा व्रतानि । छद्मस्थतया पुनरलक्षितसाध्यस्य शठस्यापि दाने गुरोः शुद्धपरिणामत्वाददोष एव । न चैतत् स्वमनीषिकयोच्यते । यत आह—"संतम्मिवि परिणामे गुरुमूलपवज्जणंमि एस गुणो । दढया आणाकरणं कम्मक्खओवसमवुड्ढी अ ॥ १ ॥ इय अहिए फलभावे न होइ उभयपलिमंथदोसोवि । तयभावम्मिवि दोण्हवि न मुसावाओवि गुणभावा ॥ २ ॥ तग्गहणओ च्चिय तओ जायइ कालेण असढभावस्स । इयरस्स न देयं चिय सुद्धो छलिओवि जइ असढो ॥ ३ ॥" कृतं विस्तरेण । अत्र पुनरपि कश्चिदाह—विस्तरभीरुमपि भदन्तं किंचित् प्रस्तावादायातं पृच्छामि । संप्रति दुष्षमादोषाद्गुणवन्तो गुरवो नोपलभ्यन्ते, ततः स्थापनाचार्यसमीपे श्रावको व्रतं प्रतिपद्यतां वा मा वा ? गुरुराह—सौम्य ! कथं नाम गुरवो नोपलभ्यन्ते ? दूरदेशवर्त्तित्वादत्यन्तासंभवाद्वा ? यदि दूरदेशवर्त्तित्वात्तदा तदर्थिनस्तत्रैव गन्तुमुचितं धर्मार्थित्वस्यान्यथानुपपत्तेः । अथात्यन्तासंभवोऽनुपलम्भहेतुः । सोऽतितरामनुचितो वक्तुं सूत्रविरोधात् । उक्तं च—"न विणा तित्थं नियंठेहिं नातित्था य नियंठया । छक्कायसंजमो[1] जाव ताव अणुसज्जणं[2] दोण्हं ॥ १ ॥" द्वयोः सामायिकच्छेदोपस्थापनीययोर्वकुशकुशीलयोर्वा । अथागमविरोधभयान्नो अत्यन्ताभावमभ्युपगच्छन्ति भवन्तः । किं तु सन्तोऽपि क्वापि वयं नोपलभामह इति भवतां मतमित्यपि महाधृष्टवष्टोत्तरम् (?) यतः शतशः पञ्चमहाव्रतधारिणः, पञ्चसमितिप्रधानाः, त्रिगुप्तिपालनपराः, कालोचितयतनावन्तः, सततं सिद्धान्तामृतपानलालसाः, कुग्राहाग्रहविनिर्मुक्तमानसाः समुपलभ्यन्त एव महा-

१ 'संजओ' इत्यपि । २ 'अणुसज्जणा' इत्यपि ॥

मुनयः । तत्कथं नोपलभ्यन्त मध्यस्थधार्मिकैः ? इति सतोऽप्यनुपलम्भो महत् दृष्टेर्दूषणम् । सति च तस्मिन् किं व्रतग्रहणेन ? इति । तथा गुरुमूले प्रतिपन्नमूलगुणस्य साधोरिव श्रावकस्यापि तद्विरहे स्थापनागुरुरुपदिष्टः । तथा चाह—"गुरुविरहम्मि य ठवणा भणिया समयंमि पुव्वसूरीहिं । आउट्टिदप्पविरओ अपमाओ चेव कप्पम्मि ॥ १ ॥" न चैकान्तेनासंयुक्तस्यासतो वा विरहसंभव इति, तस्माद् व्यवहारनयमाश्रित्योच्यते, कालोचितक्रियावतो गीतार्थस्य निःस्पृहमतेः सर्वसत्त्ववत्सलस्य गुरोरन्तिके गृही महाव्रतानामिवाणुव्रतानां ग्रहणं करोति न स्थापनागुरोरिति स्थितम् । तत्पुनः 'इत्वरं' चातुर्मासादिप्रमितं 'इतरं' यावत्कथिकं वा कालं यावत् 'अथ' परिज्ञानादनन्तरं 'तानि' इति प्रस्तुतव्रतानि, इति तृतीयं व्रतकर्म ३ । 'आसेवते' सम्यक् परिपालयति 'स्थिरभावः' निष्प्रकम्पमनाः । आतङ्को रोगः, उपसर्गो दिव्याद्युपद्रवः, तयोः सङ्गेऽपि संपर्केऽपि सति । तत्रातङ्कसङ्गे आरोग्यद्विजवत्, उपसर्गसङ्गे कामदेवश्रावकवत् । इति गाथार्थः ॥ ३६ ॥

आरोग्यद्विजचरितमिदम्—

उज्जेणीए नयरीए देवगुत्तस्स माहणस्स नंदाए भारियाए पुत्तो अहेसि । सो पुण कुओवि पुव्वदुक्कयाओ रोगेहिं न मुंचइत्ति अकयनामो रोगो चेव जणे पसिद्धो । अन्नया ईसरनामोऽणगारो भिक्खंतो तेसिं गिहमणुपत्तो । तओ माहणेण दारयं पाएसु पाडिऊण विन्नत्तो । भयवं ! तुब्भे सव्वं जाणह ता कारुन्नमवलंबिय कहेहि एयस्स रोगोवसमोवायं । साहुणा भणियं, न समुयाणंतेहिं[1] कहा कीरइ । तओ तेहिं मज्झण्हसमए उज्जाणं गंतूण वंदिओ पुच्छिओ य । साहुणा भ-

१ दृष्टिदूषणे । २ भिक्षाश्रमद्भिः ॥

ण्णइ—"पावाउ होइ दुक्खं तं पुण धम्मेण नासई नियमा । जलणपलित्तं गेहं विज्झाइ जओ जलोहेण ॥ १ ॥ धम्मेण सुचिन्नेणं सिग्घं नासंति सयलदुक्खाइं । एयारिसाइं नियमा न य हुंति पुणो परभवेवि ॥ २ ॥" एवं पबंधदेसणाए पडिबुद्धा दोवि समणोवासगा जाया । विसेसओ वडुगो दढधम्मयाए भावणासारं रोगमहियासेइ, सावज्जं तिगिच्छंपि न कारवेइ । अन्नया दढधम्मोत्ति पसंसिओ देविंदेण । तमसद्दहंता वेज्जरूवेण समागया दुवे देवा भणिउं पवत्ता । अम्हे एयं वडुयं पन्नवेमो, जइ अम्हेहिं भणियं किरियं करेइ । सयणेहिं भणियं, केरिसी सा किरिया ? पुव्वण्हे महुअवलेहो, पच्छिमण्हे जुन्नासवपाणं, भोयणं निसाए, समक्खणं कूरं, जलयराइतिविहमंसमोसहेहिं सद्धिं भोत्तव्वंति । पडिभणियं वडुएण, एएसिमेगंपि न करेमि, वयभंगभयाओ । विज्जेहिं भणियं, 'सरीरं धम्मसाहणं' जेण वा तेण वा पओगेण तं पउणिज्जइ, वयभंगोवि पच्छित्ताणुचरणेण सुज्झइ चेव, इच्चाइविचित्तजुत्तीहिं भणिओ सयणेहिं रन्नावि । जाहे न पडिवज्जइ ताहे तुट्ठेहिं पयडीहोऊण पसंसिओ देवेहिं, नीरोगसरीरो कओ । आणंदिओ सयणवग्गो, सेसलोगो य । अहो ! धम्ममाहप्पंति पडिबुद्धाणेगे पाणिणो । तप्पभिइं च आरोगदिओ से नामं जायं । संखेवओ भणियमारोग्गदियचरियं । विशेषतः पृथ्वीचन्द्रचरितादवसेयम् ॥

एवमातङ्कसङ्गेऽपि स्थिरचित्तः श्रावकः स्यादिति ४ । तथा कामदेवचरितं प्रसिद्धमेवेति न भण्यते ॥

उक्तः कृतव्रतकर्म १ । अथ शीलवन्तमभिधित्सुराह—

आयय[1]णं खु निसेवइ वज्जइ परगेहपविसणमकज्जे[2] । निच्चमणु[3]ब्भडवेसो न भणइ सवियार[4]वयणाइं ॥३७॥

**परिहरइ बालकीलं साहइ कज्जाइँ महुरनीईए । इय छव्विहसीलजुओ विन्नेओ सीलवंतोत्थ ॥ ३८ ॥**

'आयतनं' धार्मिकजनमीलनस्थानम् । उक्तं च—"जत्थ साहम्मिया बहवे सीलवंता बहुस्सुया । चरित्तायारसंपन्ना आययणं तं वियाणाहि ॥ १ ॥" 'खुः' अवधारणे, प्रतिपक्षप्रतिषेधार्थः । ततश्चायतनमेव निषेवते भावश्रावको, नानायतनमिति योगः । "न भिल्लपल्लीषु न चौरसंश्रये न पार्वतीयेषु जनेषु संवसेत् । न हिंस्रदुष्टाशयलोकसन्निधौ कुसङ्गतिः साधुजनस्य निन्दिता ॥ १ ॥" तथा—"दंसणनिब्भेयणिया चरित्तनिब्भेयणी य अणवरयं । जत्थ पयट्टइ विगहा तमणाययणं महापावं ॥ १ ॥" प्रथमशीलम् १ । तथा वर्जयति 'परगृहप्रवेशनं' अन्येषां मन्दिरेषु गमनं 'अकार्ये' कार्याभावे सति, नष्टविनष्टादावाशङ्कासंभवात् । एत्थ सामायारी—"सावगो जइवि चियत्तंतेउरपरघरपवेसो वण्णिज्जइ तहावि तेण एगागिणा पुरिसरहिए परगिहे न पविसियव्वं । कज्जेवि परिणयवओ सहाओ घेतव्वो" इति द्वितीयं शीलम् २ । तथा 'नित्यं' सदा 'अनुद्भटवेषः' अनुल्वणनेपथ्यो भवति भावश्रावको न विङ्गप्रायनेपथ्यः । तथा हि—"लंखस्स व परिहाणं गसइ व अंगं तहंगिया गाढा । सिरवेढो ढमरेणं वेसो एसो सिडंगाणं ॥ १ ॥ सिहिणाण मग्गदेसो उग्घाडो नाहिमंडलं तह य । पासा य अद्धपिहिया कंचुयओ एस वेसाणं ॥ २ ॥" इहैव तदाकूतम्—पुरुषाणां स्त्रीणां च नानादेशेषु नानारूपाणि नेपथ्यानि भवन्ति, ततो यद्यत्रानिन्दितं शिष्टाभीष्टं च, तच्छ्रावकश्राविकाभिर्नेपथ्यं विधेयमिति । अन्ने भणंति—"कुलदेसाण विरुद्धो वेसो रन्नोवि कुणइ नो सोहं । वणियाण विसेसेणं विसेसओ ताण इत्थीणं ॥ १ ॥ संतलयं परिहाणं झलं व चोलाइयं च मज्झिमयं । सुसिलिट्ठमुत्तरीयं धम्मं लच्छिं जसं कुणइ ॥ २ ॥ परिहाणमणुब्भडचलणकोडिमज्झायमणुसरंतं तु परिहाणमक्कमंतो कंचुयओ होइ सुसिलिट्ठो ॥ ३ ॥" इत्याद्येतदपि सङ्गतमेव, किं तु क्वचिदेव देशे कुले वा घटते । श्रावकास्तु नानादेशेषु कुलेषु च संभवन्ति, तस्माद्देशकुलाविरुद्धो वेषोऽनुद्भट इति व्याख्यानं व्यापकमिह सङ्गतम् । इति तृतीयं शीलम् ३ । तथा 'न भणति' न ब्रूते सविकाराणि रागद्वेषविकारोत्पत्तिहेतुभूतानि वचनानि, वाचस्तत्परीहास्यादिभिः परिवादशीलतया, मुखरतया वा । तत्र रागोत्पादकानि शृङ्गारसाराणि । यथा—"राज्ये सारं वसुधा वसुंधरायां पुरं पुरे सौधं । सौधे तल्पं तल्पे वराङ्गनामङ्गसर्वस्वम् ॥ १ ॥ दधिशीताम्बुताम्बूलपुण्यपण्याङ्गनाजनैः । असारोऽप्येष संसारः सारवानिव लक्ष्यते ॥ २ ॥" तथा—"प्रियादर्शनमेवास्तु किमन्यैर्दर्शनान्तरैः । प्राप्यते यत्र निर्वाणं सरागेणापि चेतसा ॥ १ ॥" द्वेषोदयकारणानि—"रे दासीसुय ! माईय माया ते छिंछई जणपसिद्धा । खरफरुसवयणतविओ मरेज्ज मारेज्ज वा कोइ ॥ १ ॥ एसो चोरो जारो निही य लद्धो इमेण निब्भंतो । एसो रायविरोही मंसक्खाई इमो अहवा ॥ २ ॥ पाविट्ठा रायाणो दसवेससमत्ति जं सुई भणियं । रायगुरू सुरपाई दासीए पई गुरू कहणु ॥ ३ ॥ एमाईवयणाइं फरुसाइ परस्स अप्पणो चेव । उवघायकुलक्खयकारणाइं विगियाइं सव्वाइं ॥ ४ ॥" तथा धर्मविरुद्धान्यपि न ब्रूते भावश्रावकः । तद्यथा—"हत्थागया इमे कामा कालिया जे अणागया । को जाणइ परे ? लोए अत्थि वा नत्थि वा पुणो ॥ १ ॥ चतुर्थं शीलम् ४ ॥ ३७ ॥ तथा 'परिहरति' नासेवते 'बालक्रीडां' बालिशजनविनोदव्यापाराम् । उक्तं च—"चउरंगसारिपट्टियवट्टाई लावयाइजुद्धाई । पम्होत्तरजमगाई पहेलियाईहिं नो रमइ ॥ १ ॥" इति पञ्चमशीलम् ५ । तथा 'साधयति' निष्पादयति 'कार्याणि' प्रयोजनानि 'मधुरनीत्या' सामपूर्वकम् । सौम्य ! सुन्दर ! एवं कुरु, एवं क्रियते, इत्थं कृतं सुकृतं स्यात्, इति शिक्षादानेन परिजनं कर्मकरादिलोकं मधुरगिरा प्रवर्त्तयति । यतः—"प्रियवाक्यप्रदानेन सर्वे तुष्यन्ति जन्तवः । तस्मात्तदेव वक्तव्यं किं वचनेऽपि दरिद्रता ॥ १ ॥ अशिक्षितात्मवर्गेण म्लानिं याति यतः प्रभुः । अतः शिक्षाः प्रदातव्या प्रत्यहं मृदुभाषया ॥ २ ॥" तथा—"स्वाधीने माधुर्ये मधुराक्षरसंभवेषु वाक्येषु । किं नाम सत्त्ववन्तः पुरुषाः परुषाणि भाषन्ते ॥ १ ॥" अन्यैरप्युक्तम्—"क्षमी यत्कुरुते कार्यं न तत्कोपवशंगतः । कार्यस्य साधिनी प्रज्ञा सा च क्रुद्धस्य नश्यति ॥ १ ॥" इति । मतान्तरे दुराराध्यताभिधानमेतत् षष्ठं शीलम् ६ । भावश्रावकस्य शीलान्तरव्युदासेन शीलवन्तमुपसंहरन्ति । इत्युपदर्शितषड्विधशीलयुक्तो विज्ञेयः, शीलवान् 'अत्र' श्रावकविचारे । इति गाथाद्वयार्थः ॥ ३८ ॥

एतदेव शीलं गुणदोषोपदर्शनद्वारेण भावयन्नाह—

**आययणसेवणाओ दोसा झिज्जंति वड्ढइ गुणोहो । परगिहगमणंपि कलंकपंकमूलं सुसीलाणं ॥ ३९ ॥**
**सहइ पसंतो धम्मी उब्भडवेसो न सुंदरो तस्स । सवियारजंपियाइं नूणमुईरंति रागग्गिं ॥ ४० ॥**
**बालिसजणकीलावि हु लिंगं मोहस्सणत्थदंडाओ । फरुसवयणाभिओगो न संगओ सुद्धधम्माणं ॥ ४१ ॥**

आयतनमुक्तस्वरूपं, तस्य सेवनादुपासनात् 'दोषाः' मिथ्यात्वादयो 'हीयन्ते' हानिमुपयान्ति । 'वर्धते' वृद्धिमुपैति 'गुणौघः' ज्ञानादिगुणकलापः । तथा हि—"सन्तप्तेऽयसि[1] संस्थितस्य पयसो नामापि नो दृश्यते मुक्ताकारतया तदेव नलिनीपत्रस्थितं व्यज्यते । स्वातौ सागरशुक्तिमध्यपतितं तज्जायते मौक्तिकं प्रायेणाधममध्यमोत्तमगुणः संवासतो जा-

१ 'सन्तप्तायसि' इत्यपि ॥

यते ॥ १ ॥" 'परगृहगमनं' पूर्वोक्तं, अपिशब्द उपरि योक्ष्यते। 'कलङ्कपङ्कमूलं' अभ्याख्यानप्राप्तिहेतुः 'सुशीलानामपि' साधूनामपीति भावः। तथा ह्यागमे भिक्षार्थमपि गतस्य साधोरुपवेशनं निषिद्धम्। यतोऽवाचि—"गोयरग्गपविट्ठस्स निस्सेज्जा जस्स कप्पइ। इमेरिसमणायारं आवज्जइ अबोहियं ॥ १ विवत्ती बंभचेरस्स पाणाणं च वहे वहो। वणीमगपडिग्घाओ पडिकोहो अगारिणं ॥ २ ॥ अगुत्ती बंभचेरस्स इत्थिओ वावि संकणा। कुसीलवड्ढणं ठाणं दूरओ परिवज्जए ॥ ३ ॥" श्रावकस्तु सुतरां शङ्कास्थानं स्यात्। अवश्येन्द्रियत्वाद्व्रतहानिं चाप्नुयात्। उक्तं च—"सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेन्द्रियाणां तावल्लज्जां विधत्ते विनयमपि समालम्बते तावदेव। भ्रूचापाकृष्टमुक्ताः श्रवणपथयुषो नीलपक्ष्माण एते यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतन्ति ॥ १ ॥" तथा 'सहइ' इति शोभते 'प्रशान्तः' प्रशान्तवेषो 'धर्मी' इति धर्मवान् धार्मिकः श्रावको यतिर्वा, अतः कारणात् 'उद्भटवेषः' रागान्धजघन्यजननेपथ्यो 'न सुन्दरो' नैव शोभाकारी 'तस्य' धार्मिकस्य स हि तेन सुतरामुपहासस्थानं स्यात्। 'नाकामी मण्डनप्रियः' इति लोकोक्तेर्विशेषतो योषिद्विधवा च। भणितं च केनापि—"लन्होच्छी सहालं जुत्तं मायावित्तहं करइ न वुत्तउ। पसरह जाइवियालह आवइ एह नारि महु मणह न भावइ ॥ १ ॥" तथा 'सविकारजल्पितानि' सश्रृङ्गारभणितानि 'नूनं' निश्चितं 'उदीरयन्ति' उद्दीपयन्ति रागाग्निम्। अत एवोक्तम्—"जं सुणमाणस्स कहं सुट्ठुयरं जलइ माणसे मयणो। समणेण सावएणवि न सा कहा होइ कायव्वा ॥ १ ॥" उपलक्षणं चैतत्—द्वेषानलमप्युदीरयन्ति कानिचित्। यदाह—"मम्मं कम्मं जम्मं तिन्निवि एयाइं मा हु पयडेज्जा। मा मम्मकम्मविद्धो मरेज्ज मारेज्ज वा कोइ ॥ १ ॥" तथा 'बालिशजनक्रीडाऽपि'वर्णितस्वरूपा 'हुः' अलङ्कारे। 'लिङ्गं' चिह्नं 'मोहस्य' अज्ञानस्य 'अनर्थदण्डत्वात्' निष्फलपापारम्भप्रवृत्तेः। तथा परुषवचनेन 'रे दरिद्र! दासीपुत्र!' इत्यादिनाऽभियोग आज्ञादानं 'न सङ्गतो' नोचितः 'शुद्धधर्माणां' प्रतिपन्नजिनपतिमतानां धर्महानिर्धर्मलाघवहेतुत्वात्। तत्र धर्महानिः—"फरुसवयणेण दिणतवं अहिक्खिवंतोवि हणइ मासतवं। वरिसतवं सवमाणो हणइ हणंतोऽवि सामन्नं ॥ १ ॥" इत्याद्याप्तवचनात्। धर्मलाघवं पुनरहो! महाधार्मिकाः, परपीडापरिहारिणः, सविवेकाश्च श्रावका यदेवं ज्वलदङ्गारोत्कराकारगिरो निगिरन्तीत्यादिलोकोपहासात्। तथा—"अप्रियमुक्ताः पुरुषाः प्रवदन्ते द्विगुणमप्रियं यस्मात्। तस्मान्न वाच्यमप्रियमप्रियं वा श्रोतुकामेन ॥ १ ॥" तथा—"विरज्यते परीवारो नित्यं कर्कशभाषिणः। परिग्रहे विरक्ते च प्रभुत्वं हीयते नृणाम् ॥ १ ॥" इत्याद्यैहिकानर्थाश्च परुषभाषिणां संभवन्ति। सर्वथा न शोभते जैनानां कषायानलोद्दीपनम्। उक्तं च—" जइ जलइ जलउ लोए कुसत्थपवणाहओ कसायग्गी। तं चोज्जं जं जिणवयणसलिलसित्तोवि पज्जलइ ॥१॥" अत एव भगवता महावीरेण महाशतकमहाश्रावकः सत्येऽपि परुषे जल्पिते प्रायश्चित्तं ग्राहितः॥३९॥४०॥४१॥

तत्संविधानकं चेदम्—

रायगिहे नयरे महासयगो गाहावई होत्था। तस्स अट्ठ हिरन्नकोडीओ निहीपउत्ताओ, अट्ठ वुड्ढिपउत्ताओ, अट्ठ वित्थरपउत्ताओ, अट्ठ वया दसगोसाहस्सिया। रेवइपमुहाओ तेरस भज्जाओ। रेवईए कोलघरियाओ अट्ठ हिरन्नकोडीओ निहाणपउत्तओ, अट्ठ वुड्ढिपउत्ताओ, वित्थरपउत्ताओवि अट्ठ, दस दस गोसाहस्सिया अट्ठ वया। सेसियाणं तिसुवि ठाणेसु एगेगा हिरन्नकोडी, एगेगो वओ दसगोसाहस्सिओ। एवं से अड्ढे दित्ते अपरिभूए बहूणं सेट्ठिसत्थवाहपमुहाणं सयणपरियणस्स मेढिभूए विहरइ। अन्नया भयवं महावीरे गामाणुगामं विहरमाणे तत्थ समणुपत्ते गुणसिलए उज्जाणे समोसढे रइयं देवेहिं समोसरणं। निग्गओ वंदणवडियाए सेणिओ राया नागरजणो महासयगो य। वंदिऊणोवविट्ठाण सव्वेसिं पारद्धा भगवया धम्मकहा। तंजहा—असारो संसारो जम्मजरामरणरोगसोगाइमहासत्तुसंतावपउरो। दुलहो जाइकुलरूवारोग्गसंगओ मणुयभावो। अणिच्चं जीवियं पहवइ। अविन्नायागमणो मच्चुमहारक्खसो। सव्वहा समत्थाणत्थसत्थवारणनिवारणमहामइंदे धम्मे चेव ओज्जमो काउमुचिओ सयन्नविन्नाणाणत्ति। एवमाइअमयनिस्संदसुंदरं जिणिंददेसणं सोऊण पडिवुद्धा बहवे पाणिणो, गहिओचिओचियधम्मा य गया नियनियट्ठाणेसु। महासयगोवि समत्तपवित्तचित्तो पंचाणुव्वयमूलं सत्तसिक्खावयसोहियं सावयधम्ममुवसंपज्जिऊण महानिहाणलाभाओवि अब्भहियपरिओसो पणमिऊण परमेसरं पत्तो नियमंदिरं। पइदिणवड्ढमाणपरिणामो पालिउं पवत्तो सावगधम्मं। इओ य सा रेवई गुरुकम्मयाए तस्संसग्गीए न नाम पडिवुद्धा। अवि य अहियवरं विसयलोला मज्जमंसरसगिद्धा य जाया। तओ अन्नया उग्घोसिए [1]अमाघाए तीए मंसमलभमाणीए भणियाऽभिओगपुरिसा। मम गोउलाओ दुवे कल्होडगे वहिऊण मंसमाणेह। तेहिवि तहेव कए पइदिणं दो दो कल्होडगे विणासाविउमारद्धा। अन्नया विसयगिद्धिविद्धिओ ताओ दुवालसवि सवत्तिओ विसप्पओगेण सत्थपओगेण य केणावि अविन्नाया [2]विणिवाएइ। तासिं संतियं हिरण्णसुवन्नाइ पडिगाहित्ता तुट्ठचित्ता विहरइ। सोवि महासयगो चोद्दसण्हं वासाणं पज्जंते जेट्ठसुयं कुडुंबे ट्ठवित्ता पोसहसालमणुपविसइ, उवासगपडिमाओ पडिवज्जइ। तमन्नया सा रेवई मज्ज-

१ 'अमारीए' इत्यपि। २ 'विणिघाएइ' इत्यपि ॥

मंसरममत्ता उवसग्गिउं पवत्ता । भणइ पाणवल्लह ! किमेइणा कट्ठाणुट्ठाणेण, एयं तुह सरीरं सोमालं सुहलालियं च, ता भुंजाहि ताव पुव्वज्जियधम्मफलं । मा अवहीरेहि भावाणुरत्तं किंकरीभावपत्तं ममं वराइणिंत्ति । तहवि अहियासिया तेण निच्चलचित्तेण उवसग्गा । फासियाओ एगारसवि उवासगपडिमाओ । पत्थावं जाणिऊण पडिवन्नमणसणं । तओ सुहभावणाभावणपरस्स कम्मखओवसमेण समुप्पण्णमोहिनाणं महासयगस्स । तेण य सो पुव्वओ लवणसमुद्दे जोयणसहस्सं जाणइ पासइ । एवं दाहिणेण पच्छिमेण य । उत्तरेण चुल्लहिमवंतं वासहरपव्वयं । अहे रयणप्पहाए लोलुयं नरयं जाणइ पासइ । अन्नया सा मज्जमंसपाणमत्ता पावा रेवईवि पुणो उवसग्गिउं पवत्ता । तओ किमेसा एरिसित्ति सवियक्केण पउत्तो महासयगेण ओही। नायं च तीए निसेसं चरियं। लक्खियं च नरयगइगामित्तं। तओ भणिया रेवई,पावे ! केत्तियमज्जवि पावमुवज्जेसि। गच्छसि तुमं सत्तरत्तंते अलसयवाहिपीडिया मरिऊण लोलुयनरयंमित्ति। तं च सोऊणावगयमया मरणभयाभिभूया कुविओ वाढमज्ज महासयगोत्ति अट्टवसट्टा गया एसा समंदिरं । तंमि दिणे भगवं महावीरो तत्थेव विहरइ । तओ गोयमसामिं समाइसइ, गच्छ गोयमा ! महासयगं सावगं भणाहि । न खलु कप्पइ समणोवासगाणं सच्चंपि परपीडाकरं भासं भासित्तए, विसेसओ ते उत्तमगुणट्ठाणट्ठियस्स कयभत्तपच्चक्खाणस्स । ता तुमं तस्स दुब्भासियस्स पायच्छित्तं पडिवज्जाहित्ति । तहत्ति पडिवज्जिऊण गोयमसामिणा भणिओ भगवंताएसं महासयगो । सोवि संवेगभरनिब्भरमणो भगवंतं वंदिऊण सम्ममालोएइ निंदइ गरहइ, भगवओ गोयमस्स समीवे पायच्छित्तं पडिवज्जिऊण कयसरीरपरिच्चाओ सोहम्मे कप्पे अरुणाभे विमाणे चउपलिओवमट्ठिईओ देवो समुप्पन्नो । संखेवओ भणियं महासयगचरियं । विसेसओ उवासगदसंगाओ नायव्वंति ॥

उक्तं द्वितीयं भावश्रावकलक्षणम् २ । अधुना तृतीयमभिधित्सुः संबन्धगाथामाह—

**जइवि गुणा बहुरूवा तहवि हु पंचहि गुणेहि गुणवंतो । इह मुणिवरेहि भणिओ सरूवमेसिं निसामेहि ॥**

'यदि' इत्यभ्युपगमे । अभ्युपगतं मयेदम् । गुणाः 'बहुरूपाः' बहुप्रकारा अक्षुद्रत्वादय औदार्यादयोऽन्येऽपि प्रियंवदतादयः । तथाऽपि पञ्चभिर्गुणैर्गुणवान् 'इह' श्रावकविचारे 'मुनिवरैः' गीतार्थगुरुभिः 'भणितः' उक्तः । 'स्वरूपं' स्वतत्त्वं 'एषां' गुणानां 'निशामय' आकर्णय, इति शिष्यप्रोत्साहनाय क्रियापदम् । प्रमादी शिष्यः प्रोत्साह्य श्रावणीय इति ज्ञापनार्थम् । इति गाथार्थः ॥ ४२ ॥

स्वरूपमेवाह—

**सज्झाए करणंमि य विणयम्मि य निच्चमेव उज्जुत्तो । सव्वत्थणभिनिवेसो वहइ रुइं सुट्ठु जिणवयणे ॥४३॥**

शोभनमध्ययनं स्वेनात्मना वाऽध्यायः स्वध्यायः स्वाध्यायो वा,तस्मिन्नित्यमुद्युक्त इति योगः १ । तथा 'करणे' अनुष्ठाने २, 'विनये' गुर्वाद्यभ्युत्थानादिरूपे 'नित्यं' सदैव 'उद्युक्तः' प्रयत्नवान् भवतीति प्रत्येकमभिसंबन्धात् । इति गुणत्रयम् ३ । तथा 'सर्वत्र' सर्वप्रयोजनेष्वैहिकामुष्मिकेषु, न विद्यतेऽभिनिवेशः कदाग्रहो यस्य सः 'अनभिनिवेशः' प्रज्ञापनीयो भवतीति चतुर्थो गुणः ४ । तथा 'वहति' धारयति 'रुचिं' इच्छां श्रद्धानं वा 'सुट्ठु' वाढं 'जिनवचने' पारगतगदिते ५ । इति गाथार्थः ॥ ४३ ॥

इत्थं गणनयोपदर्श्य गुणान् भावार्थकथनतः प्रदर्शयन्नाह—

**पढणाईसज्झायं वेरग्गनिबंधणं कुणइ विहिणा । तवनियमवंदणाईकरणंमि य निच्चमुज्जमइ ॥ ४४ ॥**
**अब्भुट्टाणाईयं विणयं नियमा पउंजइ गुणीणं । अणभिनिवेसो गीयत्थभासियं नन्नहा मुणइ ॥ ४५ ॥**
**सवणकरणेसु इच्छा होइ रुई सद्दहाणसंजुत्ता । एईए विणा कत्तो सुद्धी सम्मत्तरयणस्स ॥ ४६ ॥**

पठनमपूर्वश्रुतग्रहणम्, आदिशब्दात् प्रच्छनापरावर्त्तनाऽनुप्रेक्षाधर्मकथा गृह्यन्ते, पञ्चप्रकारमपि स्वाध्यायं करोति । किंविशिष्टम् ? 'वैराग्यनिबन्धनं' विरागताकारणम्, 'विधिना' विनयबहुमानप्रधानम् । तत्र पठनविनयः—"पर्यस्तिकामवष्टम्भं तथा पादप्रसारणम् । विकथां प्रवलं हास्यं वर्जयेद्गुरुसन्निधौ ॥ १ ॥" पठन्निति भावः । पृच्छाविनयः—"आसणगओ न पुच्छेज्जा नेव सेज्जागओवि य । आगम्मुक्कुडुओ संतो पुच्छेज्जा पंजलिपुडो ॥ १ ॥" परावर्त्तनविधिरयम्—"फासुयथंडिलइरियं पडिक्कंतो अहव गहियसामइओ । चलंचलपिहियमुहो सपयच्छेयं गुणइ सड्ढो ॥ १ ॥" अनुप्रेक्षा भावना तद्विधिः—"चारित्तसंपउत्तो सुकयसुयपरिग्गहो निराबाहं । भवविलया य पसत्थं भावेज्जा भावणाजालं ॥१॥" धर्मकथाविधिः—"सुद्धं धम्मुवएसं गुरुप्पसाएण सम्ममववुद्धं । सपरोवयारजणगं जोगस्स कहेज्ज धम्मत्थी ॥ १ ॥" तपोनियमवन्दनादीनां करणे समाचरणे, चकारात्कारणानुमोदनयोश्च, 'नित्यं' प्रतिदिनं 'उद्यच्छति' प्रयतते । तत्र तपोनशनादि द्वादशधा । तदुक्तम्—"अनशनमूनोदरता वृत्तेः संक्षेपणं रसत्यागः । कायक्लेशः संलीनतेति बाह्यं तपः षोढा ॥ १ ॥ प्रायश्चित्तध्याने वैयावृत्त्यविनयावथोत्सर्गः । स्वाध्याय इति तपः षट्प्रकारमाभ्यन्तरं भवति ॥ २ ॥" नियमा यतिविश्रामणोत्तरपारणककृतलोचनाद्युपभृतदानादिविषयाः । उक्तं च—"पहसंतगिलाणस्स य आगमगहणे य लोयकडसाहू । उत्तर-

पारणगम्मि य दाणं सुबहुप्फलं होइ ॥ १ ॥" वन्दना चैत्यगुरुविषया, आदिशब्दात्पूजनादिपरिग्रहः, तेषां करणे नित्यमुद्यच्छति गुणद्वयस्य भावने। इत्याद्यगाथार्थः ॥ ४४ ॥ तथा अभिमुखमुत्थानमभ्युत्थानं, तदादिर्यस्य सोऽभ्युत्थानादिः, आदिशब्दः स्वागतानेकभेदसंग्रहार्थः। ते च विनयसमाध्यध्ययनादवगन्तव्याः। तमित्थंभूतं विनयं 'नियमात्' निश्चयेन 'प्रयुङ्क्ते' विदधाति 'गुणिनां' आचार्यादीनां, विनयमूलत्वाद्गुणपरंपरायाः। आह च—"विनयफलं शुश्रूषा गुरुशुश्रूषाफलं श्रुतज्ञानम्। ज्ञानस्य फलं विरतिर्विरतिफलं चाश्रवनिरोधः ॥ १ ॥ संवरफलं तपोबलमथ तपसो निर्जराफलं दृष्टम्। तस्मात्क्रियानिवृत्तिः क्रियानिवृत्तेरयोगित्वम् ॥ २ ॥ योगनिरोधाद्भवसन्ततिक्षयः सन्ततिक्षयान्मोक्षः। तस्मात्कल्याणानां सर्वेषां भाजनं विनयः ॥ ३ ॥" इति तृतीयगुणफलम्। 'अनभिनिवेशः' अभिनिवेशरहितो 'गीतार्थभाषितं' श्रुताधिकोपदिष्टं 'नान्यथा' असद्भावरूपतया 'मुणति' प्रतिपद्यते, मोहोद्रेकाभावेन कदाग्रहाभावात्। उक्तं च—"न मोहोद्रेकताभावे स्वाग्रहो जायते क्वचित्। गुणवत्पारतन्त्र्यं हि तदनुत्कर्षसाधनम् ॥ १ ॥" इति चतुर्थगुणैदंपर्यम्। इति द्वितीयगाथार्थः ॥ ४५ ॥ तथा श्रवणमाकर्णनं, करणमनुष्ठानं, तयोः 'इच्छा' तीव्राभिलाषो भवति रुचिः 'श्रद्धानसंयुक्ता' प्रतीतिसंगतेति पञ्चमो गुणः। अस्या एव प्राधान्यख्यापनायाह—'अनया' द्विस्वरूपया रुच्या 'विना' अभावेन 'कुतः शुद्धिः' न कुतोऽपीत्याकूतम्। 'सम्यक्त्वरत्नस्य' प्रतीतस्य शुश्रूषाधर्मरागरूपत्वात्। तयोश्च सम्यक्त्वसहभाविलिङ्गतया प्रसिद्धत्वात्। उक्तं च—"सुस्सूस धम्मराओ गुरुदेवाणं जहासमाहीए। वेयावच्चे नियमो सम्मद्दिट्ठिस्स लिंगाइं ॥ १ ॥" इति

१ "तु बहुप्फलं" इत्यपि। २ "–वमन्तव्याः" इत्यपि। ३ "मोहोद्रिक्तता" इत्यपि ॥

पञ्चमगुणभावना। अन्ये तु पञ्चगुणानित्थमभिदधति—"सुत्तरुई अत्थरुई करणरुई च्चेवऽणभिनिवेसरुई। गुणवंते पञ्चमिया अणिट्ठिओच्छाहया होइ ॥ १ ॥" अत्रापि सूत्ररुचिः पठनादिस्वाध्यायप्रवृत्तिः। अर्थरुचिश्चाभ्युत्थानादिविनयं गुणिनां प्रयुङ्क्ते। करणानभिनिवेशौ तुल्यावेव। अनिष्ठितोत्साहता पुनरिच्छावृद्धिरेवेति न विरोधः शङ्कनीय इति ॥ ४६ ॥

ननु किमिच्छामात्रेणापि फलप्राप्तिरिष्यते सद्भावसारेणेष्यत एव ? इति ब्रूमः। तथा हि—

एगंमि सन्निवेसे एगस्स कुलपुत्तस्स य दो पुत्ता, जसो सुजसो य। दोवि जोव्वणत्था कयाइ धम्मदेवसूरिसमीवे धम्मं सोऊण पडिबुद्धा पव्वइउमुवट्ठिया पियरो आपुच्छंति। नेहमोहियाणि ताणि न य विसज्जंति। बहुं च भन्नमाणेहिं तेहिं भणियं एगो पव्वयउ, एगो पुणम्हं वुड्ढभावे परिवालगो भवतु। तओ जेट्ठेण भणिओ कणिट्ठो, तुमं चिट्ठ, अहं पव्वयामि। तओ सो भणइ, अहं चेव पव्वयामि। तओ जसेण वरमेसोवि ताव नित्थरउ। अहं पुण दुप्पडियाराणि जणयाणि कहमवमन्नेमित्ति चिंतिऊण विसज्जिओ सुजसो पव्वइओ विहिणा। विसुद्धपरिणामो नाणचरित्ताराहणसारो विहरइ। इयरोवि जणएहिं अणिच्छंतोवि कारिओ तहवि य (ह) कुलकन्नयाए पाणिग्गहणं। पवत्तो किसिकम्माइववसाए। गिहवावारपवत्तोवि वयगहणेक्कचित्तो कालं गमेइ। उवरएसुवि जणएसु दक्खिन्नसारयाए पइदिणं भज्जमापुच्छइ। सावि दीणाणणा रुयइ चेव न उण विसज्जइ। तओ सो तीए पडिवोहणोवायमलहंतो दुक्खं चिट्ठइ। इओ य सुजससाहू विविहतवोकम्मतणुइयसरीरो ओहिणोवलद्धजेट्ठभाइपडिवोहावसरो समागओ तस्स गिहं। पच्चभिन्नाओ भाउज्जायाए, सबहुमाणं वंदिओ य।

१ 'वुड्ढवये' इत्यपि। २ "तओ" इति क्वचित् नास्ति ॥

ठिओ तीए दंसिए उचिओवस्सए। कहिं घरसामिओत्ति पुट्ठाए सिट्ठं तीए, कम्मं काउं छेत्तं गओत्ति। भोयणावसरे पडिलाभिओ तीए साहू उचिएण भत्तपाणेण। भुत्तो विहिणा। नागओ जसोत्ति भत्तं गहाय पत्थिया पडिनियत्ता य रुयंती। पुच्छिया एसा सुजसेण, किमद्धिइं करेसि ?। सा भणइ, स ते भाया एगभत्तेहिं चिट्ठइ, छुहिओ वट्टइ, अंतरा य अपारा गिरिनई वहइ, तेण भत्तं नेउं न तरामित्ति अद्धिइकारणं महंतं ममंति। साहुणा भणियं, गच्छ नइं भणाहि; मम देवरस्स बारसवरिसाणि पव्वइयस्स जइ तेण दिवसंपि न भुत्तं ता मे मग्गं देहि महानइत्ति वुत्ते सा नई ते मग्गं दाहित्ति। एवं वुत्ताए तीए चिंतियं मम पच्चक्खमेव भुत्तं अणेण, कहं न भुत्तं नाम ?। अहवा न जुत्तं गुरुवयणविकोवणं, जमेस भणइ तं चेव करेमित्ति संपहारिऊण गया एसा। तहेव भणिए दिन्नो मग्गो नईए। कहमागयासि ? पुच्छिया भत्तुणा। तीएवि साहिओ सुजसागमणाइवुत्तंतो। भुत्तुत्तरे विसज्जिया जसेण भणइ कहं वच्चामि ?, अज्जवि अपारा चेव नई। जसेण वुत्तं संपयमेवं भणिज्जासि 'जइ भत्तुणाहमेकासिंपि न भुत्तम्हि ता महानइ ! मे मग्गं पयच्छाहि' सुट्ठुयरं विम्हया तहेव भणिए लद्धमग्गा सुहेण पत्ता सगिहं। वंदिऊण पुच्छिओ साहू, भयवं ! को एत्थ परमत्थोत्ति। मुणी भणइ, भद्दे ! जइ रसगिद्धीए भुज्जइ तओ भुत्तं भवइ। जं पुण संजमजत्ताहेउं फासुयमेसणिज्जं तं भुत्तं न गणिज्जइ। अओ चेवागमे भणियं—"अणवज्जाहाराणं साहूणं निच्चमेव उववासोत्ति।" एवं तुह पइणोवि बंभचेरमणोरहसहियस्स तुहाणुरोहेण कयभोगस्स अभोगो चेव। एयमायन्निऊण संविग्गाए चिंतियं तीए, अहो ! एस जसओ महाणुभावदक्खिन्नमहोयही संसारविरत्तमणोवि चिरं मए धम्मचरणाओ खालिओ। समज्जियं महंतं धम्मंतराइयं। ता संपयं जुत्तमेएण चेव समं

ममणत्तमणुचरिउं । एयं चेव नेहस्स फलंति भाविंतीए संपत्तो जसोवि, साहुं वंदिऊण निसण्णो नाइदूरे । कया साहुणा दोण्हंपि सुद्धदेसणा । पडिवुद्धाणि पयइयाणि । कालेण पत्ताणि सुरलोगंति । एवमेस जसो इच्छामत्तेणावि चरणवि-सएण पावारंभेण न लित्तोत्ति ॥

उक्तं तृतीयं भावश्रावकलक्षणम् । अधुना चतुर्थमाह—

**उजुववहारो चउहा जहत्थभणणं अवंचिगा किरिया । हुंतावायपगासण मेत्तीभावो य सब्भावा ॥ ४७ ॥**

ऋजु प्रगुणं व्यवहरणं 'ऋजुव्यवहारः' भावश्रावकगुणः 'चतुर्धा' चतुष्प्रकारो भवति । तद्यथा—'यथार्थभणनं' अवि-संवादिवचनं धर्मव्यवहारे क्रयविक्रयव्यवहारे साक्षिव्यवहारे राजव्यवहारादौ वा । अस्य भावार्थः—"परचित्तणुवत्तीए धम्ममधम्मं अधम्ममवि धम्मं । न भणंति भावसड्ढा भणंति सच्चं च महुरं च ॥ १ ॥ कयविक्कयसट्ठीसुवि ऊणब्भहियं कहिंति न हु अग्घं । सक्खित्तेवि निउत्ता न अन्नहा वाइणो हुंति ॥ २ ॥ रायसभावगयावि हु जणं न दूमंति अलिय-भणिएहिं । धम्मोवहासजणगं वयणं वज्जंति धम्मरया ॥ ३ ॥" तथा 'अवञ्चिका' पराव्यसनहेतुः 'क्रिया' शरीरव्यापारो द्वितीयमृजुव्यवहारलक्षणम् । उक्तं च—"तप्पडिरूवगविहिणा तुलापलाईहि ऊणमहियं वा । दिंतो लिंतोवि परं न वंचए सुद्धधम्मत्थी ॥ १ ॥" तथा 'हुंति' इति प्राकृतशैल्या । भाविनो येऽपायास्तेषां प्रकाशनं ज्ञापनं करोति, भद्र ! मा कृथाः पापानि चौर्यादीनि, इह परत्र चानर्थकारिणीत्याश्रितं शिक्षयति । न पुनरन्यायप्रवृत्तमप्युपेक्षत इति भावः । अन्ये

१ अन्यत्र "रायसभाइगयावि" इत्यस्ति ॥

तु—'हुंतोवायपगासण' इति पठन्ति । तत्र 'हुंतो' इति सद्भूत उपायो यो धर्मार्थविषये तस्य प्रकाशनं पृष्टोऽपृष्टो वा करोतीति तृतीयमृजुव्यवहारस्वरूपम् । तत्र धर्मोपायो दानशीलतपोभावनारूपः । अर्थोपायो नीतिचारितोद्धारकाव्यव-हरणादिरूपः । कामोपायः पुनरनर्थफलत्वान्न प्रकाशयत्येव । मोक्षस्तु फलभूत इत्येतदपि पाठान्तरं मार्गानुपातित्वात्सङ्ग-तमेवेति । तथा मित्रस्य भावः कर्म वा मैत्री, तस्या भावो भवनं सत्ता सद्भावान्निष्कपटतया कृत्रिममैत्रीं न करोतीति भावः । कपटमैत्र्योः छायातपयोरिव विरोधात् । उक्तं च—"शाठ्येन मित्रं कलुषेण धर्मं परोपतापेन समृद्धिभावम् । सुखेन विद्यां परुषेण नारीं वाञ्छन्ति ये व्यक्तमपण्डितास्ते ॥ १ ॥" इति चतुर्थमृजुव्यवहारस्वरूपम् ॥ ४७ ॥

अस्यैव विपर्यये दोषदर्शनपूर्वकं विधेयतामाह—

**अन्नहभणणाईसुं अबोहिबीयं परस्स नियमेण । तत्तो भवपरिवुड्ढी ता होज्जा उज्जुववहारी ॥ ४८ ॥**

अन्यथाभणनमयथार्थजल्पनम्, आदिशब्दाद्वञ्चकक्रियादोषोपेक्षणासद्भावमैत्रीपरिग्रहस्तेषु सत्सु श्रावकस्येति भावः । अबोधेर्धर्माप्राप्तेर्बीजं मूलकारणं 'परस्य' मिथ्यादृष्टेः 'नियमेन' निश्चयेन भवतीति शेषः । तथा हि—श्रावकमेतेषु प्रवर्त-मानमालोक्य वक्तारः संभवन्ति—"धिगस्तु जैनं शासनम्, यत्र श्रावकस्य शिष्टजननिन्दितेऽलीकभाषणादौ कुकर्मणि निवृत्तिर्नोपदिश्यते" इति निन्दाकरणादमी प्राणिनो जन्मशतेष्वपि बोधिं न प्राप्नुवन्तीति 'अबोधिबीजं' इदमुच्यते, 'ततः' चाबोधिबीजाद् 'भवपरिवृद्धिः' भवति, तन्निन्दाकारिणं तन्निमित्तभूतस्य श्रावकस्यापि । यतोऽवाचि—"यः शासन-स्योपघातेऽनाभोगेनापि वर्तते । स तन्मिथ्यात्वहेतुत्वादन्येषां प्राणिनामिति ॥ १ ॥ बध्नात्यपि तदेवालं परं संसारकार-णम् । विपाकदारुणं घोरं सर्वानर्थविवर्द्धनम् ॥ २ ॥" 'ततः' तस्मात्कारणाद् 'भूयात्' भवेत् 'ऋजुव्यवहारी' प्रगुणव्य-वहारवान् प्रकृतो भावश्रावक इति ॥ ४८ ॥

दृष्टान्तश्चेह धर्मनन्दः । तत्रायं संप्रदायः—

नासिक्के नयरे नंदाभिहाणा दुवे वणिया परिवसिंसु । तेसिमेगो सावगो सुद्धववहारी, तस्स लोगे धम्मनंदोत्ति नामं पसिद्धं । इयरो पुण लोभदोसेण कूडतुलाईहिं ववहरइ, तेण लोभनंदोत्ति पसिद्धो । अन्नया तत्थ रायतलायं खणंतेहिं ओड्डेहिं निहाणं पावियं । तत्थ य केवला सुवन्नकुसा चिट्ठंति । ते य सव्वओ कद्दमेण लित्तत्ति, तेहिं लोहकुसा चेव कप्पिया । नीया दो धम्मनंदहट्टे भणियं च, सेट्ठि ! एयाणं लोहकुसाणं तेलाइयं देहि । अइभाराओ सुवन्नमेयंति विन्नायं सेट्ठिणा । अहिगरणभयाओ न साहियं, तेसिं भणियं च न मम एएहिं पओयणंति । तओ ते गया लोभनंदावणे । तं चेव भणिऊण समप्पिया कुसा लोहनंदस्स । तेणावि परिन्नाया चिंतियं च । सुंदरमेयं जं सुवन्नं लोहमोल्लेण लब्भइ, ता देमि एयाहिं दुगुणं मोल्लं जेण अन्नेवि आणिंति । तं चेव काऊण भणिया ते । मम लोहेण पओयणत्ति जइ संति अन्नेवि एयमोल्लेण आणेयव्वा । तओ ते दिणे दिणे दो दो आणिंति । जाव गहिया सेट्ठिणा णेगे । नवरमइगुढचित्तयाए पुत्ताणंपि पर-मत्थं न साहेइ । तओ ते अहिए दिज्जमाणे लहुत्थोसित्ति खिंसंति, तहावि सब्भावं नाइक्खइ, हट्टं च खणमवि न मुंचइ । अन्नया पच्चासन्नगामे मित्तेण विवाहे निमंतिओ अणिच्छंतोवि बला निज्जंतो पुत्तं भणइ, ते कुसे मा पडिसेहेज्जासि । न य सब्भावं कहेइ । गए तम्मि समागयाणमोड्डाण पुत्तो लोहमोल्लं देइ । तेवि सेट्ठिभणियं देहित्ति पुणो पुणो झिंखंति ।

ताहे ववहारवावडयाए सकोवेण तेण पक्खित्ता ते तेसिं संमुहं। पासाणपडिघाएण पणट्ठो तेसिं गोबरो। पयडीभूयं सुवन्नं। दिट्ठं दंडवासिएहिं। नीया ओब्बा रायसमीवं। पुच्छिएहिं कहिओ रन्नो सब्भावो। भणिया रन्ना, कस्स कस्स दिन्नत्ति। तेहिं वुत्तं धम्मनंदस्स दरिसिया न तेण गहिया। अओ एयस्स चेव एत्तियमित्ता दिन्नत्ति। तओ महाचोरोत्ति कुविएण राइणा समाणत्तेहिं दंडवासिएहिं गहियाणि सयलमाणुसाणि। उक्कड्डियं घरसारं। एत्थंतरे पुत्तो कुसे न गिण्हिस्सइत्ति अवसेरीए मित्तमपुच्छिय तुरियमागओ लोहनंदो। दिट्ठगिहवइयरो महापच्छायावानलसंतत्तो रुट्ठो नियपायाणं, किर एएहिं अहं गामंतरं पाविओत्ति। तओ कुहाडेण दोवि पाए ताडिऊण पाविओ पंचत्तमेसो। धम्मनंदोवि पुच्छिओ पत्थिवेण, कीस तए कुसा न गहिया ?। सो भणइ, जओ गहिएहिं दोण्हं वयाणं भंगो भवइ, चोरिक्कविरईए परिग्गहप्परिमाणस्स य। नय एएसिं सब्भावो सिट्ठो अहिगरणभयाओत्ति। अहो! सच्चं धम्मनंदोसित्ति भणंतेण पूइऊण विसज्जिओ रन्ना। एरिसो उज्जुववहारी भावसावओ इहपरलोए कल्लाणभायणं होइत्ति ॥

उक्तं चतुर्थं भावश्रावकलक्षणम्। अधुना पञ्चममाह—

**सेवाए कारणेण य संपायणभावओ गुरुजणस्स। सुस्सूसणं कुणंतो गुरुसुस्सूसो हवइ चउहा ॥ ४९ ॥**

'सेवया' पर्युपासनेन १ 'कारणेन' अन्यजनप्रवर्त्तनेन २ 'संपादनं' गुरोरौषधादीनां प्रदानं ३ 'भावः' चेतोबहुमानः ४ तावाश्रित्य संपादनभावतः 'गुरुजनस्य' आराध्यवर्गस्य। इह यद्यपि गुरवो मातापित्रादयोऽपि भवन्ति, तथाऽपि धर्मप्रस्तावादिहाचार्यादय एव प्रस्तुता इति तान्येवोद्दिश्य गुरुशुश्रूषो व्याख्येयः। गुरुलक्षणं चेदम्—"धर्मज्ञो धर्मकर्त्ता च सदा धर्मप्रवर्त्तकः। सत्त्वेभ्यो धर्मशास्त्राणां देशको गुरुरुच्यते ॥ १ ॥" तथा—"पडिरूवो तेयस्सी जुगप्पहाणागमो महुरवक्को। गंभीरो धीमंतो उवएसपरो य आयरिओ॥ १ ॥ अपरिस्सावी सोमो संगहसीलो अभिग्गहमईओ। अविकत्थणो अचवलो पसन्नहियओ गुरू होइ ॥ २ ॥" तथा—"संविग्गो १ मज्झत्थो २ संतो ३ मउओ ४ रिऊ ५ सुसंतुट्ठो ६। गीयत्थो ७ कडजोगी ८ भावन्नू ९ लद्धिसंपन्नो १० ॥ १ ॥ देसणिओ ११ आदेओ १२ महुमं १३ विन्नाणिओ १४ निरुय १५ वाई १६। नेमित्ती १७ ओयंसी १८ उवयारी १९ धारणावलिओ २० ॥ २ ॥ बहुदिट्ठो २१ नयनिउणो २२ पियंवओ २३ सुस्सरो २४ तवे निरओ २५। सुसरीरो २६ सुप्पइभो २७ चाई २८ आणंदओ २९ चोक्खो ३० ॥ ३ ॥ गंभीरो ३१ अणुयत्ती ३२ पडिवन्नयपालगो ३३ थिरो ३४ धीरो ३५। उचियन्नू ३६ सूरीणं छत्तीसगुणा सुयक्खाया ॥ ४ ॥" इत्याद्यागमवर्णितगुणो गुरुजनग्रहणं बहुत्वप्रतिपत्त्यर्थम्। ये केचिदेवंविधास्ते सर्वेऽपि गुरुजन इति भावः। तस्य 'शुश्रूषणं' पर्युपासनं कुर्वन् गुरुशुश्रूषो भवति, स च 'चतुर्धा' चतुष्प्रकारः। इति गाथाक्षरार्थः ॥ ४९ ॥

भावार्थं सूत्रकार एवाह—

**सेवेंति कालंमि गुरुं अकुणंतो ज्झाणजोगवाघायं। तय वन्नवायकरणा अन्नेवि पवत्तई तत्थ ॥ ५० ॥**

'सेवते' पर्युपास्ते, 'काले' प्रतिक्रमश्रवणादिहेतौ 'गुरुं' उक्तस्वरूपम्। कथम् ? 'अकुर्वन्' ध्यानं धर्मध्यानादि, योगाः प्रत्युपेक्षणाभोजनादयः, तेषां व्याघातमन्तरायम्। यतः साधूनामयमागमोपदेशः—"जोगे जोगे जिणसासणंमि दुक्खक्खया पउज्जंते। अन्नोन्नमबाहाए असवत्तो होइ कायव्वो ॥ १ ॥" इत्येषा शुश्रूषा १। तथा 'सदा वर्णवादकरणात्' नित्यं सद्भूतगुणोत्कीर्त्तनेन 'अन्यानपि' प्रमादवतः 'प्रवर्त्तयति' प्रेरयति 'तत्र' तस्यां सेवायाम्। तद्यथा—"माणुस्समुत्तमो धम्मो गुरू नाणाइसंजुओ। सामग्गी दुलहा एसा जाणाहि हियमप्पणो ॥ १ ॥ एयारिसो महप्पा धन्नाणं दिट्ठिगोयरमुवेइ। एयस्स सयलसुहयं पियंति वयणामयं धन्ना ॥ २ ॥ एयस्स महामुणिणो उवएसरसायणं अकाऊणं। होही पच्छायावो पत्ते पत्ते निहाणे व ॥ ३ ॥" इत्यादि। इति द्वितीयः शुश्रूषाविधिः २ ॥ ५० ॥

अथ तृतीयचतुर्थावाह—

**ओसहभेसजाई सओ य परओ य संपणामेइ। सइ बहुमन्नेइ गुरुं भावं चेणुवत्तए तस्स ॥ ५१ ॥**

औषधानि केवलद्रव्यरूपाणि बहिरुपयोगीनि वा, भैषज्यानि संयोगिकान्यन्तर्भोग्यानि वा, आदिशब्दादन्यान्यपि संयमोपकारकाणि वस्तूनि 'स्वतः' स्वयंदानेन 'परतः' अन्यजनदापनेन च सम्यक् 'प्रणामयति' संपादयति गुरुभ्य इति प्रकृतत्वात्। उक्तं च—"अन्नं पानमथौषधं बहुविधं धर्मध्वजः कम्बलं वस्त्रं पात्रमुपाश्रयश्च विविधो दण्डादिर्धर्मोपधिः। शस्तं पुस्तकपीठकादि घटते धर्माय यच्चापरं देयं दानविचक्षणैस्तदखिलं मोक्षार्थिने भिक्षवे ॥ १ ॥" तथा—"जो देइ ओसहाइं मुणीण मणवयणकायगुत्ताणं। सो सुद्धभावविभवो भवे भवे होइ नीरोगो ॥ १ ॥" इति संपादने तृतीयः शुश्रूषाविधिः ३। तथा सदा 'बहु मन्यते' मनःप्रीतिसारं श्लाघते 'गुरुं' उक्तस्वरूपं, 'भावं' चेतोवृत्तिं 'चानुवर्त्तते' तदनु-

१ "अविकंथणो" इत्यपि। २ 'समक्खाया' इत्यपि। ३ "सेवइ" इत्यपि ॥

१ 'अणुवत्तए' इत्यपि ॥

कूलं व्यवहरति, 'तस्य' गुरोः संबन्धिनम् । न तदसंगतमाचरन्तीति तत्त्वम् । उक्तं च—"सत्यपि नतिस्तुतिवचने तदभिमते प्रेम तद्द्विषि द्वेषः । दानमुपकारकीर्त्तनममन्त्रमूलं वशीकरणम् ॥ १ ॥" अन्यत्राप्युक्तम्—"मिच गोयमसंगुत्तेहिं गणेहि वा दंतचक्कलाइं से । इच्छंति भाणिऊणं कज्जं तु तमेव जाणंति ॥ १ ॥" इत्थंभावं गुरोरनुवर्त्तते । इति चतुर्थः शुश्रूषाविकल्पः ४ इति ॥ ५१ ॥

अत्र निदर्शनम्—

कोसंबीए नयरीए सुहत्थिसूरिणो कयाइ विहारकम्पेण विहरिंसु । तत्थ य तया महादुब्भिक्खं वट्टइ, अओ भिक्खयरा भिक्खं न लहंति । लहंति य पज्जत्तं ईसरगिहेसु साहुणो । अन्नया एगो चक्कयरो ईसरगिहेसु भत्तायरेण पडिलाभिज्जंते दट्ठूण तेसिं नियत्ताणमग्गओ गंतूण पायवडिओ पत्थिउं पवत्तो । महापुरिसा तुब्भे मम एत्थ रंकस्स, ता देहि मे भोयणं किंचिमेत्तं । साहूहिं पडिवुत्तं, अम्ह दाउं न कप्पइ, गुरुणो चेव जाणंति । तओ सो तेहिं चेव सद्धिं गओ गुरुसमीवं तहेव मग्गिया । इओ गुरूहिं भणिओ, भद्द ! जइ पव्वयाहि ता अभिलससि तं देमो, गिहत्थाणं न दिज्जइत्ति । पडिवन्ने तेण गुणदंसणाओ पव्वाविओ । भोयाविओ निच्चमहुराइं जहिच्छं । परितुट्ठो एसो । अहो ! सुंदरो धम्मो । उत्तमचरिया सव्वसत्तवच्छला कारुणिया महाणुभावा य गुरुणो, जे मम निब्भग्गसिरोमणिणोत्ति एवमुवयरंति । एवं सुहपरिणामो अव्वत्तसामाइयसंजमो मज्झरत्तसमए विसूइयादोसेण पाविओ पंचत्तं । तओ एत्थ उववन्नोत्ति । अत्थि पाडलिपुत्ते चंदगुत्तपुत्तस्स बिंदुसारस्स पुत्तो असोगसिरिराया । तस्स पाणप्पिओ कुणालो नाम नंदणो । नेहाइसएण बालो चेव ठाविओ पिउणा जुवरज्जे । दिन्ना कुमारभुत्तीए उज्जेणी । पइदिणं च पिया निययपुरिसेहिं पउत्तिमाणावेइ, पसाए य पेसेइ । अन्नया कलाग्गहणस्स जोगोत्ति लिहिओ रन्ना महंतयाण लेहो—'अधीयतां कुमारः' इत्यादि । न उवाइसि अकाइयं चेव तं मोत्तूण सरीरकज्जे उट्ठिओ राया । एत्थंतरे कुमारमाइसवत्तीए किमेत्थ लिहियं(ति) कोउगेण वाइओ लेहो । तओ मच्छरदोसेण नहसुत्तीए नयणकज्जलेणायारस्स उवरिं बिंदुं दाऊण झत्ति गया अन्नओ एसा । रन्नावि अवाइओ चेव काइओ लेहो पेसिओ कुमारस्स । तेणावि वाइऊण भणिया महंतया, करेह रायाएसं, अंधीकरेह मं तुरियंति । तेहिं भणियं, नेवं देवाएसो संभवइ तो सुपुच्छियं करेमो । तओ कहमखंडियसासणं मोरियवंसप्पसूयस्स तायस्स पायडमेयमाणत्तियमन्नहा करेमित्ति भणंतेण कुणालेण वारिज्जंतेणावि तत्तसलागाए अंजिऊण विणासियाणि लोयणाणि । सुयम्मि य एयव्वइयरे ममेस दोसोत्ति गहिओ महापच्छायावेण जणओ । कालेण रज्जाणुचिओत्ति कओ पिउणा गामसामी । सुहेण तत्थ चिट्ठइ । अइसओ एयस्स गीयकलाए तं चेव अब्भसमाणो कालं गमेइ । अन्नया सो पुव्वभणियदमगो तस्स भारियाए कुच्छिंसि उववन्नो । पसत्थसुमिणदंसणाओ कलिओ कुणालेण पहाणपुत्तलाभो । चिंतियं च जइ ताओ तूसइ ता कयाइ मम पुत्तो राया होज्जा । अओ तायाराहणे पयत्तं करेमि(त्ति) निच्छिऊण उवायं, जायासहिओ गओ पाडलिपुत्तं । गंधव्वकलाए जणमावज्जिउं पवत्तो । तओ तेण निरवज्जविज्जावलेण गंधव्वियाण गणपयए सुसुमूरंतो पत्तो परं पसिद्धिं । अओ सद्दो गंधव्विओत्ति निसुयं रन्ना कोउगेण वाहराविओ अ । सिट्ठं च केणावि, देव ! सव्वसमयसुंदरं से गीयं, किं तु नयण रहिओ न देवस्स दंसणोचिओत्ति । तहावि परियच्छिपच्छाइओ गायउत्ति भणंतेण सद्दाविओ रन्ना । आगओ य गाइउं पवत्तो । हयहिएण य भणिओ राइणा, भो ! साहु गीयं, जाएहि कंपि वरं । तयेलं च वद्धाविओ किंकरेण कुणालो, पसूया ते जाया देवकुमारागारं दारयंति । एत्थंतरे परियाणियावसरेण गीयं कुणालेण—"चंदगुत्तपपुत्तो उ बिंदुसारस्स नत्तुओ । असोगसिरिणो पुत्तो अंधो जायइ कागिणिं ॥ १ ॥" अरे ! कुणालो एसोत्ति उक्कंठिएण जवणियमुसारिऊण आलिंगिओ रन्ना । निवेसिओ उच्छंगे । भणिओ य, वच्छ ! किमेयमइतुच्छं पत्थेसि ? । ताहे मंतिणा वुत्तं, देव ! तुम्ह वंसे कागिणीसद्देण रज्जं भन्नइ, ता कहमेयं तुच्छं पत्थयंति । रन्ना वुत्तं, पुत्त ! न तुमं रज्जोचिओसि । किमत्थि पुत्तो रज्जारिहो ? जेणेवं पत्थेसि । कुणालेण भन्नइ, संपइ जाओ अत्थित्ति । राइणा भणियं, जइ एवं दिन्नं मए तस्स रज्जं । तओ वत्ते दसाहे संपाइयसंपइनामधेयस्स तस्स कओ रायाहिसेओ रन्ना । समप्पिऊण मंतिपमुहाण तं पारद्धमप्पणा परलोगहियंति । तओ पुव्वज्जियपुन्नमाहप्पेण पवड्ढमाणो सरीरसंपयाए रज्जसिरीए य पत्तो रूवलावन्नसंपुन्नं तारुन्नं । अन्नया तेण पासायगएण दिट्ठो जिणरहेण समं घरंगणागओ रायमग्गगओ चउव्विहसमणसंघपडिगओ चंदो व गहगणसंगओ कमलायरमज्झगओ व हंसो विहारकमागओ भयवं अज्जसुहत्थी । कत्थ पुण ममेस सपुव्वोत्ति सवियक्केण समुप्पन्ने जाइसरणे पच्चभिन्नाओ य । तओ अप्पमाणपमोयपूरिज्जमाणमाणसो सव्वसामग्गीए गओ गुरुसमीवं नरीसरो । पणओ पणयपहाणं पायपउमे । पुणो पुणो [1]भालत्थलेण पाए फुसिऊण हरिसजलपप्पुयच्छो पुच्छिउं पवत्तो, भयवं ! सामाइयसंजमस्स किं फलं ? । गुरूहिं भणियं अव्वत्तस्स नरिंदाइरिद्धी वत्तस्स मोक्खो सग्गो वा । तओ संजायपच्चएण पणमिऊण पुणो भणियं

१ "मालयलेण" इत्यपि ॥

पत्थिवेण, किं भगवंतो ममं पच्चभिजाणंति न वा ? । उवओगं दाऊण भणियं गुरुणा, सुट्ठु पच्चभिजाणामो । तुमं कोसंबीए दिवसमेगं मम सीसो आसि, संपइ संपइराया वट्टसि । अहो ! भगवओ नाणाइसिओत्ति तुट्ठेण कयकरंजलिणा पुणो भणियं, तो खाइं समाइसह, जमियाणिं करेमि । गुरूहिं भणियं, समणधम्मं सावगधम्मं वा पडिवज्ज । परिभाविऊण पडिवन्नाणुव्वयगुणवओ राया सावगो जाओ । तप्पभिइं च बहुमाणसारं गुरुणो पज्जुवासेइ । तदुवएसेण कारावेइ चेइयाइं, नियरज्जे पवत्तेइ रहजत्ताओ, पडिवोहेइ सामंते, पवत्तेइ तेवि चेइयभवणाइकारवणे, करेइ साहूण दाणाइवच्छलं, पावेइ परमुन्नइं साहम्मियलोयं । किं बहुणा अणारियदेसेसुवि उवसामिओ तेण लोगो, जहा तेसुवि साहूणं सुविहारो संवुत्तो । अन्नया अन्नपरिविट्ठुले काले न मम पिंडो साहूणमुवयरइ, तहावि केणइ उवाएण उवगरावेमित्ति चिंतिऊण दीणाइदाणनिमित्तं कारियाओ दाणसालाओ, भणिया य ते निउत्तपुरिसा । जमेत्थ दिंताणमुव्वरइ तं मए तुम्हाण चेव दिन्नं, किं तु तुब्भे तं साहूण देज्जाहि, तस्स मोल्लमहं भे दाहामि । अन्नेवि मंडयलड्डुयप्पयगुलसत्तुयाइविक्कयकारिणो तेवि एवं चेव भणिया । तओ सव्वेवि ते दिंति साहूण मग्गियममग्गियं वा जहिच्छं । एवमुवज्जियपउरपुन्नपब्भारो चेईहरमंडियमहीमंडलं काऊण कयसावगधम्माराहणो समाहिणा कालं काऊण पत्तो सुरलोयं संपइमहाराओत्ति । एयारिसो गुरुसुस्सूसो भावसावगो होइत्ति ॥

उक्तं पञ्चमं भावश्रावकलक्षणम् । अधुना षष्ठमाह—

**सुत्ते अत्थे य तहा उस्सग्गववायभाववत्रहारे । जो कुसलत्तं पत्तो पवयणकुसलो तओ छद्धा ॥५२॥**

इह प्रकृष्टं वचनं प्रवचनमागमः स च सूत्रादिभेदात् षोढा । अतस्तदुपाधिकं कौशलमपि षोढा, तत्संबन्धात्कुशलोऽपि षोढैवेत्याह—'सूत्रे' सूत्रविषये यः कुशलत्वं प्राप्त इति प्रत्येकं योजनीयम् । तथा 'अर्थे' सूत्राभिधेये । चः समुच्चये । 'तथा' तेनैव प्रकारेण उत्सर्गे सामान्योक्तौ, अपवादे विशेषभणिते, भावे निश्चयनयाभिप्राये, व्यवहारे गीतार्थाचरितरूपे । समाहारस्यैकत्वेऽपि सप्तम्याः पृथग्व्याख्यानं बालावबोधनार्थम् । एतेषु यः कुशलत्वं प्राप्तः सद्गुरुप्रसादेन प्रवचनकुशलोऽसौ भवति 'षोढा' षट्प्रकारः । इति गाथाऽक्षरार्थः ॥ ५२ ॥

भावार्थं प्रकरणकार एवाह—

**उचियमहिज्जइ सुत्तं सुणइ तयत्थं तहा सुतित्थंमि । उस्सग्गववायाणं विसयविभागं वियाणाइ ॥५३॥**
**वहइ सइ पक्खवायं विहिसारे सव्वधम्मणुट्ठाणे । देसद्धादणुरूवं जाणइ गीयत्थववहारं ॥ ५४ ॥**

'उचितं' योग्यं श्रावकभूमिकायाः, 'अधीते' पठति 'सूत्रं' प्रवचनमात्रादिषड्जीवनिकान्तम् । उक्तं च—"पवयणमाई छज्जीवणियंता उभयओवि इयरस्स ।" ग्रहणशिक्षेति तत्र प्रकृतम् । उभयतः सूत्रतोऽर्थतश्च । इतरस्य श्रावकस्येदं विशिष्टम् । श्रावकमधिकृत्योच्यते—सामान्यश्रावकस्तु संग्रहणीकर्मग्रन्थोपदेशमालादिप्रकरणसन्दोहमाचार्यादिप्रसादीकृतमन्यदपि पठतीति सूत्रे कौशलमाप्नोति १। तथा शृणोति तस्य सूत्रस्यार्थं 'तथा' तेनैव प्रकारेण स्वभूमिकौचित्यरूपेण 'सुतीर्थे' सुगुरुमूले । यत आह—"तित्थे सुत्तत्थाणं गहणं विहिणा उ एत्थ तित्थमिणं । उभयन्नू चेव गुरू विही उ विणयाइओचित्तो ॥ १ ॥" इत्यादि । अनेन यतेः श्रावकस्य च गुरुसमीप एव सूत्रार्थग्रहणं युक्तमुक्तम् । यत आह—"गुर्वायत्ता यस्माच्छास्त्रारम्भा भवन्ति सर्वेऽपि । तस्माद्गुर्वाराधनपरेण हितकाङ्क्षिणा भाव्यम् ॥ १ ॥" इति द्वितीयं कौशलम् २। तथा 'उत्सर्गापवादयोः' जिनमतप्रतीतयोः विषयविभागं विशेषेण 'जानाति' अवगच्छति । अयमत्र भावार्थः—नोत्सर्गमेव केवलमालम्बते, नाप्यपवादमेव प्रमाणीकरोति । किं तर्हि ? तयोरवसरं गुरूपदेशादवबुध्यते । उक्तं च—"उन्नयमवेक्ख इयरस्स पसिद्धी उन्नयस्स इयराओ । इय अन्नोन्नपसिद्धा उस्सग्गववाय दो[1] तुल्ला ॥ १ ॥ दव्वाइएहि जुत्तस्सुस्सग्गो तदुचियं अणुट्ठाणं । रहियस्स तमववाओ उचियंवियरस्स न उ तस्स॥ २ ॥" ज्ञात्वा च यथावसरमुचितविधिना यतिजनस्य पथ्यादिदाने प्रवर्त्तते । तद्यथा—"फासुयएसणिएहिं फासुयओहासिएहि कीएहिं । पूईपमिस्सिएण य आहाकम्मेण जयणाए ॥ १ ॥" इत्यादि । युगपदुक्तत्वात्कौशल्यद्वयस्योक्ताश्चत्वारो भेदाः ३ । ४। इति प्रथमगाथार्थः ॥५३॥ तथा भावो नैश्चयिकः परिणामः । तत्र कौशलमिदम्—'वहति' धत्ते सदा 'पक्षपातं' बहुमानं 'विधिसारे' विधानप्रधाने 'सर्वधर्मानुष्ठाने' देवगुरुवन्दनदानधर्मादौ । किमुक्तं भवतीति विधिकारिणमन्यं बहु मन्यते, स्वयं च यथाशक्ति विधिपूर्वकं प्रवर्त्तते । सामर्थ्याभावेऽपि विध्याराधनमनोरथान् न मुञ्चति । एवमप्यसावाराधक एव स्यात् । निश्चयनयमतमिदम् । उक्तं चागमे—"परमरहस्समिसीणं समत्तगणिपिडगझरियसाराणं । परिणामियं पमाणं निच्छयमवलंबमाणाणं ॥ १ ॥ तम्हा भावो सुद्धो सव्वपयत्तेण हंदि परलोए । कायव्वो बुद्धिमया आणावगजोगओ निच्चं ॥ २ ॥" इत्थं कुर्वन् भावे कुशलो भवति ५ । तथा देशः सुस्थितदुःस्थितादिः, अद्धा कालः, सुभिक्षदुर्भिक्षादिः । आदिशब्दाद्

[1] 'सो तुल्ला" इति समग्रपुस्तकेषु वर्तते परमन्यग्रन्थे "दो तुल्ला" इति दर्शनादर्थसंगत्या च मूले स एव पाठ आदृतः ॥

द्रव्यं सुलभदुर्लभादिः, भावश्च हृष्टग्लानादिः परिगृह्यते । तेषामनुरूपं जानाति गीतार्थव्यवहारं यो यत्र देशे, काले, भावे वा वर्त्तमानैर्गीतार्थैरुत्सर्गापवादवेदिभिर्गुरुलाघवपरिज्ञाननिपुणैराचरितो व्यवहारः तं न दूषयतीति भावः । तथा च सूत्रम्—" असढेण समाइन्नं जं कत्थइ केणई असावज्जं । न निवारियमन्नेहिं बहुमणुमयमेयमायरियं ॥ १ ॥" एवं-विधव्यवहारे कौशलम् । षष्ठं कौशलं भवति ६ । एतच्चोपलक्षणं जीवपुद्गलादिषु सूक्ष्मभावेषु सर्वेष्वपि यः कुशलः स प्रवचनकुशलः । तथाविधराजश्रावकवत् ॥ ५४ ॥

तद्वृत्तान्तश्चायम्—

पुहइपुरे नयरे पउमसेहरो राया । बालभावाओ साहुपज्जुवासणोवलद्धियजीवाइवत्थुपरिन्नाणो पवयणपभावणापहाणो परमसावओ अहेसि । सो पुण सयलसत्तवच्छलयाए सयलोयस्स जिणधम्ममाइक्खइ, वन्नेइ जीवदयागुणे, परूवेइ साहुधम्मं, पसंसेइ साहूणमप्पमत्तयं, कहेइ अप्पमायाओ मोक्खसोक्खसंपयं । एवं च तेण नियरज्जे पवत्तिओ पाएण लोगो जिणधम्मे । जेवि य परप्पवाइणो तेवि जिणवयणपसिद्धहेउदिट्ठंतजुत्तीहिं तेण मुद्दियमुहा चेव कया । जहा तब्भणियं नन्नहा काउमिच्छंति । नवरमेगो सेट्ठिपुत्तो न पडिबुज्झइ । सो दुहियजीववहाए धम्मं मन्नइ, तेसिं सुगइगमणकारणत्तेण । तहा अप्पमाओ धम्ममूलंति जिणोवएसं सिरवेयणोवसमे तक्खगनागमत्थयमणिजलोवएसतुल्लं मन्नइ । जओ पवणाहयधयवडग्गचंचलं चित्तमेगत्थ धारिउं न तीरइ । दुन्निवाराइं सएसु सएसु विसएसु धाविराइं इंदियाइं । सो एवं वायालयाए धम्माभिमुहेहवि लोगे मोहिंतो निसामिओ नराहिवेण । तओ तदुवसामणत्थं जक्खाभिहाणो छत्तो निउत्तो । सिक्खविओ य जहाजोग्गं । समप्पियं महग्घमाणिक्कालंकियमाहरणं । एयं पच्छन्नं तस्स रयणकरंडियाए पक्खिविऊण मम निवेएहि-त्ति । तेणावि जं ते मयं तम्ममावि सम्मयंति भणंतेण कया तेण समं मेत्ती । अवसरे पक्खित्तं तमाभरणं रयणकरंडियामज्झे । ताहे राइणा उग्घोसावियं पडहगेण 'जइ केणावि रायाहरणं पडियमुवलद्धं कीयं वा कुओवि नो संपइ समप्पंतो निरवराहो रायपसायं च लहइ, पच्छा नाए सारीरो दंडो भविस्सइ'त्ति तिन्नि वारा उग्घोसाविऊण पउरेहिं सद्धिं निउत्ता नियपुरिसा गेहुल्लोडाए गवेसंतेहिं दिट्ठं तमाभरणं । पुच्छिओ सेट्ठिपुत्तो कुओ ते एयं ? । भणइ न याणामि, न मम संतियमेयं । तो खाइं कस्स संतियं ? । सो भणइ न याणामि । अरे ! कहं न याणासित्ति भणंतेहिं गहिओ रायभडेहिं । नीओ रायसयासमेसो । तेणावि वज्झो समाणत्तो । पच्चक्खचोरोत्ति न कोइ तं मोयावेइ । तओ गयजीवियासेण दीणविमणेण पलोइयमाणेण जक्खवयणं भणियं च । मित्त ! विन्नवेहि देवं । देवावेहि दुक्करेणावि दंडेण पाणभिक्खं । जक्खेणावि विन्नत्तो राया । देव ! ममेस मित्तो ता कीरउ पसायं एयजीवियरक्खाए । निरूविज्जउ अन्नो कोइ दंडो । राइणा भणियं, मारिया पाणिणो सुगइं गच्छंति, ता किं मित्तस्स सुगइं नेच्छसि ? । जक्खेण भणियं अलं सुगईए, जीवंतो नरो भद्दाणि पेच्छइ । रन्ना वुत्तं तो मुंचामि, जइ मम चलणंतियाओ तेल्लपुन्नपत्तिं घेत्तुं बिंदुमवि अपडंतो सयलनयरतियचउक्कचच्चररच्छासु परिभमिऊण मम पुरओ ठवेइ । तंपि य जीवियत्थिणा पडिवन्नं सेट्ठिसुएण । राइणावि निरूवियाइं सव्वनयरे नाणाविहकोऊहलकोलाहलाउलाहिं पए पए पेच्छणयाइं । सो किर तेसु विसेसरसिओ, तहावि रायनिउत्तपत्ति-

१ ' एयजीवियरक्खा ' इत्यपि । २ ' अच्छड्डंतो ' इत्यपि ॥

परिगओ भेसिज्जंतोवि तेहिं जीवियलोहेण पत्तिमेत्तनिहित्तनेत्तचित्तो सव्वत्थ भमिऊण गओ रायसमीवं । पुरओ मोत्तूण पत्तिं निवडिओ चलणेसु । भणिओ रन्ना, सेट्ठिपुत्त ! अच्चंतचंचलाइं मणलोयणाइं, ता कह तुमे अइवल्लहेसु पेच्छणाएसु जं ताइं निरुद्धाइं । तेण भणियं, सामि ! मरण भीएण । रायाह, जइ तुमे एगमरणभीएण एवमप्पमाओ सेविओ, ता कहमणंतजम्ममरणभीया साहुणो तं न सेवंति । एयमायन्निऊण पडिबुद्धो सेट्ठिपुत्तो । जाओ पहाणसमणोवासओ । एवमणेगे पाणिणो तेण पत्थिवेण जिण धम्मे पवत्तिया । एरिसो पवयणकुसलो भावसावओ होइत्ति ॥

अथ प्रकृतमुपसंहरन्नाह—

**एसो पवयणकुसलो छब्भेओ मुणिवरेहि निद्दिट्ठो । किरियागयाइं छ च्चिय लिंगाइं भावसड्ढस्स ॥५५॥**

' एषः ' उक्तस्वरूपः प्रवचनकुशलः षड्भेदो व्यक्त एव ' मुनिवरैः ' पूर्वाचार्यैः निर्दिष्टः । ततश्चावसितं श्रावकलिङ्गषट्कप्रकरणमित्येतद्दर्शयन्नाह—' क्रियागतानि ' क्रियोपलक्षणानि । चियशब्दस्यावधारणार्थत्वात् षडेव ' लिङ्गानि ' लक्षणानि 'अग्नेर्धूमवत्,' ' भावश्राद्धस्य ' यथार्थाभिधानश्रावकस्य । इति गाथार्थः ॥ ५५ ॥

ननु किमन्यान्यपि लिङ्गानि सन्ति येनैवमुच्यते क्रियागतानि ? सत्यं, सन्त्येव । यत आह—

**भावगयाइं सतरस मुणिणो एयस्स बिंति लिंगाइं । जाणियजिणमयसारा पुव्वायरिया जओ आहु ॥ ५६ ॥**

' भावगतानि ' भावविषयाणि सप्तदश ' मुनयः ' सूरयः ' एतस्य ' प्रकृतश्रावकस्य ' ब्रुवते ' प्रतिपादयन्ति ' लिङ्गा-

नि ' चिह्नानि ' ज्ञातजिनमतसाराः ' इति व्यक्तम् । 'पूर्वाचार्याः ' चिरन्तनसूरयो ' यतो ' यस्मात् ' आहुः ' ब्रुवन्ति । इत्यनेन स्वमनीषिकापरिहारमाह ॥ ५६ ॥

किं तदाहुः ? इत्याह—

इत्थिंदियत्थसंसारविसयआरंभगेहदंसणओ । गड्डरिगाइपवाहे पुरस्सरं आगमपवित्ती ॥ ५७ ॥
दाणाइ जहासत्ती पवत्तणं विहिररत्तदुट्ठे य । मज्झत्थमसंबद्धे परत्थकामोवभोगी य ॥ ५८ ॥
वेसा इव गिहवासं पालइ सत्तरसपयनिबद्धं तु । भावगय भावसावगलक्खणमेयं समासेण ॥५९॥

आसां पूर्वमुनिप्रणीतगाथानां व्याख्या—स्त्री चेन्द्रियाणि चार्थश्चेत्यादि द्वन्द्वः । ततः स्त्रीन्द्रियार्थसंसारविषयारम्भगेहदर्शनानि, तेष्वित्याद्यादेराकृतिगणत्वात्तसि कृते ' स्त्रीन्द्रियार्थसंसारविषयारम्भगेहदर्शनतः ' इति भवति । ततश्चैतेषु विषयभूतेषु ' भावगतं भावश्रावकलक्षणं ' भवतीति तृतीयगाथायां संबन्धः । तथा गड्डरिकादिप्रवाहविषये । तथा ' पुरस्सरमागमप्रवृत्तिः ' इति प्राकृतत्वाच्छन्दोभङ्गभयाच्च पूर्वापरनिपातः । ततश्चागमपुरस्सरं प्रवृत्तिर्वर्त्तनं धर्मकार्येष्विति गम्यते, प्रकृतं लिङ्गमिति । तथा ' दानादि यथाशक्ति प्रवर्त्तनम् ' इति स्पष्टम् । प्राकृतत्वाद्दीर्घत्वं भावगतं लिङ्गमिति । तथा ' विह्रीकः' धर्मानुष्ठानं कुर्वन्न लज्जति । तथा ' अरक्तद्विष्टश्च ' सांसारिकभावेषु भवति । ' मध्यस्थः ' धर्मविचारे न रागद्वेषाभ्यां बाध्यते ' असंबद्धः ' धनस्वजनादिषु भावप्रतिबन्धरहितः । ' परार्थकामोपभोगी ' परोपरोधादेव कामेषु शब्दरूपरूपेषु, भोगेषु गन्धरसस्पर्शेषु प्रवर्त्तते । तथा ' वेश्येव ' पण्यस्त्रीव कामिनमिति गम्यते । 'गृहवासं पालयति' अद्य श्वो वा परित्यजाम्येनमिति भावयन्निति सप्तदशविधपदनिबद्धं ' तुः ' पूरणे । 'भावगतं' परिणामरूपमिति जातावेकवचनं, अनुस्वारस्य प्राकृतशैल्या लुप्तत्वात् । उक्तं च—" नीयालोवमभूया य आणिया दोवि बिंदुदुब्भावा । अत्थं गमिंति तं चिय जो तेसिं पुव्वमेवासि ॥ १ ॥ " भावश्रावकलक्षणमेतत् ' समासेण ' सूचामात्रेण । इति गाथार्थः ॥ ५९ ॥

सांप्रतमेषामेव भावार्थं प्रचिकटयिषुर्गाथासप्तदशकमाह—

इत्थीमणत्थभवणं चलचित्तं नरयवत्तिणीभूयं । जाणंतो हियकामी वसवत्ती होइ न हु तीसे ॥६०॥

'स्त्रीम्' योषितमनर्थानां दोषाणां भवनमाश्रयस्थानम् । तद्यथा—" अनृतं साहसं माया मूर्खत्वमतिलोभता । अशौचं निर्दयत्वं च स्त्रीणां दोषाः स्वभावजाः ॥ १ ॥ " तथा ' चलचित्ताम् ' अन्यान्याभिलाषिणीम् । उक्तं च—" अन्नं ज्झायंति मणे पेसलवयणाइं दिंति अन्नस्स । दिट्ठीए नियंतन्नं रमंति काएण पुण अन्नं ॥ १ ॥ " तथा नरकस्य वर्त्तिनीभूतां मार्गकल्पां ' जानन् ' अवगच्छन् ' हितकामी ' श्रेयोऽभिलाषकः ' वशवर्त्ती ' तदधीनचारी ' भवति ' स्यात् ' न हु ' नैव ' तस्याः ' स्त्रिय उष्ट्रपत्रविक्रयकवत् । भावयति च—" आनायास्तिमिसंहतेरिव दृढाः पाशागतानामिव प्रास्तीर्णा इव सर्वदिक्षु हरिणव्रातस्य वा वागुराः । स्वैरभ्रान्तिभृतः पतत्रिनिवहस्यैवाहिताः स्कन्धकाः संसारेऽत्र विवेकमुक्तमनसां बन्धाय वामभ्रुवः ॥ १ ॥ " १ ॥ ६० ॥

तथा—

इंदियचवलतुरंगे दोग्गइमग्गाणुधाविरे निच्चं । भावियभवस्सरूवो रुंभइ सन्नाणरस्सीहिं ॥ ६१ ॥

इन्द्रियाण्येव चपलाः शीघ्रगामित्वेन तुरङ्गाः अश्वास्तान्, दुर्गतिमार्गे दुर्योनिपदवीमनुधाविरान् धावनशीलान् 'नित्यम्' सदा भावितं पुनः पुनरालोचितं भवस्वरूपं येन स तथाविधो 'रुणद्धि' निवर्त्तयति सतीभिः शोभनाभिर्ज्ञानरश्मिभिः श्रुतवल्गाभिः । तद्यथा—"तवकुलछायाभंसं पंडिच्चफंसणा अणिट्ठपहं । वसणाणि रणमुहाणि य इंदियवसगा अणुहवंति ॥१॥" तथा—" दिवसरजनिसारैः सारितं पक्षगेहं समयफलकमेतन्मण्डितं भूतधात्र्याम् । इह हि जयति कश्चिन्मोक्षमक्षैर्विधेयैरधिगतमपि चान्ये विप्लुतैर्हारयन्ति ॥ १ ॥ " २ ॥ ६१ ॥

तथा—

सयलाणत्थनिमित्तं आयासकिलेसकारणमसारं । नाऊण धणं धीरो न हु लुब्भइ तंमि तणुयंपि ॥६२॥

इह धनं ज्ञात्वा तत्र न लुभ्यतीति योगः । किंविशिष्टं धनम् ? 'सकलानर्थनिमित्तं' समस्तदुःखनिबन्धनम् । उक्तं च—"अर्थानामर्जने दुःखमर्जितानां च रक्षणे । नाशे दुःखं व्यये दुःखं धिगर्थो दुःखभाजनम् ॥ १ ॥ " तथा 'आयासः' चित्तखेदः । यथा—"राजा रोक्ष्यति किं तु मे हुतवहो दग्धा किमेतद्धनं किं चामी प्रभविष्णवः कृतनिभं लास्यन्त्यदोगोत्रिकाः । आदास्यन्ति च दस्यवः किमु तथा नंष्टा निखातं भुवि ध्यायन्नेतदहर्निशं धनयुतोऽप्यास्तेतरां दुःखितः ॥१॥" तथा 'क्लेशः' शरीरपरिश्रमस्तयोः 'कारणं' निबन्धनम् । तथा हि—" अर्थार्थं नक्रचक्राकुलजलधिमलं केचिदुच्चैस्तरन्ति प्रोद्यच्छस्त्राभिघातोत्थितशिखिकणकं जन्यमन्ये विशन्ति । शीतोष्णाम्भःसमीरग्लपिततनुलताः क्षेत्रिकां कुर्वतेऽन्ये शिल्पं चानल्पभेदं विदधति च परे नाटकाद्यं च केचित् ॥१॥ " तथा 'असारं' सारफलासंपादनात् । उक्तं च—"व्याधी-

म्नो निरुणद्धि मृत्युजननज्यानिक्षयेन क्षमं नेष्टानिष्टवियोगयोगहृतिकृत्सभ्यङ् न जन्मान्तरे। चिन्ताबन्धुविरोधबन्धनभयत्रासास्पदं प्रायशो वित्तं वित्तविचक्षणः क्षणमपि क्षेमावहं नेक्षते ॥ १ ॥" इत्थंभूतं धनं ज्ञात्वा 'न हु लुब्भति' नैव तत्र गृध्यति ( 'धीरो' धीमान्, 'तस्मिन्' द्रव्ये, ) मम्मणवणिग्वत् । 'तनुकमपि' स्तोकमप्यास्तां बहित्यपरर्थः । भावश्रावको हि नान्यायेन तदुपार्जनाय प्रवर्त्तते । नाऽप्युपार्जितेऽतितृष्णावान् स्यात् । किं तर्हि ?—"पादमायान्निधिं कुर्यात् पादं वित्ताय खण्डयेत् । धर्मोपभोगयोः पादं पादं भर्त्तव्यपोषणे ॥ १ ॥ इच्छतोऽनिच्छतो वाऽपि मामकं द्रविणं सदा । चैत्यसाधूपभोगाय भूयात् सर्वे भवे भवे ॥ २ ॥" इति मनोरथवांस्तत्पालनादि करोतीति भावः ३ ॥ ६२ ॥

तथा—

**दुहरूवं दुक्खफलं दुहाणुबन्धिं विडंबणारूवं । संसारमसारं जाणिऊण न रइं तहिं कुणइ ॥ ६३ ॥**

इहापि तत्र संसारे रतिं न करोतीति योज्यम् । किं कृत्वा ? ज्ञात्वा संसारम् । किंविशिष्टम् ? 'दुःखरूपं' दुःखस्वभावम् । तदुक्तम्—" जम्मं दुक्खं जरा दुक्खं रोगा य मरणाणि य । अहो ! दुक्खो हु संसारो जत्थ किस्संति जंतुणो ॥ १ ॥" तथा 'दुःखफलं' जन्मान्तरे नरकादिदुःखभावात् । 'दुहाणुबंधिं' इति दुःखानुबन्धिनं पुनः पुनर्दुःखसन्तानसन्धानात् । तथा चाह—"जाव इमो संसारो जाव य जीवस्स एत्थ आवासो । ता जम्मणमरणाणं कत्तो अंतो अणंताणं ॥ १ ॥" तथा विडम्बनायामिव जीवानां विचित्राणि रूपाणि यत्र स तथा । पठ्यते च—"देवो नेरइओत्ति य कीडपयंगोत्ति माणुसो वेसो । रूवस्सी य विरूवो सुहभागी दुक्खभागी य ॥ १ ॥" इत्यादि । एवंविधं 'संसारं' चतुर्गतिरूपं सुखसाराभावादसारं 'ज्ञात्वा' अवबुध्य न 'रतिं' धृतिं तस्मिन् 'कुरुते' विदधाति भावश्रावकः । चिन्तयति च—"धन्ना ते सप्पुरिसा जे नवरमणुत्तरं गया मोक्खं । जम्हा ते जीवाणं न कारणं कम्मबंधस्स ॥ १ ॥" इति ४ ॥ ६३ ॥

तथा—

**खणमेत्तसुहे विसए विसोवमाणे सयावि मन्नंतो । तेसु न करेइ गिद्धिं भवभीरू मुणियतत्तत्थो ॥ ६४ ॥**

क्षणमात्रं सुखं येभ्यस्ते, तथा तान् 'विषयान्' शब्दादीन् 'विषोपमानान्' परिणामदारुणान् 'सदाऽपि' नैकदैव 'जानानः' बुध्यमानो, यथा किल विषं भुज्यमानं मधुरमास्वादं दर्शयति, परिणामे तु प्राणप्रहाणाय संपद्यते । एवमेतेऽपि विषया विरसावसानाः । यदाह वाचकः—"आदावत्यभ्युदया मध्ये श्रृङ्गारहास्यदीप्तरसाः । निकषे विषया बीभत्सकरुणलज्जाभयप्रायाः ॥ १ ॥ यद्यपि निषेव्यमाणा मनसः परितुष्टिकारका विषयाः । किंपाकफलादनवद्भवन्ति पश्चाददतिदुरन्ताः ॥ २ ॥ " इत्यवगच्छन् भावश्रावकः तेषु न कुर्यात् ' गृद्धिं ' अत्यासक्तिं ' भवभीरुः ' संसारवासचकितमनाः । भावयति च—" सम्मद्दिट्ठीवि कयागमोवि अइविसयरागसुहवसगो । भवसंकडंमि पविसइ एत्थं तुह सच्चई नायं ॥ १ ॥ " किमिति गृद्धिं न करोति ? यतो ' मुणिततत्त्वार्थः ' जिनवचनश्रवणाद्विज्ञाततदसारत्वः । तथा हि जिनवचनम्—" विसएसु नत्थि सोक्खं सुहाहिमाणो जियाण पुण एसो । पित्ताउरनयणाणं उवलंमि सुवन्नवुद्धि व ॥ १ ॥ " तथा—" भुज्जंता महुरा विवागविरसा किंपागतुल्ला इमे कच्छू कंडूयणं च दुक्खजणया भाविंति वुद्धिं सुहे । मज्झण्हे मयतिण्हिय व निययं मिच्छाभिमंधिप्पया भुत्ता दिंति कुजोणिजम्मगहणं भोया महावेरिणो ॥ १ ॥" ५ ॥ ६४ ॥

तथा—

**वज्जइ तिव्वारंभं कुणइ अकामो अनिव्वहंतो उ। थुणइ निरारंभजणं दयालुओ सव्वजीवेसु ॥ ६५ ॥**

' वर्जयति ' न करोति ' तीव्रारम्भं ' प्राज्यप्राणिपीडाहेतुं व्यवसायं खरकर्मादिकं, ढण्ढणकुमारादिवृत्तान्ताकर्णनात् । करोति ' अकामः ' मन्दादरः, तं विना ' अनिर्वहन् ' तुशब्दो विशेषणार्थः, किंविशिनष्टि ? सशूको गुरुलाघवालोचनपूर्वकं न निर्द्धन्धसवृत्त्येति । यतः—" सम्मद्दिट्ठी जीवो जइवि हु पावं समायरइ किंचि । अप्पोत्ति होइ बंधो जेण न निद्धंधसं कुणइ ॥ १ ॥ " तथा ' स्तौति ' प्रशंसति ' निरारम्भजनं ' साधुलोकम् । एवम्—" धन्ना हु महामुणिणो मणसावि करंति जे न परपीडं । आरंभपावविरया भुंजंति तिकोडिपरिसुद्धं ॥ १ ॥ " तथा ' दयालुकः ' कृपावान् सर्वजीवेषु ' समस्तप्राणिषु ।—" एगस्स कए नियजीवियस्स बहुयाउ जीवकोडीओ । दुक्खे ठवंति जे केइ ताण किं सासयं जीयं ? ॥ १ ॥ " इत्यादि भावयन् भावश्रावकः ६ । इति गाथार्थः ॥ ६५ ॥

तथा—

**गिहवासं पासं पिव मन्नंतो वसइ दुक्खिओ तंमि । चारित्तमोहणिज्जं निज्जिणिउं उज्जमं कुणइ ॥६६॥**

'गृहवासं' गृहस्थतां 'पाशं' बन्धनविशेषमिव 'मन्यमानः' भावयन् 'वसति' अवतिष्ठते 'दुःखितः' दुःखवान् 'तस्मिन्' गृहवासे । यथा हि किल पाशपतितो विहङ्गमो नोत्पतितुं शक्नोति, कष्टं च तत्रावस्थानं कलयति । तथा वयमपि संसारभीरवोऽपि न प्रव्रजितुं शक्नुम इति । अपि च—"नागो जहा पंकजलावसन्नो दट्ठुं थलं नाहिसमेइ तीरं । एवं वयं

कामगुणेसु गिद्धा न भिक्खुणो मग्गमणुवयामो ॥ १ ॥" इत्यादि चिन्तयन् दुःखित इव गृहे तिष्ठति भावश्रावक इति। अत एव 'चारित्रमोहनीयं' कर्म 'निर्जेतुं' अभिभवितुं 'उद्यमं' प्रयत्नं 'करोति' चारित्रवतां दानसन्मानविनयप्रभावनादौ सर्वादरेण प्रवर्त्तते, अप्रीतिनिन्दालेशमपि न करोति। यतः—"एते निर्वृतिहेतवो मुनिगुणा निन्दाकृतां दुर्लभा नृणां सन्ति भवान्तरेऽपि सुलभाः सस्नेहपूजाकृताम्। तस्मान्निर्वृतिलिप्सुना मुनिजने कार्यो विचार्यादरो द्वेषोऽनर्थकदर्थनैकनिलयो हेयः सदा दूरतः ॥ १ ॥" इति ७ ॥ ६६ ॥

तथा—

**अत्थिक्कभावकलिओ पभावणा वन्नवायमाइहिं। गुरुभत्तिजुओ धीमं धरेइ सइ दंसणं विमलं ॥ ६७ ॥**

भावश्रावको 'दर्शनं' सम्यक्त्वं 'विमलं' अकलङ्कं धारयतीति पर्यन्ते योगः। कथंभूतः सन्? इत्याह—देवगुरुधर्मतत्त्वेष्वास्तिक्यरूपो यो भावः परिणामस्तेन कलितो युक्तः।—"मोत्तूण जिणं मोत्तूण जिणमयं जिणमए ठिए मोत्तुं। संसारकन्तवारं सधम्मकम्मं जगं सेसं ॥ १ ॥" इति निश्चयसारप्रतिपत्तिः। 'प्रभावना' उत्सर्पणा अष्टप्रकाराः। उक्तं च—"पावयणी धम्मकही वाई नेमित्तिओ तवस्सी य। विज्जासिद्धो य कवी अट्ठेव पभावगा भणिया ॥ १ ॥" तस्याः शक्तितः स्वयंकरणेन शक्त्यभावेन तत्कारिणामुपष्टम्भबहुमानतः। तथा 'वर्णवादः' प्रशंसनम्। आदिशब्दाच्चैत्यायतनयात्रातीर्थयात्रादिभिः करणभूतैः। गुरुर्धर्माचार्यस्तत्र विशेषतो भक्तियुक्तः। कृतज्ञतासारमिदमालोचयन्—"संमत्तदायगाणं दुप्पडियारं भवेसु बहुएसु। सव्वगुणमेलियाहिवि उवयारसहस्सकोडीहिं ॥ १ ॥" ('धीमान्' मतिमान् 'सदा' निरन्तरं) इत्थं निष्कलङ्कं दर्शनं धारयति ८। इति गाथार्थः ॥ ६७ ॥

तथा—

**गड्डरिगपवाहेणं गयाणुगइयं जणं वियाणंतो। परिहरइ लोगसन्नं सुसमिक्खियकारओ धीरो ॥ ६८ ॥**

गड्डरिका एडकास्तासां प्रवाहः सञ्चरणं, एकस्या अनुमार्गेण सर्वासां गमनम्। गड्डरिकाप्रवाहद्वारगाथायामादिशब्दः कीटकादिप्रवाहसूचनार्थः। तेन कृत्वा 'गतानुगतिकं' अविचारितचारिणं 'जनं' लोकं विजानन्। उदाहरणमत्र—

वाणारसीनयरीए कम्हि महूसवे लोगो न्हाइउं गंगामोइन्नो। तत्थ एगो विप्पो तंबभायणपाणी पाणीयमोगाहिउकामो चोरभयाओ भायणं वालुयामज्झे निहणइ। उवरिं चाभिन्नाणनिमित्तं वालुगापुंजं करेइ, ताहे नीरमोयरइ। तं च दट्ठूण अन्नोवि अन्नोवि एवं पकओ जाव जायं पुंजपुंजाउलं पुलिणं। उत्तिन्नो भट्टो न जाणाइ कत्थ पुंजे तंबभायणं। दट्ठूण पुंजकरणपयट्टे लोए पुच्छइ, अरे! किमेए पुंजा कीरंति? अन्नो अन्नमुद्दिसइ, जाव परंपराए। अन्नेण भणियं, भट्ट! मए तुममेव कुणंतो दिट्ठोसि, तओ एस एत्थ विहित्ति मएवि कओ। भट्टो भणइ, न मए विहित्ति पुंजो कओ, किं तु भायणलक्खणत्थं। तं च तुब्भेहिं सुट्ठुअरं हारियंति। पठितं च ब्राह्मणेन—"गतानुगतिको लोको न लोकः पारमार्थिकः। पश्य मूर्खेण लोकेन हारितं ताम्रभाजनम् ॥ १ ॥"

एवंविधं लोकं जानन् परिहरति 'लोकसंज्ञाम्' अविचारितरमणीयां लोकहेरिम्। किं तर्हि? 'सुपरीक्षितकारकः' सुपर्यालोचितविधायी 'धीरो' मतिमान् भावश्रावको भवति ९। इति गाथार्थः ॥ ६८ ॥

तथा—

**नत्थि परलोगमग्गे पमाणमन्नं जिणागमं मोत्तुं। आगमपुरस्सरं चिय करेइ तो सव्वकिच्चाइं ॥ ६९ ॥**

'नास्ति' न विद्यते परः प्रधानो लोको मोक्षस्तस्य मार्गे ज्ञानादित्रयरूपे 'प्रमाणं' प्रत्ययहेतुरन्यत्। जिना रागादिजेतारस्तैः प्रणीतः सिद्धान्तो जिनागमस्तं मुक्त्वा तस्यैवान्यथात्वासंभवात्। उक्तं च—"रागाद्वा द्वेषाद्वा मोहाद्वा वाक्यमुच्यते ह्यनृतम्। यस्य तु नैते दोषास्तस्यानृतकारणं किं स्यात्? ॥ १ ॥" पूर्वापराविरुद्धत्वाच्च। तथा हि—"धर्मस्य मूलं करुणा यथोदिता तद्वत् क्रियाऽप्यङ्गिहिता जिनोत्तमैः। सामायिकं साधितमादितो यथा क्षान्त्यादयोऽप्येवममुष्य पालकाः ॥१॥" 'आगमपुरस्सरं' आगमपर्यालोचनपूर्वकमेव, चियशब्दस्यैवकारार्थत्वात्। 'करोति' अनुतिष्ठति 'ततः' हेतोः सर्वाः क्रियाः सकलकार्याणि चैत्यवन्दनादीनि। तत्र चैत्यवन्दनविधिस्त्रिकदशकाराधनरूपः। तथा चागमः—"तिन्नि निसीहिय तिन्नि य पयाहिणा तिन्नि चेव य पणामा। तिविहा पूया य तहा अवत्थतिअ भावणं चेव ॥ १ ॥ तिदिसिनिरिक्खणविरई पयभूमिपमज्जणं च तिक्खुत्तो। वन्नाइतियं मुद्दातियं च तिविहं च पणिहाणं ॥ २ ॥ इय दहतियसंजुत्तं वंदणयं जो जिणाण तिक्कालं। कुणइ नरो उवउत्तो सो पावइ सासयं ठाणं ॥ ३ ॥" इत्यादि। पूजाविधिः—देवगुणपरिज्ञानात्तद्भावानुगतमुत्तमविधिना स्यादादरादियुक्तं यत्तद्देवार्चनं चेष्टम्। यथा—"काले सुइभूएणं विसिट्ठपुप्फाइएहि विहिणा उ। सारथुइथोत्तगरुई जिणपूया होइ कायव्वा ॥ १ ॥ वत्थेण बन्धिऊणं नासं अहवा जहा समाहीए। वज्जेयव्वं तु तहा देहंमिवि कंडुयणमाई ॥२॥" गुरुवन्दना—द्वादशावर्त्तादि द्वादशावर्त्तं षट्स्थानाराधनरूपं पञ्चविंशत्यावश्यकवि-

शुद्धं द्वात्रिंशद्दोषविकलं च भवति । तत्र स्थानानि—"इच्छा य अणुन्नवणा अव्वाबाहं च जत्त जवणा य । अवराहखा-मणावि य छ ट्ठाणा हुंति वंदणए ॥ १ ॥" आवश्यकाः—अवणामदुगं अहजायरूवया तह दुवालसावत्ता । चउसिर तिगुत्त दुपवेस निग्गमो एक्कसिं चेव ॥ १ ॥" दोषास्तु—"वज्जेऽणाढिय थद्धं पविद्ध परिपिंडियं च टोलगइं । अंकुस कच्छभरिंगिय मच्छुव्वत्तं मणपउट्ठं ॥ १ ॥ वेइयबद्धं भयसा भयंत मेत्ति च गारवा कज्जा । तेणिय पडणिय रुट्ठं तज्जिय सढ हीलिय विलुत्तं ॥ २ ॥ दिट्ठमदिट्ठं सिंगं करमोयणयं तहा अणालिद्धं । ऊणं उत्तरचूलिय मूयं तह ढड्ढरं चुडलिं ॥ ३ ॥" एतेषां व्याख्या—"आयाररहियमणाढिय सुन्नयमणविग्गहो कुणइ थद्धं । पविद्धमणुवयारं अनिज्जंतिअओ व जं देइ ॥ १ ॥ परिपिंडियं च वंदइ पिंडियवयणेहिं पिंडिए वावि । टोलगइं सेलो इव उप्फिडिउं विसयनीई वा ॥ २ ॥ उवगरणाइसु घेत्तुं गुरुं निवेसेइ अंकुसं भणियं । कच्छभरिंगियमन्नं वंदिउमभिजाइ रिंगंतो ॥ ३ ॥ मच्छुव्वत्तं उट्ठणनि-सीयणे मच्छओ व उव्वत्ते । अन्नं वंदिउमहवा परियत्तइ सत्तिमीणो व ॥ ४ ॥ अप्पपरपत्तिएणं मणप्पओसेण मणपउ-ट्ठंति । वेइयपणगं सम्मं न वज्जए वेइयावद्धं ॥ ५ ॥ निच्छुभणाइभएणं भयकिइकम्मं न निज्जरा हेउं । भयई भइस्सइत्ति य सन्होरयं वंदइ भयंतं ॥ ६ ॥ मेत्तीहेउं मेत्तीगारवओ विहिविऊ विणीओहं । एहि य पओयणेणं सकारणं निष्फलं तंपि ॥ ७ ॥ ओहावणाभएणं गूहियकिरियस्स तेणियं जाण । पडणीयं पुण गुरुणो आहाराईण समयंमि ॥ ८ ॥ कय-भालच्छिवियारो रुट्ठो जं कुणइ तं भवे रुट्ठं । अंगुलिमाईहिं गुरुं तज्जेमाणस्स तज्जियय ॥ ९ ॥ गूहियविरियस्स सढं हीलियय नेइ वायगगणित्ति । विकहं करेइ दरवंदियम्मि पलिउंचियमिमत्ति ॥ १० ॥ दिट्ठमदिट्ठं जं खलु दीसंतो कुणइ नो अदीसंतो । पासेहि सीसनमणं सिंगं मन्नंति पुव्वमुणी ॥ ११ ॥ एसो करोत्ति वंदइ एयं करवंदणं सुए सिट्ठं । मुच्ची-हामो दिन्नेण नन्नहा मोयणं एयं ॥ १२ ॥ ओलिद्धाणालिद्धे रयहरसीसे य होइ चउभंगो । आवस्सगपयवयणक्खरेहिं हीणं भवे ऊणं ॥ १३ ॥ उत्तरचूलं वंदिय भणइ वंदामि मत्थएणंति । मूयं च सद्दरहियं ढड्ढरयं ढड्ढरसरेण ॥ १४ ॥ चुडलिं च रओहरणं गिण्हेइ भामेइ वा करे दिंतो । सव्वे वंदामोत्ती वत्तीस इमो चुडलिदोसो ॥ १५ ॥" प्रत्याख्यान-विधिः—"वंदणयं दाऊणं अवणयकाओ कयंजली गुरुणो । अणुभासंतो वयणं पच्चक्खाणं तु गिण्हेज्जा ॥ १ ॥" दान-विधिः—"नायागयाणं कप्पणिज्जाणं अन्नपाणाईणं दव्वाणं देसकालसद्धासक्कारकमजुयं पराए भत्तीए आयाणुग्गहबुद्धीए संजयाण दाणं ॥" इत्याद्यासागमपुरस्सरं सर्वाण्यपि कृत्यानि भावश्रावकः करोतीति १० ॥ ६९ ॥

तथा—

**अनिगूहिंतो सत्तिं आयावाहाए जह वहुं कुणइ । आयरइ तहा सुमई दाणाइचउव्विहं धम्मं ॥ ७० ॥**

'अनिगूहन्' अगोपायन् 'शक्तिं' सामर्थ्यं 'आत्माबाधया' स्वस्य परिजनस्य च पीडां परिहरन् दानादिचतुर्विधं धर्मं आचरतीति योगः । यतोऽवाचि—"न्यायात्तं स्वल्पमपि हि भृत्यानुपरोधतो महादानम् । दीनतपस्व्यादौ गुर्वनुज्ञयादानम-न्यत्तु ॥ १ ॥" यथा 'बहु करोति' बहुकालं यावन्तं कर्तुं शक्नोति । अयमत्र भावः—सति विभवे नातितृष्णको भवति, तनुविभवो नात्युदारः स्यात्, सर्वाभावसंभवात् । अत एवोक्तं पञ्चसूत्रे—"लाभोचियदाणे लाभोचियभोयणे लाभोचिय-परिवारे लाभोचियनिहिगरे सिया ।" स एवं कुर्वाणो बहुना कालेन प्रभूतं दद्यात् । अन्यैरप्युक्तम्—"अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य च वर्धनम् । अवन्ध्यं दिवसं कुर्याद्दानाध्ययनकर्मसु ॥ १ ॥" एवं शीलतपोभावनास्वपि भावनीयम् । 'आचरति' आसेवते 'तथा' तेन प्रकारेण 'सुमतिः' पारिणामिकीबुद्धिप्रधानो दानादिचतुर्विधं धर्ममिति स्पष्टं भावितं चेति ११॥७०॥

१ अन्यत्र "आलिद्धमणालिद्धे" इत्यस्ति । "आलिद्धाणालिद्धे" इत्यपि ॥

तथा—

**हियमणवज्जं किरियं चिंतामणिरयणदुल्लहं लहिउं । सम्मं समायरंतो न हु लज्जइ मुद्धहसिओवि ॥ ७१ ॥**

'हितां' पथ्यामिहलोकपरलोकयोः, 'अनवद्यां' अपापां 'क्रियां' अनुष्ठानं वन्दनप्रतिक्रमणादिकं 'सम्यग्' गुरूपदिष्ट-विशिष्टविधिना 'समाचरन्' सम्यगासेवमानो न लज्जति ( ते ) इति संबन्धः । किं विशिष्टां क्रियाम् ? इत्याह—चिन्ता-मणिरत्नमिव दुर्लभां दुरापां 'लब्ध्वा' अवाप्य मुग्धैर्जडैर्हसितोऽपीत्यक्षरार्थः स्पष्ट एव । भावार्थः कथानकगम्यः ॥ ७१ ॥

तच्चेदम्—

हत्थिणाउरे नयरे नागदेवो नाम सेट्ठी होत्था । तस्स वसुंधरा गेहिणीजाओ जयदेवो पुत्तो । तेण दुवालसवासाणि लेहसालाए पढंतेण सिक्खिया रयणपरिच्छा । विन्नाया सव्वरयणगुणा, तेसिं लक्खणाणि य । तओ चिंतियत्थदाणाओ चिंतामणी चेव रयणं किमन्नेहिं सेलसयलसरिसेहिं ? । एस चेव विउसाणमुवाएओ । अहंपि सव्वायरेण एयं चेव गवेसा-मित्ति संपहारिऊण घराओ घरं हट्टाओ हट्टं भमंतो रयणाणि परिच्छिउं पवत्तो । जाहे सनयरे न पावइ चिंतामणिं, ताहे जणयमापुच्छिऊण चलिओ नयरंतरेसु । भणिओ जणएहिं, पुत्त ! किमेइणा वाएण ? न एस कत्थइ अत्थि, उवमा चेव

एसा पंडियजणेण कया । ता दिट्ठसिट्ठइट्ठववहारेण ववहरसु, जेण सुपीवरसिरीए भायणं होहि । तहावि सो चिंतामणिसत्थमणुगुणंतो तस्संपत्तिसमुस्सुओ बलावि जणयाणं निग्गओ नयराओ । पवत्तो पइनयरं रयणाणि गवेसिउं । तेसुवि तमपेच्छंतो समारूढो पव्वयसिहरेसु । किलिस्सिओ समुद्दतीरेसु वेलाउलेसु कत्थइ अलहंतो चिंतिउं च पवत्तो । किं मन्ने सच्चमेयं ? नत्थि चेव एसो । अहवा न सत्थभणियमन्नहा होइत्ति कयनिच्छओ पुणो परिब्भमिउमारद्धो । अन्नया गामं गामेण मणिखाणीओ पुच्छमाणस्स सिट्ठं केणावि वुड्ढपुरिसेण, अत्थि अमुगदेसे मणिवई नाम पाहाडिगा । तत्थ जो पुन्नवंतो सो मणिणो पावेइ । तओ पुच्छाउच्छीए किच्छेण पत्तो तत्थ गवेसंतो मणिणो । मिलिओ एगस्स पसुवालस्स उवविट्ठाण य गोट्ठीए । दिट्ठो तस्स हत्थे वट्टपासाणो, गहिओ, परिच्छिओ, परिन्नाओ य जयदेवेण । चिंतामणी एसोत्ति हरिसिएण मग्गिओ । अजवालो न देइ भणइ य, किमिइणा करिस्ससि ? । जयदेवो भणइ, गिहं गओ बालस्स कीलणयं दाहामि । पसुवालो भणइ, एत्थ एरिसा अणेगे अत्थि ता किं न गवेसेसि ? । इयरो, भणइ अहमुस्सुओ नियगामं गच्छामि, तुममेत्थ वत्थव्वओ अन्नमन्नं पाविहिसि, ता देहि ममेयंति । जाहे अपरोवयारसीलयाए सो कहवि न देइ ताहे वरमेयस्सावि एस उवयरउ, मा निप्फलो होउत्ति भावितेण साहिओ से वणिएण सब्भावो । भद्द ! एस चिंतामणी वुच्चइ, जइ ममं न देहि ता अप्पणावि एयमाराहेहि, जेण चिंतियाचिंतियाइं सुहाइं पावेसि । आभीरेण वुत्तं जइ सच्चमेस चिंतामणी ता चिंतियाइं मए बोरकच्चराइं, सिग्घं देउ । इयरेण वुत्तं, न एवं चिंतिज्जइ, किं तु उववासतिगंतिमराइमुद्दे समज्जिओवलित्तभूमिए चंदणोवलित्तकप्पूरपयरच्चियपसत्थपट्टे अहयवत्थोवरि ण्हवियविलित्तो एस ठाविज्जइ । सुरहिकुसुमेहिं पेच्छादिज्जइ । तओ पणमिऊण लक्खं वा कोडिं वा चिंतिज्जइ । पहायसमए सघ्घेयस्स पुरओ पुंजीकयं पाविज्जइ । इमं सोऊण तुट्ठेण आभीरेण वालियाओ छालियाओ गामाभिमुहं । एयाओ विक्किणिऊण कप्पूराइदव्वेहिं तुह पुयं करिस्सं । सव्वं पडियकहियं विहाणमणुट्ठिस्सं । तुमं पुण मम चिंतियं मा विफलीकरेज्जासि, जेण ते चिंतामणिनामं सच्चं होइ । एवं मणिमुल्लवंतो चलिओ गामाभिमुहमाभीरो । इयरोवि तयलाभविसन्नो विचिंतेइ, न एस निब्भग्गसेहरो एयं मणिरयणं धारिउं तरिस्सइ, ता अणुगच्छामि पेच्छामि य किमेस करेइत्ति चिंतिऊण लग्गो तयणुमग्गेण । ताव य भणियमाभीरेण, भो चिंतामणि ! दीहो मग्गो ता कहेहि किंचिवि कहाणयं, जेण सुहं निवहइ । अह तुमं न जाणसि तो खाइं ते अहं कहेमित्ति चिंतेण पारद्धमणेण कहाणयं । जाहे मणी हुंकारंपि न देइ, ताहे कुविएण एरिसो निद्दक्खिन्नो तुमं मम हुंकारंपि न देसि, कीइसी पुण लक्खसहस्सेसु आसा ?, ता न होसि चिंतामणी तुमं । अहवा सच्चं चिंतामणी चेवासि, जओ जप्पभिइं पाविओसि तप्पभिइं मम चिंता मणे न फिट्टइ । तहा जोहं पभाए समुट्ठिओ सीयलरब्बाभोयणं छासीए रोट्टयं च अणुवजीवंतो पयंपि चलिउं न पारेमि, सो कहमुववासतिगेण न मरामि ?, ता तेण वेरिणा मम मारणत्थमेव पक्खित्तोसि, तो गच्छ जत्थ न पेच्छामित्ति चिंतेण तेण पक्खित्तो मणी दूरं । चलिओ छालियाओ घेत्तूण अडविसम्मुहंति । इयरोवि हट्ठतुट्ठो पणामपुव्वं तं गिण्हिऊण पुण्णमनोरहो पत्थिओ नियनयरं । तप्पभावेण समुल्लसियरूवलायन्नो रयणपुंजो व दिप्पमाणो गामनगराईसु गोरविज्जंतो पत्तो महापुरं । निविट्ठो एगत्थ हट्टे । दिट्ठो सगोरवं तन्नायगेण । भद्दागिइत्ति

१ "पच्छाइज्जइ" इत्यपि ॥

गाहिओ पाणिं पाणप्पियाए धूयाए । तीए सद्धिं परूढपणओ सुहमासिओ किंचि कालं । अन्नया निववसाएहिं लज्जिज्जइत्ति भाविऊण भणिया भज्जा, दवावेहि मे नीविं, जेण दव्वोवज्जणं करेमि । तीएवि निवेइयं जणयस्स । तेणावि तुट्ठेण दिन्नं से दीणाराण लक्खं । तओ कप्पूरागुरुचंदणाइदव्वेहिं पूइऊण सत्थुत्तविहिणाभिवासिओ वासभवणेगदेसे चिंतामणी । चिंतिया दीणारकोडी । पाविया पहायकाले पुंजीकया । सिद्धो मे चिंतामणित्ति हरिसिएण भणिया भज्जा, समप्पेहि एयं तायस्स, तीएवि विम्हियाए तहेव कयं । तुट्ठं ससुरकुडुंबं । जायं जामाउयंमि बहुमाणपरं । अन्नया महया भडचडगरेण गओ हत्थिणाउरं । अभिनंदिओ जणएण, सम्माणिओ य सयणवग्गेण, पसंसिओ सेसलोएण । जाओ भायणमुत्तमसुहाणंति ॥ एत्थ एवमुवणओ—जहा तेण वणियसुएण चिरं परियडंतेण किच्छेण पाविया मणिवईपाहाडिया । तत्थवि कहं कहंपि चिंतामणिरयणं आराहिएण तेण पत्ता पहाणसुहसंपया । तहा संसारसायरे संसरंताण पाणिणं दुलहा मणिवईपाहाडियासमाणा मणुयजाई । तत्थवि कहं कहंपि पाविज्जइ अचिंतचिंतामणिसमाणं जिणधम्मरयणं । आराहिए तंमि करयलसंठियाइं सग्गमोक्खसोक्खाइं । परिचत्ते पुण आभीरस्सेव सासयं चेव दुहदालिद्दंति ॥

तदेवमतिदुर्लभां धर्माराधनक्रियां कुर्वन्न लज्जते भावश्रावको मूर्खैरुपहस्यमानोऽपि । ततः स्वार्थसिद्धिमवाप्नोति, दत्तपोतनैगमवत् । तद्वृत्तान्तश्चायम्—

अत्थि पच्छिमसमुद्दोवकंठपइट्ठिया विरसउरी नाम नयरी । सुंदेररंजिएणेव जा सा रयणायरेण अणवरयं आलिंगिज्जइ दीहरविलोलकल्लोलवाहाहिं । तीए सयलपयापियसंपायणपउणमाणसो पियंकरो नाम राया । तत्थेव कुलक्कमाग-

च—"न य एत्थ कोइ सयणो न सरीरं नेय भोगउवभोगा। जीवो अन्नभवगइं गच्छइ सव्वंपि मोत्तूण ॥ १॥" तथा दुर्विनीतपरिजनादावपि नातिद्वेषं विदध्यात्, अपि तु वहिर्वृत्त्यैव। यतः—"कोवाविट्ठो न मुणइ कज्जमकज्जं हियं च अहियं च। धम्माहम्मं च तहा कज्जविणासं च हाणिं वा ॥ १॥" तथा—"क्षमी यत्कुरुते कार्यं न तत्कोपवशंगतः। कार्यस्य साधिनी प्रज्ञा सा च क्रुद्धस्य नश्यति ॥ १॥" १३ ॥ ७२ ॥

तथा—

**उवसमसारवियारो वाहिज्जइ नेयं रागदोसेहिं। मज्झत्थो हियकामी असग्गहं सव्वहा चयइ ॥ ७३ ॥**

उपशमः कषायानुदयः, तत्सारं तत्प्रधानं विचारयति धर्मादिस्वरूपं यः स 'उपशमसारविचारः' भावश्रावको भवति। कथं पुनरेवंविधः स्यात्? इत्याह—यतो विचारं कुर्वन् 'वाध्यते' अभिभूयते नैव रागद्वेषाभ्याम्। तथा हि—'मयाऽयं पक्षः कक्षीकृतो वहुलोकसमक्षं, वहुभिश्च लोकैः प्रमाणीकृतस्तत्कथमिदानीमात्मानमप्रमाणीकरोमि' इत्यादिभावनया स्वपक्षानुरागेण न जीयते। तथा ममैष प्रत्यनीको, मदीयपक्षदूषकत्वात्। तदेनं जनमध्ये धर्षयामीति सदसद्दूषणोद्घटनाक्रोशदानादिप्रवृत्तिहेतुना द्वेषेणाऽपि नाभिभूयते, किं तु 'मध्यस्थः' सर्वत्र तुल्यचित्तो 'हितकामी' हिताभिलाषी, स्वस्य परस्य चोपकारमिच्छन् 'असद्ग्राहं' अशोभनाभिनिवेशं सर्वथा 'त्यजति' मुञ्चति मध्यस्थगीतार्थगुरुवचनेन। यतः—"तरिऊणवि मोहमहंतसायरं तीरनियडपत्तोवि। निज्जइ पडिप्पहेणं जीवो कुग्गाहमाहेहिं॥१॥" गोष्ठामाहिलरोहगुप्तादिवदिति १४॥७३॥

१ अन्यत्र—'नेव' इत्यपि ॥

तथा—

**भावेंतो अणवरयं खणभंगुरयं समत्थवत्थूणं। संवद्धोवि धणाइसु वज्जइ पडिवंधसंवंधं ॥ ७४ ॥**

'भावयन्' पर्यालोचयन् 'अनवरतं' प्रतिक्षणं 'क्षणभङ्गुरतां' सततविनश्वरतां 'समस्तवस्तूनां' सर्वभावानाम्। तद्यथा—"इष्टजनसंप्रयोगर्द्धिविषयसुखसंपदस्तथाऽऽरोग्यम्। देहश्च यौवनं जीवितं च सर्वाण्यनित्यानि ॥ १॥ क्षणविपरिणामधर्मा मर्त्यानामृद्धिसमुदयाः सर्वे। सर्वे च शोकजनकाः संयोगा विप्रयोगान्ताः ॥ २॥" इत्यादिरूपां 'संवद्धोऽपि' वाह्यवृत्त्या रक्षणोपार्जनादिरूपया (युक्तोऽपि 'धनादिषु' धनस्वजनादिषु) 'वर्जयति' न करोति प्रतिवन्धो मूर्च्छा, तद्रूपं संबन्धं संयोगं भावश्रावकः। भावयति च—"चेच्चा दुपयं चउप्पयं च खेत्तं गिहं धणधन्नं च सवं। कम्मप्पवीओ अवसो पयाइ परं भवं सुंदरपावगं वा ॥ १॥" इत्यादि १५ ॥ ७४ ॥

तथा—

**संसारविरत्तमणो भोगुवभोगा न तित्तिहेउत्ति। नाउं पराणुरोहा पवत्तई कामभोगेसु ॥ ७५ ॥**

संसारोऽनेकदुःखाश्रयोऽयम्। यतः—"दुःखं स्त्रीकुक्षिमध्ये प्रथममिह भवेद् गर्भवासे नराणां वालत्वे चापि दुःखं मललुलिततनुस्त्रीपयःपानमिश्रम्। तारुण्ये चापि दुःखं भवति विरहजं वृद्धभावोऽप्यसारः संसारे रे मनुष्याः! वदत यदि सुखं स्वल्पमप्यस्ति किञ्चित् ॥ १॥" इति। तस्माद्विरक्तमनाः। अमी भोगोपभोगाः—"सइ भुज्जइत्ति भोगो सो पुण आहा-

१ "मलमलिनतनु—" इत्यपि ॥

रपुष्फमाईओ। उवभोगो य पुणो पुण उवभुज्जइ भवणविलयाई ॥१॥" इत्येवमागमे प्रतीताः। ते न तृप्तिहेतवो भवन्ति प्राणिनाम्। तदुक्तम्—"सुमिणंतराणुभूयं सोक्खं समइच्छियं जहा नत्थि। एवमिमंपि अईयं सोक्खं सुविणोवमं होइ ॥ १॥ भोत्तूणं सुइसुंदरे सुरवहूसंदोहदेहाइए भोए सागरपल्लमाणमणहे देवत्तणे जं नरा। रज्जंति त्थिकलेवरेसु असुईपुन्नेसु रिंछोवमा मन्ने तित्तिकरा जियाण न चिरं भुत्तावि भोगा तओ ॥२॥" इति 'ज्ञात्वा' अवधार्य भोगसुखफलतां 'परानुरोधात्' अन्यजनदाक्षिण्यादिना प्रवर्त्तते 'कामभोगेषु' पूर्वोक्तस्वरूपेषु भावश्रावकः। वैरस्वामिजनकधनगिरिवदिति १६ ॥ ७५ ॥

तथा—

**वेस व्व निरासंसो अज्जं कल्लं चयामि चिंतंतो। परकीयं पिव पालइ गेहावासं सिढिलभावो ॥ ७६ ॥**

'वेश्या' पण्याङ्गना, तद्वत् 'निराशंसः' परित्यक्तास्थावुद्धिः। यथा हि वेश्या निर्धनकामुकाद्विशिष्टलाभमसंभावयन्ती किञ्चिल्लभमाना चाद्य श्वो वैनं त्यजामीति चिन्तयन्तीति मन्दादरा तमुपचरति। भावश्रावकोऽप्येवमेवाद्य श्वो वा मोक्तव्योऽयं मयेति मनोरथवान् 'परकीयमिव' अन्यसत्कमिव पालयति गृहवासं, कुतोऽपि हेतोः परित्यक्तुमशक्नुवन्नपि 'शिथिलभावो' मन्दादरः सन्। स हि किल व्रताप्राप्तावपि कल्याणमवाप्नोति, वसुश्रेष्ठिसुतसिद्धवत् १७ ॥

तथा हि—

तगराए वसुसेट्ठी सेणो सिद्धो य तस्स दो पुत्ता। पयइविणीया भद्दा पियंवया धम्मतिसिया य ॥ १॥ सेणो मोउं धम्मं पव्वइओ सीलसंदगुरुमूले। चरणकरणेसु नवरं पमायसीलो दढं जाओ ॥ २॥ सिद्धो पुण मुणिकिरियं अंगीकाउं

कई पयार्यंतो। सुद्धसमणत्तकामी परिकम्मइ निच्चमप्पाणं ॥ ३ ॥ चिंतेइ मए सम्मं कायव्वो संजमो गुरुममीवे। दमिऊण इंदियाइं अंगंपि बहुक्खमं काउं ॥४॥ जइ कहवि परव्वसओ इंदियविसएहिं वाहिणो होक्लं। फालं च चुओ तो मक्कडो व्व दुहिओ भविस्सामि ॥५॥ ता सुद्धसाहुधम्मं कइया पावेज्ज एस मह जीवो। एवमणोरहगुरुरहआरूढमणो गमइ कालं ॥ ६ ॥ अह आगओ कयाई सेणो एयस्स दंमणनिमित्तं। उववि्ठा गोट्ठीए अन्नोन्नं चोयणं दाउं ॥ ७ ॥ अह कम्मविहाणाओ विवाइया दोवि असणिपाएण। अच्चंतदुक्खिओ तो जाओ जणओ परियणो य ॥ ८ ॥ तत्थन्नया महप्पा जुगंधरो केवली समोसरिओ। पुट्ठो गईविसेसं वसुणा सो नियपुत्ताणं ॥ ९ ॥ केवलिणा सिट्ठं से मिद्धो सोहम्मकप्पमणुपत्तो। सेणो पुणो महिड्ढी वंतरदेवो समुप्पन्नो ॥१०॥ कारणमिह सामन्ने सुद्धे सिद्धस्स आसि करणिच्छा। इयरेण उ सामन्नं गहियंपि न पालियं सम्मं ॥११॥ इय नाउं परमत्थं सामन्नमणोरहे अमुंचंतो। गिहवासेवि मुमड्ढो वसेज्ज मंदायरो गेहे ॥१२॥

आह स्त्रीन्द्रियविषयाणामरक्तद्विष्टमध्यस्थासंबद्धानां गेहगेहवासयोश्चैकविषयत्वादर्थभेदो नोपलभ्यते, तत्कथं न पुनरुक्तदोषः? इति सत्यम्, देशविरतेश्चित्ररूपत्वादेकस्मिन्नपि विषये परिणामनानात्वम्। एकस्यापि परिणामस्य विषयभेदोऽपि संभवतीति सर्वभेदनिषेधार्थत्वात्प्रपञ्चस्य न पौनरुक्त्यमिति व्याख्यानगाथाभिः प्रकाशितमेव, अतः सूक्ष्मधियाऽऽलोच्य समाधानं विधेयम्। इति गाथासप्तदशकार्थः ॥ ७६ ॥

अथ प्रकृतप्रकरणमुपसंहरन्, प्रकरणान्तरं संबन्धयन्नाह—

**इय सतरसगुणजुत्तो जिणागमे भावसावगो भणिओ। एस उण कुसलजोगा लहइ लहु भावसाहुत्तं ॥७७॥**

'इति' उक्तप्रकारेण सप्तदशगुणयुक्तो जिनागमे भावश्रावको भणित इति प्रकटार्थम्। 'एषः' एवंविधः 'पुनः' शब्दो विशेषणार्थः। किं विशिनष्टि? द्रव्यसाधुस्तावदेष भणित एवागमे। यदुक्तम्—"मिउपिंडो दव्वघडो सुसावओ तह य दव्वसाहुत्ति। साहू य दव्वदेवो सुद्धनयाणं तु सव्वेसिं ॥ १ ॥" एवंविधः परिणामोपार्जितकुशलयोगात्पुनः 'लभते' अवाप्नोति 'लघु' शीघ्रं 'भावसाधुत्वं' यथाऽवस्थितयतित्वम्। इति गाथार्थः ॥ ७७ ॥

कीदृशः पुनर्भावसाधुर्भवतीत्युच्यते—"निर्वाणसाधकान् योगान् यस्मात् साधयतेऽनिशम्। समश्च सर्वभूतेषु तस्मात्साधुरुदाहृतः ॥ १ ॥ क्षान्त्यादिगुणसंपन्नो मैत्र्यादिगुणभूषितः। अप्रमादी सदाचारे भावसाधुः प्रकीर्त्तितः ॥ २ ॥" स कथं छद्मस्थैः प्रत्यभिज्ञायते? लिङ्गैः, कानि पुनस्तानि? इत्याह—

**एयस्स उ लिंगाइं सयला मग्गाणुसारिणी किरिया। सद्धा पवरा धम्मे पन्नवणिज्जत्तमुजुभावा ॥७८॥**
**किरियासु अप्पमाओ आरंभो सक्कणिज्जणुट्ठाणे। गुरुओ गुणाणुराओ गुरुआणाराहणं परमं ॥ ७९ ॥**

द्वारगाथाद्वयम्। अस्य व्याख्या—'एतस्य' पुनर्भावसाधोः 'लिङ्गानि' चिह्नानि 'सकला' समस्ता 'मार्गानुसारिणी' मोक्षाध्वानुपातिनी 'क्रिया' चेष्टा प्रत्युपेक्षणादिका १। तथा 'श्रद्धा' वाञ्छा 'प्रवरा' प्रधाना 'धर्मे' संयमविषये २। तथा 'प्रज्ञापनीयत्वं' सद्बोधलम्पटत्वं 'ऋजुभावात्' अकौटिल्येन ३ ॥ ७८ ॥ तथा 'क्रियासु' विहितानुष्ठानेषु 'अप्रमादः' अशैथिल्यम् ४। तथा 'आरम्भः' प्रवृत्तिः 'शकनीये' शक्त्यनुरूपे 'अनुष्ठाने' तपश्चरणादौ ५। तथा 'गुरुः' महान् 'गुणानुरागः' गुणपक्षपातः ६। तथा 'गुर्वाज्ञाराधनं' आचार्यादेशवर्त्तित्वं 'परमं' सर्वगुणप्रधानम् ७। इति सप्त लक्षणानि भावसाधोः। इति गाथाद्वयसमासार्थः ॥ ७९ ॥

व्यासार्थन्तु सूत्रकारः स्वयमेवाह—

**मग्गो आगमनीई अहवा संविग्गबहुजणाइन्नं। उभयाणुसारिणी जा सा मग्गणुसारिणी किरिया ॥ ८० ॥**

मृग्यतेऽन्विष्यतेऽभिमतस्थानावाप्तये पुरुषैर्यः स 'मार्गः'। स च द्रव्यभावभेदाद्द्वेधा। द्रव्यमार्गो ग्रामादेः। भावमार्गो मुक्तिपुरस्य। सम्यग्ज्ञान (दर्शन) चारित्ररूपः, क्षायोपशमिकभावरूपो वा तेनेहाधिकारः। स पुनः कारणे कार्योपचारात् 'आगमनीतिः' सिद्धान्तभणिताचारः। अथवा संविग्नबहुजनाचीर्णमिति द्विरूपोऽवगन्तव्य इति। तत्रागमो वीतरागवचनम्। उक्तं च—"आगमो ह्याप्तवचनमाप्तं दोषक्षयाद्विदुः। वीतरागोऽनृतं वाक्यं न ब्रूयाद्धेत्वसंभवात् ॥ १ ॥" तस्य नीतिरुत्सर्गापवादरूपः, शुद्धसंयमोपायः स मार्गः। उक्तं च—"यस्मात्प्रवर्त्तकं भुवि निवर्त्तकं चान्तरात्मनो वचनम्। धर्मश्चैतत्संस्थो मौनीन्द्रं चैतदिह परमम् ॥ १ ॥ अस्मिन् हृदयस्थे सति हृदयस्थस्तत्त्वतो मुनीन्द्र इति। हृदयस्थिते च तस्मिन्नियमात् सर्वार्थसंसिद्धिः ॥ २ ॥" तथा संविग्ना मोक्षाभिलाषिणो ये बहवो जनाः, अर्थाद्गीतार्थाः, इतरेषां संवेगायोगात्, तैर्यदाचीर्णमनुष्ठितं क्रियारूपम्। इह च संविग्नग्रहणमसंविग्नानां बहूनामप्यप्रमाणतां दर्शयति। बहुजनग्रहणं त्संविग्नोऽप्येकोऽनाभोगाऽनवबोधादिभिर्वितथमप्याचरेत्। ततः सोऽपि न प्रमाणमित्यतः संविग्नबहुजनाचरितं मार्गः। इत्यत एवाह—'उभयानुसारिणी' या आगमाबाधया संविग्नव्यवहाररूपा सा मार्गानुसारिणी क्रिया। इति गाथार्थः ॥८०॥

आह आगम एव मार्गो वक्तुं युक्तः। बहुजनाचीर्णस्य पुनर्मार्गीकरणमयुक्तं, शास्त्रान्तरविरोधात्; आगमस्य चाप्रमाण-

तापसैः । तथा हि—"बहुजणपविसिमेत्तं इच्छंतेहिं इह लोइओ चेव । धम्मो न उज्झियव्वो जेण तहिं बहुजणपविसी ॥१॥ ता आणाणुगयं जं तं चेव बुहेण होइ कायव्वं। किमिह बहुणा जणेणं हंदि ण सेयत्थिणो बहुया ॥२॥" तथा—"जेट्ठंमि विज्जमाणे उचिए अणुजेट्ठपूयणमजुत्तं । लोयाहरणंपि तहा पयडे भयवंतवयणंमि ॥ १ ॥" आगमस्तु केवलिनाऽपि नाप्रमाणीक्रियते । यतः—"ओहो सुओवउत्तो सुयनाणी जइवि गिण्हइ असुद्धं । तं केवलीवि भुंजइ अपमाणसुयं भवे इहरा ॥ १ ॥" आगमे सत्यप्याचरितस्य प्रमाणीकरणे तस्य लघुता स्फुटैवेति, नैतदेवम्, अस्य सूत्रस्य शास्त्रान्तराणां च विषयविभागापरिज्ञानात्। तथा हि—इह सूत्रे संविग्नगीतार्था आगमनिरपेक्षं नाचरन्ति। किं तर्हि?—"दोसा जेण निरुब्भंति जेण खिज्जंति पुव्वकम्माइं । सो सो मोक्खोवाओ रोगावत्थासु समणं व ॥ १ ॥" इत्याद्यागमं स्मरन्तो द्रव्यक्षेत्रकालभावपुरुषाद्यौचित्यमालोच्य संयमवृद्धिकार्येव किञ्चिदाचरन्ति, तच्चान्येऽपि संविग्नगीतार्थाः प्रमाणयन्तीति स मार्गोऽभिधीयते । भवदुच्चारितशास्त्रान्तराणि पुनरसंविग्नागीतार्थलोकमसमञ्जसप्रवृत्तिमाश्रित्य प्रवृत्तानि, ततः कथं तैः सह विरोधसंभवः? तथाऽऽगमस्यापि नाप्रमाणतापत्तिः,अपि तु सुष्ठुतरं प्रतिष्ठा, यस्मादागमोऽप्यागमश्रुताज्ञाधारणाजीतभेदात् पञ्चधा व्यवहारः प्ररूप्यते। यत उक्तं स्थानाङ्गे—"पंचविहे ववहारे पन्नत्ते। तंजहा—आगमववहारे १,सुयववहारे २,आणाववहारे ३, धारणाववहारे ४, जीयववहारे ५॥" जीताचरितयोश्चानर्थान्तरत्वादाचरितस्य प्रमाणत्वे सुतरामागमस्य प्रतिष्ठासिद्धिः । ये पुनर्मोहान्धा गीतार्थाचरितं मार्गमितरजनाचरितानि निदर्शनीकृत्य निर्लोठयन्ति ते वराका वयमागमरुचयः, इति मृषैवोद्घोषयन्ति । यत उक्तम्—"मूढा अणाइमोहा तब्भत्तामोत्ति तं कयत्थंता। तं चेव उ मन्नंता अवमन्नंता न याणंति॥ १॥" तस्मादागमाविरुद्धमाचरितं प्रमाणमिति स्थितम् ॥

**अन्नह भणियंपि सुए किंची कालाइकारणावेक्खं । आइन्नमन्नह च्चिय दीसइ संविग्गगीएहिं ॥ ८१ ॥**

'अन्यथा' प्रकारान्तरेण 'भणितम्' उक्तमपि 'श्रुते' पारगतागमे 'किञ्चिद्' वस्तु 'कालादिकारणापेक्षं' दुष्पमादिस्वरूपालोचनपूर्वकं 'आचीर्णं' व्यवहृतमन्यथैव, च्चियशब्दस्यावधारणार्थत्वात् । 'दृश्यते' साक्षादुपलभ्यते 'संविग्नगीतार्थैः' उक्तस्वरूपैः । इति गाथार्थः ॥ ८१ ॥

किं तद्? इत्याह—

**कप्पाणं पाउरणं अग्गोयरचाय झोलियाभिक्खा । ओवग्गहियकडाहयतुंबयमुहदाणदोराई ॥ ८२ ॥**

'कल्पानां' आगमप्रतीतानां 'प्रावरणं' परितो वेष्टनं प्रतीतमेव । ते हि किल कारणव्यतिरेकेण भिक्षाचर्यादौ गच्छता संवृत्ताः स्कन्धगता एव वोढव्या इत्यागमाचारः।संप्रति प्राव्रियन्ते—'अग्गोयर' इति अग्रावतारः परिधानविशेषः साधुजनप्रतीतस्तस्य त्यागः कटीपट्टकस्यान्यथाकरणम् । तथा 'झोलिका' बाहुलम्बमानपात्रबन्धपात्रकरणरूपा, तया 'भिक्षा' सा हि किल बाहूपरिधृतभाजनैर्विधेयेत्यागमः । तथा औपग्रहिककटाहकतुम्बकमुखदानदवरकादयोऽपि सुविदिता एव साधूनामाचरिताः संप्रतीति गम्यते । इति गाथार्थः ॥ ८२ ॥

तथा—

**सिक्किगनिक्खिवणाई पज्जोसवणाइतिहिपरावत्तो । भोयणविहिअन्नत्तं एमाई विविहमन्नंपि ॥ ८३ ॥**

सिक्किको दवरकरचितो भाजनाधारविशेषः, तत्र निक्षेपणं बन्धनमर्थात् पात्राणाम्, आदिशब्दात् पटलकपात्रकेसरिकादिधारणम्, युक्तिलेपेन पात्रलेपनम् । तथा 'पर्युषणादितिथिपरावर्त्तः' पर्युषणासांवत्सरिकम्, आदिशब्दाच्चतुर्मासकम्, केषांचिन्मतेन पाक्षिकमपि गृह्यते,तेषां तिथिपरावर्त्तस्तिथ्यन्तरकरणं,सुप्रतीतमेतत्। तथा 'भोजनविधेरन्यत्वं' यतीनां प्रतीतम् । अन्येषां तु न व्याख्येयमेव, गुप्तस्यैवागमे तस्य विधानात् । आह च—"छक्कायदयावंतोवि संजओ दुल्लहं कुणइ बोहिं । आहारे नीहारे दुगंच्छिए पिंडगहणे य ॥ १ ॥" 'एमाई' इति प्राकृतशैल्या, एवंशब्दवकारलोपात् । एवमादिग्रहणेन मन्दमेधसः पुरुषान् वाचनया ग्रहणधारणाऽसमर्थानवबुद्ध्य पट्टिकापठनप्रवृत्तिः, किञ्चित् संयमविरोधेऽपि सिद्धान्तस्य पुस्तकेष्वारोपणम्, कवलिकादिधारणं च प्रवचनाव्यवच्छित्तये गीतार्थप्रणीतं गृह्यते । विविधमन्यदप्याचरितं प्रमाणभूतमस्तीति । तथा च व्यवहारभाष्यम्—"सत्थपरिन्ना छक्कायसंजमो पिंडउत्तरज्झाये । रुक्खे वसहे गोवे जोहे सोही य पुक्खरिणी ॥ १ ॥" अयमर्थः—शस्त्रपरिज्ञाध्ययने सूत्रतोऽर्थतश्चावगते भिक्षुरुत्थापनीयः, इत्यागममुद्रा । जीतं पुनः षट्कायसंयमे दशवैकालिकषड्जीवनिकाध्ययने ज्ञाते भिक्षुरुत्थाप्यते । तथा पिण्डेषणायां पठितायामुत्तराध्ययनान्यधीयन्ते स्म, संप्रति तान्यधीत्याचार उद्दिश्यते । पूर्वं कल्पवृक्षा लोकस्य शरीरस्थितिहेतवोऽभूवन्, इदानीं सहकारकरीरादिभिर्व्यवहारः । तथा वृषभाः पूर्वमतुलबला धवलवृषभा बभूवुः, संप्रति धूसरैरपि लोको व्यवहरति । तथा गोपाः कर्षकाश्चक्रवर्त्तिगृहपतिरत्नवत्तद्दिन एव धान्यनिष्पादका बभूवुः, संप्रति तादृगभावेऽपीतरकर्षकैर्लोको निर्वहति । तथा पूर्वं योधाः सहस्रयोधादयोऽभूवन्, संप्रत्यल्पबलपराक्रमैरपि राजानः शत्रूनाक्रम्य राज्यमनुपालयन्ति । तद्वत्साधवोऽपि

जीतव्यवहारेणापि संयममाराधयन्ति, इत्युपनयः । तथा शोधिः प्रायश्चित्तं षाण्मासिकायामप्यापत्तौ जीतव्यवहारे द्वादशकेन निरूपितेति । पुष्करिण्योऽपि प्राक्तनीभ्यो हीना अपि लोकोपकारिण्य एवेति दार्ष्टान्तिकयोजना पूर्ववत् । एवमनेकधा जीतमुपलभ्यते । इति गाथार्थः ॥ ८३ ॥

अथवा किं बहुना—

**जं सव्वहा न सुत्ते पडिसिद्धं नेय जीववहहेऊ । तं सव्वंपि पमाणं चारित्तधणाण भणियं च ॥ ८४ ॥**

'यद्' वस्तु 'सर्वथा' सकलप्रकारैः नैव 'सूत्रे' सिद्धान्ते 'प्रतिषिद्धं' निवारितं, मैथुनसङ्गवत् । उक्तं च—"न य किंचि अणुन्नायं पडिसिद्धं वावि जिणवरिंदेहिं । मोत्तुं मेहुणभावं न तं विणा रागदोसेहिं ॥ १ ॥" नापि 'जीववधहेतुः' आधाकर्मग्रहणवत् । 'तद्' जीतानुष्ठानं सर्वमपि प्रमाणम् । चारित्रमेव धनं येषां तेषां ('चारित्रधनानां') चारित्रिणामागमानुज्ञातत्वात् 'भणितं' उक्तं चागमे । इति गाथार्थः ॥ ८४ ॥

यद्भणितं तदेवाह—

**अवलंबिऊण कज्जं जं किंपि समायरंति गीयत्था । थेवावराह बहुगुण सव्वेसिं तं पमाणं तु ॥ ८५ ॥**

'अवलम्ब्य' आश्रित्य 'कार्यं' संयमोपकारि यत्किमपि 'आचरन्ति' आसेवन्ते 'गीतार्थाः' विदितागमतत्त्वाः ।' स्तोकापराधं' अल्पदोषं, 'बहुगुणं' बहूनामुपकारकारि, सर्वेषामपि चारित्रिणां तत्प्रमाणमेव । तुशब्दस्यावधारणार्थत्वात् । इत्यागमगाथार्थः ॥ ८५ ॥

अत्र कश्चित्कुटिल एवमाह—नन्वेवमाचरिते युष्माभिः प्रमाणीकृतेऽस्माकं पितृपितामहादयो नानारम्भमिथ्यात्वक्रियाप्रवृत्तयोऽभूवन्, अतोऽस्माकमपि तथैव वर्त्तितुमुचितम् ? इत्यत्रोच्यते, सौम्य ! मार्गेणापि नीयमानो मो उन्मार्गेण गमः, यतोऽस्माभिः संविग्नाचरितमेव स्थापितं, न सर्वपूर्वपुरुषाचरितमित्युन्मत्त इव प्रलपति भवानिति । अत एवाह—

**जं पुण पमायरूवं गुरुलाघवचिंतविरहियं सवहं । सुहसीलसढाइन्नं चरित्तिणो तं न सेवंति ॥ ८६ ॥**

'यत्पुनः' आचरितं 'प्रमादरूपं' संयमबाधकत्वात्,। अत एव 'गुरुलाघवचिंताविरहितं' सगुणमिदमपगुणं वेति पर्यालोचवर्जितं, अत एव 'सवधं' यतनाभावात् । 'सुखशीलाः' इहलोकप्रतिबद्धाः, 'शठाः' मिथ्यालम्बनप्रधानाः, तैराचीर्णमाचरितम्, 'चारित्रिणः' शुद्धचारित्रवन्तः 'तन्न सेवन्ते' नानुतिष्ठन्ति । इति गाथार्थः ॥ ८६ ॥

अस्यैवोल्लेखं दर्शयन्नाह—

**जह सड्ढेसु ममत्तं राढाए असुद्धउवहिभत्ताई । निद्देज्जवसहितूलीमसूरिगाईण परिभोगो ॥ ८७ ॥**

'यथा' इत्युपदर्शने, 'श्राद्धेषु' श्रावकेषु 'ममत्वं' ममीकारं, मदीयोऽयं श्रावकः, इति गाढाग्रहम् ।—"गामे कुले वा नगरे व देसे ममत्तभावं न कहिंचि कुज्जा ॥" इत्यागमनिषिद्धमपि केचित् कुर्वन्ति । तथा 'राढया' शरीरशोभाकाम्यया 'अशुद्धोपधिभक्तादीनि' केचिद्गृह्णन्ति, तत्राशुद्धान्युद्गमादिदोषदुष्टानि, उपधिर्वस्त्रपात्रादिः, भक्तमशनं, आदिशब्दादुपाश्रयः, एतान्यप्यागमे निषिद्धानि । यत एवमार्षम्—"पिंडं सेज्जं च वत्थं च चउत्थं पायमेव य । अकप्पियं न इच्छेज्जा पडिगाहेज्ज कप्पियं ॥ १ ॥" इह च राढाग्रहणं पुष्टालम्बनेन दुर्भिक्षाक्षेमादौ यतनयाऽशुद्धमपि गृह्णतो न दोषः, इति ज्ञापनार्थम् । यतोऽभाणि पिण्डनिर्युक्तौ—"एसो आहारविही जह भणिओ सव्वभावदंसीहिं धम्मावस्सगजोगा जेण न हायंति तं कुज्जा ॥ १ ॥" तथा—"कारणपडिसेवा पुण भावेणासेवणत्ति दट्ठव्वा । आणाए तीए भावे सो सुद्धो मोक्खहेउत्ति ॥ १ ॥" तथा 'निद्देज्ज' इति पत्रलेखनेनाचन्द्रकालिकं प्रदत्ता वसतिर्गृहम्, एषाऽपि साधूनामकल्पनीया, अनगारत्वहानेर्भग्नसंस्थापनादौ कायवधसंभवात् । पठ्यते च—"अविकत्तिऊण जीवे कत्तो घरसरणगुत्तिसंठप्पं । अविकत्तिया य तं तह पडिआ अस्संजयाण पहे ॥ १ ॥" तत्तद्ग्रहणमप्येकैराचर्यते । तथा तूलीमसूरकादीनामपि परिभोगः कैश्चिद्विधीयते । तत्र तूलीमसूरके प्रतीते, आदिशब्दात्कांस्यताम्रपात्रादिपरिग्रहः, एतान्यपि यतीनां न कल्पन्ते । यतोऽभाणि—"अज्जीवेहिवि जेहिं गहिएहिं असंजमो न ते गिण्हे । जह पोत्थदूसपणए तणपणए चम्मपणए य ॥१॥ गंडी कच्छवि मुट्ठी संपुडफलए तहा छिवाडी य । एयं पोत्थयपणयं पन्नत्तं वीयरागेहिं ॥२॥ बाहल्लपुहत्तेहिं गंडी पोत्थो उ तुल्लगो दीहो कच्छवि अंते तणुओ मज्झे पिहुलो मुणेयव्वो ॥ ३ ॥ चउरंगुल दीहो वा वट्टागिइ मुट्ठिपोत्थगो अहवा । चउरंगुलदीहो च्चिय चउरंसो होइ विन्नेओ ॥४॥ संपुडगो दुगमाई फलगावोच्छं छिवाडिमेत्ताहे । तणुपत्तूसियरूवो होइ छिवाडी बुहा बेंति ॥५॥ दीहो वा हस्सो वा जो पिहुलो होइ अप्पबाहल्लो । तं मुणियसमयसारा छिवाडिपोत्थं भणंतीह ॥ ६ ॥ दुविहं च दूसपणगं समासओ तंपि होइ नायव्वं । अप्पडिलेहियदूसं दुप्पडिलेहं च विन्नेयं ॥७॥ अप्पडिलेहियदूसे तूली उवहाणगं च नायव्वं । गंडुवहाणालिंगिणिमसूरए चेव पोत्तमए ॥ ८ ॥ पल्हवि कोयवि पावार नवयए तह य दाढीयाली य । दुप्पडिलेहियदूसे एयं बीयं भवे पणगं ॥९॥ पल्हवि हत्थुत्थरणं कोयवओ रूयपूरिओ पडओ । दढियालि धोयपोत्ती सेसपसिद्धा भवे भेया

॥ १० ॥ तणपणगं पुण भणियं जिणेहि दुट्ठट्ठकम्ममहणेहिं । सालीवीहीकोद्दवरालयरन्ने तणाइं च ॥ ११ ॥ अयएलगाविमहिसी मईणमजिणं तु पंचमं होइ । तलिगाखल्लगवद्धे कोसगकत्तीयवीएण ॥ १२ ॥ तह वियडहिरण्णाईयाइं न गिण्हइ असंजमो माहु । सुयपडिकुट्ठं सव्वं न हु कप्पइ चरणजुत्ताणं ॥ १३ ॥ जाईफलपूगाई साहूण अकप्पिया अचित्ताविं । रागंगं जेण भवे न तेसि दाणं न वा गहणं ॥ १४ ॥ " ॥ ८७ ॥

अथ प्रस्तुतमुपसंहरन्नाह—

**इच्चाई असमंजसमणेगहा खुद्दचिट्ठियं लोए । बहुएहिवि आयरियं न पमाणं सुद्धचरणाणं ॥ ८८ ॥**

'इत्यादि' एवंप्रकारं 'असमञ्जसं' वक्तुमप्यनुचितं शिष्टानाम्, 'अनेकधा' अनेकप्रकारं क्षुद्राणां तुच्छसत्त्वानां चेष्टितमाचरितं 'लोके' लिङ्गिजने 'बहुभिरपि' अनेकैरप्याचीर्णं 'न प्रमाणं' नालम्बनहेतुः 'शुद्धचरणानां' निष्कलङ्कचारित्रिणाम् । अप्रमाणता चास्यागमनिषिद्धत्वात्, संयमविरुद्धत्वात्, अकारणप्रवृत्तत्वाच्च सम्यगालोचनीया । इति गाथार्थः ॥ ८८ ॥

एवमानुषङ्गिकमभिधाय प्रस्तुतोपसंहारमाह—

**गीयत्थपारतंता इय दुविहं मग्गमणुसरंतस्स । भावजइत्तं जुत्तं दुप्पसहंतं जओ चरणं ॥ ८९ ॥**

'गीतार्थपारतन्त्र्यात्' आगमविदाज्ञया 'इति' उक्तनीत्या 'द्विविधं' द्विप्रकारं 'मार्गमनुसरतः' तदनुसारेण व्यवहरतः साधोरिति गम्यते, 'भावयतित्वं' सुसाधुत्वं 'युक्तं' उचितं वक्तुमिति शेषः । किम् ? इत्यत आह—'दुष्प्रसहान्तं' दुष्प्रसहाचार्यपर्यन्तं 'यतः' यस्मात् 'चरणं' चारित्रमागमे श्रूयत इति शेषः । अयमभिप्रायः—यद्येवंविधाः सद्भावसारं यतमानाश्चारित्रिणो नाभ्युपगम्यन्ते, ततस्तदन्येषामनुपलम्भाद्व्यवच्छिन्नं चारित्रम्; तद्व्यवच्छेदात्तीर्थं चेत्याया-तम् । एतच्च प्रत्यक्षीभूतभूतभवद्भाविभावस्वभावस्य भगवतो महावीरस्य वचसा सह निरुद्धमिति न प्रेक्षापूर्वकारिणः प्रतिपद्यन्ते । यतो व्यवहारभाष्यम्—" केसिं चिय आएसो दंसणनाणेहि वट्टए तित्थं वोच्छिन्नं च चरित्तं वयमाणे भारिया चउरो ॥ १ ॥ जो भणइ नत्थि धम्मो न य सामइयं न चेव य वयाइं । सो समणसंघवज्झो कायव्वो [1]सव्वसंघेण ॥ २ ॥ " इत्याद्यागमप्रामाण्याज्जीतव्यवहारिणः सुसाधव इति स्थितम् १ ॥ ८९ ॥

उक्तं प्रथमं भावसाधुलिङ्गम् । अधुना द्वितीयमाह—

**सद्धा तिव्वभिलासो धम्मे पवरत्तणं इमं तीसे । विहिसेव्व[2] अतित्ती[3] सुद्धदेसणा खलियं[4] परिसुद्धी ॥ ९० ॥**

श्रद्धा प्रवरा धर्मे इति द्वितीयं लिङ्गमुक्तम् । तत्र श्रद्धा तीव्रः पटुरभिलाषः कर्मक्षयोपशमसज्ज्ञानप्रभवः । न पुनर्विषयप्रतिभासमात्रं, बालस्य रत्नग्रहाभिलाषवत् । 'धर्मे' श्रुतचारित्ररूपे 'प्रवरत्वं' प्रधानत्वं विशेषणीकृतं 'इदं' वक्ष्यमाणं 'तस्याः' श्रद्धायाः फलभूतम् । तद्यथा—विधिसेवा १ अतृप्तिः २ शुद्धदेशना ३ स्खलितपरिशुद्धिः ४ इति लिङ्गानि श्रद्धायाः प्रवरत्वस्य । इति गाथार्थः ॥ ९० ॥

एतान्येव प्रत्येकं विभावयिषुर्विधिसेवामधिकृत्याह—

**विहिसारं चिय सेवइ सद्धालू सत्तिमं अणुट्ठाणं । दव्वाइदोसनिहओवि पक्खवायं वहइ तम्मि ॥ ९१ ॥**

१ अन्यत्र " समणसंघेण " इत्युपलभ्यते ॥

'विधिसारं' विधिप्रधानमेव 'सेवते' अनुतिष्ठति 'श्रद्धालुः' श्रद्धागुणवान् 'शक्तिमान्' सामर्थ्योपेतः सन् 'अनुष्ठानं' प्रत्युपेक्षणैषणादिकं कृत्यं, श्रद्धालुत्वस्यान्यथानुपपत्तेः । यदि पुनः शक्तिमान्न स्यात्ततः का वार्त्ता ? इत्याह—द्रव्याण्याहारादीनि, आदिशब्दात् क्षेत्रकालभावाः परिगृह्यन्ते, तेषां दोषः प्रतिकूलता, तेन निहतोऽपि गाढपीडितोऽपि 'पक्षपातं' भावप्रतिबन्धं 'वहति' धारयति 'तस्मिन्नेव' विध्यनुष्ठान एव साधारणत्वाद्वाक्यस्य । इति गाथार्थः ॥ ९१ ॥

कथं पुनरनुष्ठानाभावे पक्षपातसंभवः ? इत्याह—

**निरुओ भोज्जरसन्नू कंवि अवत्थं गओ असुहमन्नं । भुंजं न तंमि रज्जइ सुहभोयणलालसो धणियं ॥ ९२ ॥**

'नीरुजो' ज्वरादिरुजा रहितो भोज्यानि खण्डखाद्यादीनि, तेषां रसमास्वादविशेषं जानातीति 'भोज्यरसज्ञः' 'कामप्यवस्थां' दुष्कालदारिद्र्यादिजनितां 'गतः' प्राप्तः सन् 'अशुभं' अनिष्टं 'अन्नं' भोजनं भुञ्जानो न 'तस्मिन्' अशुभान्ने 'रज्यति' गृद्धिमुपैति । तथा हि संभवत्येवैतत्—"सुहभत्तलालिओवि हु दुकालदालिद्दभिहुओ पुरिसो । भक्खडयभुरुट्टाई भुंजइ तह कंडुयं कंटिं ॥ १ ॥ कडुयरसं च गुयारं अरणिदलाइं कुडिंझराईयं । भुंजइ जणो छुहंतो तरुछल्लीहिलिझिलाई ॥ २ ॥ " न चासौ गृद्धिमाधत्ते, अपि तु 'शुभभोजनलालसः' विशिष्टाहारलम्पट एव भवति । लङ्घयाम्येतां कुदशां, ततः सुभिक्षमवाप्य पुनरपि शोभनाहारं भोक्ष्ये, इति मनोरथवानिति । 'धणयं' इति बाढम् । इति गाथार्थः ॥ ९२ ॥

एवं दृष्टान्तः, अधुना दार्ष्टान्तिकयोजनामाह—

**इय सुद्धचरणरसिओ सेवंतो दव्वओ विरुद्धंपि । सद्धागुणेण एसो न भावचरणं अइक्कमइ ॥ ९३ ॥**

'इय' शब्दः प्राकृत एवंकारार्थो दृश्यते । तत एवं कुभक्तभोगदृष्टान्तेन 'शुद्धचरणरसिकः' निष्कलङ्कसंयमपालनोत्साहवान् 'सेवमानः' द्रव्यतो बाह्यवृत्त्या 'विरुद्धं' अकल्पनीयमौषधपथ्यादि, 'अपि' शब्दाद्वैयावृत्त्यादिकं चाकुर्वन् 'श्रद्धागुणेन' संयमाराधनलाम्पट्यपरिणामेन (एषो 'न') नैव भावचरणं 'अतिक्रामति' अतिचरति । उक्तं च—"दव्वाइया न पायं सोहणभावस्स हुंति विग्घकरा । वज्झकिरिया थ उ तहा हवंति लोए विसिट्ठमिणं ॥ १ ॥ दइयाकुप्पलताडणं व सुहडस्स निव्वुइं कुणइ । पहुआणाए संपत्थियस्स कंडंपि लग्गंतं ॥ २ ॥ जह चेव सदेसम्मि तह परदेसेवि हंदि धीराणं । सत्तं न चलइ समुवत्थियंमि कज्जंमि पुरिसाणं ॥ ३ ॥ कालोवि हु दुब्भिक्खाइलक्खणो न खलु दाणसूराणं । भिंदइ आसयरयणं अवि अहियपरं विसोहेइ ॥ ४ ॥ एवं चिय भवत्थवि चरित्तिणो नहि महाणुभावस्स । सुहसामायारिगओ भावो परियत्तइ कयाइ ॥५॥" भावश्च क्रियातो महानेव यतोऽवाचि—"क्रियाशून्यश्च यो भावो भावशून्या च या क्रिया । अनयोरन्तरं दृष्टं भानुखद्योतयोरिव ॥ १ ॥ जो होज्ज उ असमत्थो रोगेण व पेल्लिओ झुरियदेहो । सव्वमवि जहाभणियं कयाइ न तरिज्ज काउं जो ॥ २ ॥ सोवि य नियपरक्कमववसायधिइबलं अगूहंतो । मोत्तूण कूडचरियं जइ जयई तो अवस्स जई ॥ ३ ॥" ९३ ॥

उक्ता विधिसेवा । सम्प्रत्यतृप्तिस्वरूपमाह—

**तित्तिं न चेव विंदइ सद्धाजोगेण नाणचरणेसु । वेयावच्चतवाईसु जहविरियं भावओ जयइ ॥ ९४ ॥**

'तृप्तिं' सन्तोषं, कृतकृत्योऽहमेतावतैव, इत्येवंरूपां 'न चैव' इति चशब्दस्य पूरणत्वान्नैव 'विन्दति' प्राप्नोति श्रद्धाय-

१ "जई जयंतो अवस्स जई" इत्यपि ॥

योगेन संबन्धेन ज्ञानचरणयोर्विषये ज्ञाने पठितं यावता संयमानुष्ठानं निर्वहतीति संचिन्त्य न तद्विषये प्रमाद्यति । किं तर्हि? नवनवश्रुतसंपदुपार्जनोत्साहं न मुञ्चति । यदुक्तम्—"जह जह सुयमवगाहइ अइसयरसपसरसंजुयमउव्वं । तह तह पल्हाइ मुणी नवनवसंवेगसद्धाए ॥ १ ॥ अपुव्वनाणगहणा निच्चब्भासेण केवलुप्पत्ती । भणिया सुयंमि तम्हा एयंमि महायरो जुत्तो ॥ २ ॥" तथा—"अत्थो जस्स जिणुत्तमेहि भणिओ जायंमि मोहक्खए बद्धं गोयममाइएहि सुमहाबुद्धीहि जं सुत्तओ । संवेगाइगुणाण वुड्ढिजणणं तित्थेसनामावहं कायव्वं विहिणा सया नवनवं नाणस्स तस्सज्जणं ॥ १ ॥ तथा चारित्रविषये विशुद्धविशुद्धतरसंयमस्थानावाप्तये सद्भावनासारं सर्वमनुष्ठानमुपयुक्त एवानुतिष्ठति । यस्मादप्रमादकृताः सर्वेऽपि साधुव्यापारा उत्तरोत्तरसंयमकण्डकारोहणेन केवलज्ञानलाभाय भवन्ति । तथा चागमः—"जोगे जोगे जिणसासणंमि दुक्खक्खया पउज्जंते । एक्केक्कंमि अणंता वट्टंता केवली जाया ॥ १ ॥" तथा वैयावृत्यतपसी प्रतीते, आदिशब्दात्प्रत्युपेक्षणाप्रमार्जनादिपरिग्रहः, तेषु 'यथावीर्यं' सामर्थ्यानुरूपं 'भावतः' सद्भावसारं 'यतते' प्रयत्नवान् भवतीति । अयमत्र भावः—वैयावृत्त्यतपसोरपि तृप्तिं न मुञ्चति । भावयति च—"भरहो बाहुबलीवि य दसारकुलनंदणो य वसुदेवो । वेयावच्चाहरणा तम्हा पडितप्पह जईणं ॥ १ ॥ कम्ममसंखेज्जभवं खवेइ अणुसमयमेव उवउत्तो । अन्नयरंमिवि जोगे वेयावच्चे विसेसेण ॥ २ ॥" तपोविषयेऽपि भावयति—"सव्वासिं पयडीणं परिणामवसादुवक्कमो होइ । पायमनिकाइयाणं तवसा उ निकाइयाणंपि ॥ १ ॥ नयति जलधेस्तीरं नो वा नवाऽपि हि नौः श्रिता शमयति न वा भोगो रोगं प्रसिद्धमहौषधिः । जनयति सुखं नो वा लक्ष्मीर्नरम्य गृहागता जिनवरतपस्त्वेकान्तेन क्षिणोत्यशुभोच्चयम् ॥ २ ॥" इत्यादि । इति गाथार्थः ॥ ९४ ॥

गदितमतृप्तिस्वरूपम् । अथ शुभदेशनामभिधित्सुस्तदधिकारिणमाह—

**सुगुरुसमीवे सम्मं सिद्धंतपयाण मुणियतत्तत्थो । तयणुन्नाओ धन्नो मज्झत्थो देसणं कुणइ ॥ ९५ ॥**

सुगुरोः संविग्नगीतार्थाचार्यस्य समीपे 'सम्यक्' पौर्वापर्यपर्यालोचनेन 'सिद्धान्तपदानां' आगमवाक्यानां पदार्थवाक्यार्थमहावाक्यार्थैदंपर्यार्थप्रकारेण 'मुणिततत्त्वार्थो' विज्ञातपरमार्थः । उक्तं च—"पयवक्कमहावक्कयअइदंपज्जत्थ एत्थ चत्तारि । सुयभावावगमंमी हंदि पगारा विनिद्दिट्ठा ॥ १ ॥ संपुन्नेहिं जायइ सुयभावस्सवगमो इयरहा उ । होइ विवज्जासोवि हु अणिट्ठफलओ य सो नियमा ॥ २ ॥" एवंविध एव देशनाधिकारी स्यात्, अन्यस्य दोषसंभवः । तथा चागमः—"सावज्जणवज्जाणं वयणाणं जो न याणइ विसेसं । वोत्तुंपि तस्स न खमं किमंग पुण देसणं काउं ॥ १ ॥" एवंविधोऽपि गुरुणाऽनुज्ञातो न स्वातन्त्र्येण मौर्ख्यर्यास्थैर्यातिरेकात् । उक्तं च—"आचार्ये ध्रियमाणे यस्तिष्ठत्यन्तिकगोचरे । करोत्याचार्यकं मूढः शिष्यतां दूरमुत्सृजन् ॥ १ ॥ नासौ शिष्यो न वाचार्यो निर्धर्मः स कुमार्गगः । सर्वतो भ्रंशमायातः स्वाचागत्साधुनिन्दितः ॥ २ ॥" तस्माद्गुर्वनुज्ञातो 'धन्यो' धर्मधनार्हत्वात् 'मध्यस्थः' स्वपक्षपरपक्षयो रागद्वेषरहितः सद्भूतवादी 'देशनां' धर्मकथां करोति । इति गाथार्थः ॥ ९५ ॥

१ 'अदक्षस्य' इत्यपि । २ 'दोष संभवत्' इत्यपि । ३ 'म्रियमाणे' इत्यपि ॥

तथा—

**अवगयपत्तसरूवो तयणुग्गहहेउभाववुड्ढिकरं । सुत्तभणियं परूवइ वज्जंतो दूरमुम्मग्गं ॥ ९६ ॥**

अवगतं सम्यगवबुद्धं पात्रस्य श्रावणीयस्य प्राणिनः स्वरूपमाशयो येन स तथा । तथा हि—बालमध्यमबुद्धिबुधभेदात्त्रिविधं पात्रं श्रावणीयं भवति । तत्र—"बालः पश्यति लिङ्गं मध्यमबुद्धिर्विचारयति वृत्तम् । आगमतत्त्वं तु बुधः परीक्षते सर्वयत्नेन ॥१॥" तेषां च देशनाविधिः—"बाह्यचरणप्रधाना कर्त्तव्या देशनेह बालस्य। स्वयमपि च तदाचारस्तदग्रतो नियमतः सेव्यः ॥ १ ॥ मध्यमबुद्धेस्त्वीर्यासमितिप्रभृतित्रिकोटिपरिशुद्धम् । आद्यन्तमध्ययोगैर्हितदं खलु साधुसद्वृत्तम् ॥ २ ॥" इत्यादि पात्रानुरूपां देशनां करोति ।—"यद्भाषितं मुनीन्द्रैः पापं खलु देशना परस्थाने । उन्मार्गनयनमेतद्भवगहने दारुणविपाकम् ॥ १ ॥" इति ॥ अथवोत्सर्गप्रियमपवादप्रियं पारिणामिकं च पात्रं त्रिविधम् । इत्यादिपात्रस्वरूपमवगम्य श्रद्धावांस्तस्य पात्रस्यानुग्रहहेतुरुपकारकारी यो भावः शुभपरिणामस्तस्य वृद्धिकरम् । तदपि 'सूत्रभणितं' आगमोक्तं 'प्ररूपयति' व्याचष्टे, 'वर्जयन्' उत्सृजन् 'दूरं' यथाभवत्येवं 'उन्मार्गं' मोक्षप्रतीपां वर्त्तिनीम् । इति गाथार्थः ॥९६॥

आह देशना धर्मोपदेशः, स च समभावस्य साधोरविशेषेण दातुमुचितः, किं सामायिकबाधाविधायिनाऽतिसन्धानप्रायेण पात्रापात्रविचारेण ? इति नैतदस्ति, तदनुग्रहाय प्रवृत्तावतिसन्धानायोगात् संनिपातातुरस्य क्षीरखण्डादिनिषेधनतः क्वाथादिप्रदानवत् । अत एव सामायिकबाधाऽपि नास्ति, सर्वेष्वनुग्रहबुद्धेस्तुल्यत्वात् । अथवा सूत्रकार एव युक्त्यन्तरमाह—

**सव्वंपि जओ दाणं दिन्नं पत्तंमि दायगाण हियं । इहरा अणत्थजणगं पहाणदाणं च सुयदाणं ॥ ९७ ॥**

सर्वमपि यतो 'दानं' वितरणं 'दत्तं' वितीर्णं पात्रे 'सुपां सूपं' इति वचनात् 'पात्राय' उचितग्राहकाय ।—"जीवादिपदार्थज्ञो यः समभावेन सर्वजीवानाम् । रक्षार्थमुद्यतमतिः स यतिः पात्रं भवति दातुः ॥ १ ॥" इत्याद्युमास्वातिवर्णिताय 'दायकानां' (दातॄणां) 'हितं' कल्याणकारि भवतीति गम्यते । 'इतरथा' कुपात्राय परिग्रहारम्भशक्ताय दत्तमिति प्रकृतम् ('अनर्थजनकं') अनर्थफलं स्यादिति शेषः । किं चातः प्रधानदानं च वर्त्तते, 'श्रुतदानं' देशनादिरूपम् । इति ॥९७॥

ततः किम् ? इत्याह—

**सुट्ठुयरं च न देयं एयमपत्तंमि नायतत्तेहिं । इय देसणावि सुद्धा इहरा मिच्छत्तगमणाई ॥ ९८ ॥**

'सुष्ठुतरं' अतिशयेन, चकारस्यावधारणार्थत्वात् । न देयमेवैतदपात्राय, सप्तम्याश्चतुर्थ्यर्थत्वात्, 'ज्ञाततत्त्वैः' विदितागमसद्भावैः । उक्तं च—"रत्तो दुट्ठो मूढो पुव्विं वुग्गाहिओ य चत्तारि । उवएसस्स अणरिहा अरिहो पुण होइ मज्झत्थो ॥ १ ॥" तथा—"ओहेणवि उवएसो आदेएणं विभागसो देओ । नाणाइ वुड्ढिजणओ महुरगिराए विणीयस्स ॥ १ ॥" जओ—"अविणीयमाणवितो किलिस्सई भासई मुसं तह य । घंटालोहं नाउं को कडकरणे पवत्तेज्जा ॥ १ ॥ जिणपन्नत्तं सुत्तं देज्ज विणीयस्स नाविणीयस्स । न हु दिज्जइ आभरणं पलिउंचिय कन्नहत्थस्स ॥२॥" इत्यपात्राणां परिहारेण पात्राणां चौचित्यवृत्त्या देशनाऽपि क्रियमाणा शुद्धाऽभिधीयते । इतरथा (अन्यथा) क्रियमाणायां तस्यां श्रोतॄणां मिथ्यात्वगमनम् । आदिशब्दात्प्रद्वेषातिशयाद्भक्तपानशय्याव्यवच्छेदादयः प्राणहान्यादयश्च देशकस्य दोषाः संभवन्तीति । अत एव भावानुवृत्तिसारो गीतार्थः श्लाघ्यते । यतोऽवाचि—"मग्गे य जोयइ तहा केई भावाणुवत्तणनएण । बीयाहाणं पायं च तदुचियाणं कुणइ एसो ॥ १ ॥" गीतार्थः । इति गाथार्थः ॥ ९८ ॥

ननु सूत्रभणितं प्ररूपयतीत्युक्तम्, यत्पुनः सूत्रानुक्तं विवादपदं लोकानां, तत्र पृच्छ्यमानानां गीतार्थानां किमुचितम् ? इत्याह—

**जं च न सुत्ते विहियं न य पडिसिद्धं जणंमि चिररूढं । समइविगप्पियदोसा तंपि न दूसंति गीयत्था ॥९९॥**

इह चशब्दः पुनरर्थ इति । 'यत्' पुनरर्थजातमनुष्ठानं वा नैव 'सूत्रे' सिद्धान्ते 'विहितं' करणीयत्वेनोक्तं चैत्यवन्दनावश्यकादिवत्, न च प्रतिषिद्धं, प्राणातिपातादिवत् । यत् 'जने' लोके 'चिररूढं' अज्ञातादिभावं 'स्वमतिविकल्पितदोषाः' स्वाभिप्रायपरिकल्पितदूषणाः 'तदपि' आस्तामागमोक्तं 'न दूषयन्ति' न युक्तमेतत्, इति परस्य नोपदिशन्ति संसारवृद्धिभीरवो 'गीतार्थाः' विदितागमतत्त्वाः । यत उक्तं भगवत्याम्—"जेणं गोयमा ! अट्ठं वा, हेउं वा, पसिणं वा, वागरणं वा, कारणं वा, अन्नायं वा, अदिट्ठं वा, असुयं वा, अपरिन्नायं वा, बहुजणमज्झे आघवेइ, पन्नवेइ, परूवेइ, दंसेइ, निदंसेइ, उवदंसेइ । सेणं अरहंताणं आसायणाए वट्टइ । अरहंतपन्नत्तस्स धम्मस्स आसायणाए वट्टइ । केवलीणं आसायणाए वट्टइ । केवलिपन्नत्तस्स धम्मस्स आसायणाए वट्टइ ॥" अन्यत्राऽप्युक्तम्—"जं बहुखाइं पत्तं न य दीसइ कहवि भासियं सुत्ते । न य पडिसेहो दीसइ मोणं चिय तत्थ गीयाणं ॥ १ ॥" इति गाथार्थः ॥ ९९ ॥

गीतार्था ह्येवं परिभावयन्ति—

**संविग्गा गीयतमा विहिरसिया पुव्वसूरिणो आसि । तद्दूसियमायरियं अणइसई को निवारेइ ॥ १०० ॥**

'संविग्नाः' मङ्क्षुमोक्षाभिलाषिणः 'गीयतमा' इति पदैकदेशे पदप्रयोगो यथा—भीमसेनो भीम इति । ततो गीताः गीतार्थाः, तमटि प्रत्यये 'गीतार्थतमाः' इति भवति, अतिशयगीतार्था इति भावः । तत्काले बहुतमागमसद्भावात् । तथा विधिरसो विद्यते येषां ते 'विधिरसिकाः' विधिबहुमानिनः, संविग्नत्वादेव । 'पूर्वसूरयः' चिरन्तनमुनिनायकाः 'आसन्' अभूवन्, तैः 'अदूषितं' अनिषिद्धं 'आचरितं' सर्वं धार्मिकलोकव्यवहृतं 'अनतिशयी' विशिष्टश्रुतावध्याद्यतिशयविकलः 'को निवारयति' पूर्वपूर्वतरोत्तमाचार्याशातनाभीरुर्न कश्चित् । इति गाथाभावार्थः ॥ १०० ॥

तथैतदपि गीतार्थाः पर्यालोचयन्ति—

**अइसाहसमेयं जं उस्सुत्तपरूवणा कडुविवागा । जाणंतेहिवि दिज्जइ निद्देसो सुत्तबज्झत्थे ॥ १०१ ॥**

ज्वलज्ज्वालानलप्रवेशकारिनरसाहसादप्यधिकमतिसाहसमेतद्वर्त्तते, यत् 'उत्सूत्रप्ररूपणाः' सूत्रनिरपेक्षदेशनाः 'कटुविपाकाः' दारुणफला 'जानानैः' अवबुध्यमानैरपि 'दीयते' (वितीर्यते) 'निर्देशो' निश्चयः 'सूत्रबाह्ये' जिनागमानुक्ते 'अर्थे' वस्तुविचारे । किमुक्तं भवति—"दुब्भासिएण एक्केण मरीई दुक्खसायरं पत्तो । भमिओ कोडाकोडिं सागरसिरिनामधेज्जाणं ॥ १ ॥ उस्सुत्तमायरंतो बंधइ कम्मं सुचिक्कणं जीवो । संसारं च पवड्ढइ मायामोसं च कुव्वइ य ॥ २ ॥ उम्मग्गदेसिओ मग्गनासओ गूढहिययमाइल्लो । सढसीलो य ससल्लो तिरिआउं बंधए जीवो ॥ ३ ॥ उम्मग्गदेसणाए चरणं नासिंति जिणवरिंदाणं । वावन्नदंसणा खलु न हु लब्भा तारिसा दट्ठुं ॥ ४ ॥" इत्याद्यागमवचनानि श्रुत्वाऽपि स्वाग्रहग्रहग्रस्तचेतसो यदन्यथान्यथा व्याचक्षते विदधति च तन्महासाहसमेवानर्वाक्पारासारसंसारापारपारावारोदरविवरभाविभूरिदुःखभाराङ्गीकारात् । इति गाथाभावार्थः ॥ १०१ ॥

आह किमेवमागमार्थमवबुध्यापि कोऽप्यन्यथावादमाद्रियते ? येनैवमुच्यते, सत्यम्, आद्रियते । यत आह—

**दीसंति य ढङ्कसिणोणेगे नियमइपउत्तजुत्तीहिं । विहिपडिसेहपवत्ता चेइयकिच्चेसु रूढेसु ॥ १०२ ॥**

दृश्यन्ते दुष्षमारूपे च वक्रजडबहुले काले 'ढङ्कसिणः' महासाहसिका रौद्रादपि भवपिशाचादबिभ्यतः 'अनेके' विविधा निजमतिप्रयुक्ताभिरात्मीयबुद्धिव्यापारताभिर्युक्तिभिरुपपत्तिभिः 'विधिप्रतिषेधप्रवृत्ताः' इति कासांचित्क्रियाणामागमानुक्तानामपि विधौ करणे प्रवृत्ताः, अन्यासामागमानिषिद्धतया चिरजनाचरितानामप्यविधिरित्युक्त्वा एता न कर्त्तव्या धार्मिकैरित्येवं प्रतिषेधे प्रवृत्ताः । केषु ? 'चैत्यकृत्येषु' स्नात्रबिम्बकारणादिषु 'रूढेषु' पूर्वपुरुषपरम्परया प्रसिद्धेषु । पूर्वरूढिरविधिः, इदानींतनप्रवृत्तिर्विधिः, इत्येवं वादिनोऽनेके दृश्यन्ते साहसिकाः । इति गाथार्थः ॥ १०२ ॥

ननु ते धर्मार्थिनः सर्वयत्नेन तथाप्रवृत्ता गीतार्थैः श्लाघनीया न वा ? इत्याह—

**तं पुण विसुद्धसद्धा सुयसंवायं विणा न संसंति । अवहीरिऊण नवरं सुयाणुरूवं परूविंति ॥ १०३ ॥**

'तां पुनः' तेषां प्रवृत्तिं विशुद्धागमबहुमानसारा श्रद्धा येषां ते तथाविधाः 'श्रुतसंवादं विना' श्रुतभणितमन्तरेण 'न शंसन्ति' नानुमन्यन्ते, किं तर्हि ? बालक्रीडितमेतदिति बुद्ध्या 'अवधीर्य' मध्यस्थभावेनोपेक्ष्य ('नवरं' केवलं) 'श्रुतानुरूपं प्ररूपयन्ति' यथा सूत्रे भणितं तथैव त्रिविदिपूजामुपदिशन्ति । अयमत्राभिप्रायः—इह हि धार्मिकंमन्यान् कांश्चन घृतादिभिर्जिनबिम्बस्नपनं दूषयतः केवलेन गन्धोदकेन कुर्वतः कारयतश्चोपलभ्य मध्यस्थधार्मिकाः, किमत्र युक्तम् ? इति गुरून् पृच्छन्ति । ततस्तेषां संविग्नगीतार्थगुरवो व्यागृणन्ति । तद्यथा—वर्त्तमानमूलागमेषु द्रव्यस्तवः श्रावकाणामुपदिष्टो, न पुनस्तत्करणविधिरतः स पूर्वगतादौ संभाव्यते । पूर्वगतवेदिना चोमास्वातिवाचकेन प्रणीतप्रवचनोन्नतिहेतुप्रशमरतितत्त्वार्थाद्यनेकमहाशास्त्रेण—"जिनभवनं जिनबिम्बं जिनपूजां जिनमतं च यः कुर्यात् । तस्य नरामरशिवसुखफलानि करपल्लवस्थानि ॥ १ ॥" इत्यादिद्रव्यस्तवाभिधायिप्रकरणे पूजाविधिरेवमुक्तः—"सर्पिर्दुग्धदधिप्रबुद्धकुसुमैर्धूपाम्बुदीपैस्तथा गन्धस्नात्रसुगन्धिचन्दनरसैः प्रत्यग्रसत्कुङ्कुमैः । पूजां निर्जितविद्विषोऽमलधियः कुर्वन्ति ये भावतो भुक्त्वा सौख्यमिहामरं च सततं ते यान्ति शीघ्रं शिवम् ॥ १ ॥ गव्यहव्यदधिदुग्धपूरितैः स्नापयन्ति कलशैरनुत्तमैः । ये जिनोक्तविधिना जिनोत्तमान् स्वर्विमानविभवो भवन्ति ते ॥ २ ॥" तेनापि संविग्नशिरोमणिना सिद्धान्ताद्दृष्टोऽयमर्थो नोक्त इति संभाव्यते । अत एव गोविन्दाचार्येण सनत्कुमारसन्धिषु तथैव वर्णितः । पर्वकारेण धूपा(मा)वलिकाकारेण चानूदितः । प्रामाणिकसैद्धान्तिकमस्तकरत्नेन श्रीजिनेश्वराचार्येण कथानककोशशास्त्रे विशेषेण स्थापितः, तच्छिष्येणाभयदेवसूरिणापि पञ्चाशकवृत्तौ—देवैरपि सन्निहिते कालोदपुष्करवरसागरनीरे सत्यपि घृतक्षीरेक्षुरसवार्यानयद्भिरनादिरूढता घृतादिस्नानस्य स्थापिता चेति । तस्मान्मूर्खमुखरदूषितमपि घृतादिस्नानं युक्तमिति लक्षयामः । तथाऽधिवासनोदकानयनछत्ररथभ्रमणदिक्पालस्थापनादीनामपि प्रभावनाविशेषहेतुत्वेन पूर्वपुरुषाचरितानां निषेधश्छद्मस्थैर्न कर्त्तव्यः, क्वाऽप्यागमे निषेधादर्शनात् । नापीन्द्रादिभिर्न कृतान्येतानीति ज्ञापकं प्रमाणं, देवमनुष्याणामाचारस्यासमानत्वात् । देवा हि प्रथमोत्पन्ना एव चैत्यपूजादि कुर्वन्ति । मनुजास्तु यावज्जीवं त्रिकालमपि । देवाः सकृदेककल्याणके पूजां कुर्वन्ति, न तु तपःकर्म । मनुजास्तु

प्रतिवर्षं तपःक्रियापूर्वकं सर्वतीर्थकृतां सर्वकल्याणकेषु पूजां विदधतीत्यादि । तस्मान्मनुजानां मनुजव्यवहारः श्रेयान् । अन्यच्च जिनमहिम्नः प्रवर्द्धनमेव साधु, न विघ्नकरणम् । यत उक्तम्—"पाणवहाई ( नि ) सुओ जिणपूयामोक्खमग्गविग्घकरो । अजेइ अन्तरायं न लहइ जेणिच्छियं लाभं ॥ १ ॥ " अत एव जिनत्रयचतुर्विंशतिपट्टादिकारणमपि गीतार्था न दूषयन्ति, बहुविम्वान्तरायभीरुत्वादागमेऽनिषेधदर्शनाच्च । केवलं मौनमालम्बन्ते । यतोऽयं गुरूपदेशः—"जं बहुखाइं पत्तं नवि दीसइ कहवि भासियं सुत्ते । न य पडिसेहो दीसइ मोणं चिय तत्थ गीयाणं ॥ १ ॥ " तथा—"सुत्तभणियंमि मुत्ते पमाणमियरंमि होइ आयरणा । संविग्गगीयबहुजणनिसेविया सावि हु पमाणं ॥ २ ॥ " किं च हरिभद्रसूरिणाऽपि त्रिधा प्रतिष्ठोक्ता । यतोऽवाचि—"व्यक्ताख्या खल्वेका क्षेत्राख्या चापरा महाख्या च । यस्तीर्थकृद्यदा किल तस्य तदाद्येति समयविदः ॥ १ ॥ ऋषभाद्यानां तु तथा सर्वेषामेव मध्यमा ज्ञेया । सप्तत्यधिकशतस्य तु चरमेह महाप्रतिष्ठेति ॥ २ ॥" न च पृथग्बिम्बानामियमिति वक्तुमुचितं, दृष्टकल्पनावशात् । न हि प्रेक्षापूर्वकारिणो दृष्टं विहायाऽदृष्टं परिकल्पयन्ति । इत्यादिशुद्धश्रद्धावान् श्रुतानुसारेण प्ररूपयति । इति गाथार्थः ॥ १०३ ॥

उक्तं तृतीयं श्रद्धालक्षणम् । अथ चतुर्थमाह—

**अइयारमलकलंकं पमायमाईहिं कहवि चरणस्स । जणियंपि वियडणाए सोहिंति मुणी विमलसद्धा॥१०४॥**

अतिचरणमतिचारो मूलोत्तरगुणमर्यादातिक्रमः, स एव गुणमालिन्यहेतुत्वान्मलम्, तच्चरणशशधरस्य कलङ्क इव तं, 'प्रमादादिभिः' प्रमाददर्पकल्पैराकुट्टिकायाश्चारित्रिणः प्रायेणासंभवात्, कथमपि कण्टकाकुलमार्गे यत्नेनापि गच्छतः कण्टकभङ्गवत्, 'चरणस्य' चारित्रस्य 'जनितं' उत्पादितम् । आकुट्टिकादीनां पुनः स्वरूपमिदम्—"आउट्टिया उ तिव्वा दप्पो पुण होइ वग्गणाईओ । विगहाइओ पमाओ कप्पो पुण कारणे करणं ॥ १ ॥ " उपलक्षणं चैतत् दशविधायाः प्रतिसेवायाः । सा चेयम्—"दप्प १ प्पमाय २ णाभोगा ३ आउरे ४ आवईसु ५ य । संकिए ६ सहसाकारे ७ भए ८ पओसे य ९ वीमंसा १० ॥ १ ॥ " अपिशब्दः संभावने संभाव्यते एवैतच्चारित्रिणो 'विकटनया' आलोचनया शोधयन्ते' अपनयन्ति 'मुनयः' यतयो 'विमलश्रद्धाः' निष्कलङ्कधर्माभिलाषाः । एवमवबुध्यमानाः—"नवि तं सत्थं व विसं व दुप्पउत्तो व कुणइ वेयालो । जंतं व दुप्पउत्तं सप्पो व पमाइओ कुद्धो ॥ १ ॥ जं कुणइ भावसल्लं अणुद्धियं उत्तमट्ठकालंमि । दुलहवोहीयत्तं अणंतसंसारियत्तं च ॥ २ ॥ " इति गाथार्थः ॥ १०४ ॥

सांप्रतं प्रस्तुतलिङ्गमुपसंहरँल्लिङ्गान्तरं संबन्धयन्नाह—

**एसा पवरा सद्धा अणुबद्धा होइ भावसाहुस्स । एईए सब्भावे पन्नवणिज्जो हवइ एसो ॥ १०५ ॥**

'एषा' चतुरङ्गा 'प्रवरा' वरेण्या 'श्रद्धा' धर्माभिलाषः 'अणुबद्धा' अव्यवच्छिन्ना 'भवति' संपद्यते 'भावसाधोः' प्रस्तुतयतेः । एतस्याः श्रद्धायाः 'सद्भावे' सत्तायां 'प्रज्ञापनीयः' असद्ग्राहग्रहविकलो भवत्येव ('एषः') भावमुनिः । इति गाथार्थः॥१०५॥

ननु किं चारित्रवतोऽप्यसद्ग्रहः संभवति ? सत्यं संभवत्येव, मतिमोहमाहात्म्यात् । मतिमोहोऽपि कुतः ? इति चेदुच्यते—

**विहिंउज्जमवन्नयभेयउस्सग्गववायतदुभयगयाइं । सुत्ताइं बहुविहाइं समए गंभीरभावाइं ॥ १०६ ॥**

विधिश्चोद्यमश्च वर्णकश्च भयं चोत्सर्गश्चापवादश्च तदुभयं चेति द्वन्द्वः, तस्य च स्वपदप्रधानत्वाद्गतानीति प्रत्येकमभिसंबध्यते । सूत्राणि च विशेष्याणि । ततश्चैवं योज्यते—कानिचिद्विधिगतानि सूत्राणि समये सन्ति । यथा—"संपत्ते भिक्खकालंमि असंभंतो अमुच्छिओ । इमेण कमजोएण भत्तपाणं गवेसए ॥ १ ॥ " इत्यादीनि पिण्डग्रहणविधिज्ञापकानि । उद्यमसूत्राणि—"दुमपत्तए पंडुयए जहा निवडइ राइगणाण अच्चए । एवं मणुयाण जीवियं समयं गोयम ! मा पमायए ॥१॥ " इत्यादीनि । तथा—"वंदइ उभओ कालंपि चेइयाइं थयथुईपरमो । जिणवरपडिमा घरधूयपुप्फगंधच्चणे जुत्तो ॥ १ ॥ " कालनिरूपणस्योद्यमहेतुत्वान्नपुनरन्यदाऽपि चैत्यवन्दनं न धर्मायेति । वर्णकसूत्राणि चरितानुवादरूपाणि । यथा—द्रौपद्या पूरुषपञ्चकस्य वरमालानिक्षेपः, ज्ञाताधर्मकथाद्यङ्गेषु नगरादिवर्णकरूपाणि च वर्णकसूत्राणि । भयसूत्राणि नारकादिदुःखदर्शकानि । उक्तं च—"नरएसु मंसरुहिराइवन्नणं जं पसिद्धिमेत्तेण । भयहेउ इहर तेसिं वेउव्वियभावओ न तयं ॥ १ ॥ " अथवा दुःखविपाकेषु पापकारिणां चरितकथनानि भयसूत्राणि । तद्भयात्प्राणिनां पापनिवृत्तिसंभवात् । उत्सर्गसूत्राणि—"इच्चेसिं छण्हं जीवनिकायाणं नेव सयं दंडं समारंभेज्जा ॥ " इत्यादिषड्जीवनिकायरक्षाविधायकानि । अपवादसूत्राणि प्रायश्छेदग्रन्थगम्यानि । यद्वा—"न यालभेज्जा निउणं सहायं गुणाहियं वा गुणओ समं वा । एक्कोवि पावाइं विवज्जयंतो विहरेज्ज कामेसु असज्जमाणो ॥ १ ॥ " इत्यादीन्यपि । तदुभयसूत्राणि येपूत्सर्गापवादौ युगपत्कथ्येते । यथा—"अट्टज्झाणाभावे सम्मं अहियासियव्वओ वाही । तब्भावम्मि उ विहिणा पडियारपवत्तणं नेयं ॥ १ ॥ " एवं 'सूत्राणि बहुविधानि' स्वसमयपरसमयनिश्चयव्यवहारज्ञानक्रियादिना नयमतप्रकाशकानि 'समये' सिद्धान्ते 'गम्भीरभावानि' महामतिगम्याभिप्रायाणि सन्तीति शेषः ॥ १०६ ॥

ततः किम्? इत्याह—

तेसिं विसयविभागं अमुणंतो नाणवरणकम्मुदया। मुज्झइ जीवो तत्तो सपरेसिमसग्गहं जणइ ॥१०७॥

'तेषां' सूत्राणां 'विषयविभागं' अयमस्य सूत्रस्य विषयः, अयं चामुष्येत्येवंरूपं 'अमुणन्' अलक्षयन् ज्ञानावरणकर्मण उदयाद्धेतोः 'मुह्यते' मोहमुपयाति 'जीवः' प्राणी। ततः 'स्वपरयोः' आत्मनः परस्य च पर्युपासकस्य 'असग्गहं' असद्बोधं जनयति, जमालिवत्। इति गाथार्थः ॥ १०७ ॥

ततश्च—

तं पुण संविग्ग गुरू परहियकरणुज्जयाणुकंपाए। बोहिंति सुत्तविहिणा पन्नवणिज्जं वियाणंता ॥ १०८ ॥

'तं' मूढं, पुनःशब्दादर्थिनं विनीतं च 'संविग्नाः' प्रतीताः, 'गुरवः' पूज्याः 'परहितकरणोद्यताः' परोपकाररसिकाः 'अनुकम्पया' मा गमदेष दुर्गतिं, इत्यनुग्रहबुद्ध्या प्रेरिताः 'बोधयन्ते' प्रज्ञापयन्ति, 'सूत्रविधिना' आगमोक्तयुक्तिभिः 'प्रज्ञापनीयं' प्रज्ञापनोचितं 'विजानानाः' लक्षयन्तः। तदितरस्य सर्वज्ञेनापि बोधयितुमशक्यत्वात्। इति गाथार्थः ॥ १०८ ॥

ततः—

सोवि असग्गहचाया सुविसुद्धं दंसणं चरित्तं च। आराहिउं समत्थो होइ सुहं उज्जुभावाओ ॥१०९॥

'सोऽपि' प्रज्ञापनीयमुनिः 'असद्ग्रहत्यागात्' निजपरिकल्पितबोधमोचनात् 'सुविशुद्धं' अतिनिर्मलं 'दर्शनं' सम्यक्त्वं 'चारित्रं' संयमं, चशब्दात् ज्ञानतपसी च, आराधयितुं समर्थो भवति 'सुखं' यथा भवत्येवं 'ऋजुभावात्' आर्जवगुणात्। इत्यनेन प्रज्ञापनीयस्याप्यार्जवादेवालोचितप्रतिक्रान्तस्य शुद्धिर्भवतीत्यावेदितम्। तथा चागमः—"सोही उज्जुयभूयस्स धम्मो सुद्धस्स चिट्ठइ। निव्वाणं परमं जाइ घयसित्तेव पावए ॥ १ ॥" ॥ १०९ ॥

इत्युक्तं भावसाधोस्तृतीयं लिङ्गम्। अथ चतुर्थं क्रियापरत्वमुच्यते, तच्च प्रमादवतो न संभवतीति प्रमादपरिहारोपदेशमेव तावदाह—

सुगइनिमित्तं चरणं तं पुण छक्कायसंजमो चेव। सो पालिउं न तीरइ विगहाइपमायजुत्तेहिं ॥ ११० ॥

शोभना गतिः सुगतिः सिद्धिरेव, तस्या निमित्तं कारणं 'चरणं' यतिधर्मः। तदुक्तम्—"नो अन्नहावि सिद्धी पाविज्जइ जं तओ इमोणत्थि। एसो चेव उवाओ आरम्भा वट्टमाणा उ ॥ १ ॥" तथा—"विरहिततरकाण्डा बाहुदण्डैः प्रचण्डं कथमपि जलराशिं धीवरा लङ्घयन्ति। ननु कथमपि सिद्धिः साध्यते शीलहीनैर्दृढयत यतिवृत्ते चित्तमेवं विदित्वा ॥ १ ॥" 'तत्पुनः' चरणं 'षट्कायसंयम एव' जीवरक्षण एव, चकाराच्चरित्रमोहनीयकर्मक्षयोपशमश्चेति सूचयति। 'सः' पुनः संयमः 'पालयितुं' वर्द्धयितुं 'न तीरइ' इति न शक्यते। विकथा विरुद्धकथा, आदिशब्दान्मद्यादिपरिग्रहः। उक्तं च—"मज्जं विसयकसाया निद्दा विगहा य पंचमी भणिया। एए पंच पमाया जीवं पाडेंति संसारे ॥ १ ॥" तत्र मद्यं साधूनामकल्पनीयमेव। यतोऽवाचि—"सुरं वा मेरगं वावि अन्नं वा मज्जगं रसं। ससक्खं न पिबे भिक्खू जसं सारक्खमप्पणो ॥ १ ॥" तथा विषयप्रमादोऽपि हेय एव। यतः सूत्रम्—"विसएसु मणुन्नेसुं पेमं नाभिनिवेसए।

१ 'प्रचण्डैः' इत्यपि। २ 'धीधना' इत्यपि। ३ 'ससक्खं' इत्यपि ॥

अणिच्चं तेसि विन्नाय परिणामं पोग्गलाण उ ॥ १ ॥" एवं कषायप्रमादोऽपि न विधेयः। यत आर्षम्—"कोहं माणं च मायं च लोभं च पाववड्ढणं। वमे चत्तारि दोसे उ इच्छंतो हियमप्पणो ॥ १ ॥" निद्राप्रमादोऽप्युचित एव विधेयः। तद्यथा—"पढमा पोरुसि सज्झायं बीया ज्झाणं झियायइ। तइयाए निद्दमोक्खं तु सज्झायं च चउत्थिए ॥ १ ॥" कथास्वप्ययमुपदेशः—"आक्षेपणविक्षेपणविमार्गबाधनसमर्थविन्यासम्। श्रोतृजनश्रोत्रमनःप्रमादजननीं यथा जननीम् ॥ १ ॥ संवेदनीं च निर्वेदनीं च धर्म्यां कथां सदा कुर्यात्। स्त्रीभक्तचौरजनपदकथाश्च दूरात् परित्याज्याः ॥ २ ॥" तदेवमागमनिषिद्धविकथादिप्रमादयुक्तैः संयमः प्रतिपालयितुं न शक्यते, अतोऽसौ न विधेयः। इति गाथाभावार्थः ॥ ११० ॥

प्रमादस्यैव विशेषतोऽपायहेतुतामाह—

पव्वज्जं विज्जंपिव साहिंतो होइ जो पमाइल्लो। तस्स न सिज्झइ एसा करेइ गरुयं च अवयारं ॥ १११ ॥

'प्रव्रज्यां' जिनदीक्षां विद्यामिव साधयन् भवति यः 'पमाइलो' इति प्रमादवान् "मत्वत्थंमि मुणेज्जह आलं इलं मणं इत्तं" इति देशी वचनात्। 'तस्य' प्रमादवतो 'न सिध्यति' न फलदानाय संपद्यते 'एषा' दीक्षा विद्येव, चकारस्य भिन्नक्रमत्वात् करोतीति च 'गुरुं' महान्तं 'अपकारं' अनर्थमिति। भावार्थः पुनरिह—प्रमादवतः साधकस्य यथा विद्या फलदा न भवति, ग्रहसंक्रमादिकमनर्थकं च संपादयति, तथा शीतलविहारिणो जिनदीक्षाऽपि न केवलं मोक्षादिसंपत्तये न भवति, (किन्तु) दीर्घभवभ्रमणापायं च विदधाति। उक्तं च—"सीयलविहारओ खलु भगवंतासायणानिओगेण। तत्तो

१ 'मुणेज्जह' इत्यपि ॥

भवो सुदीहो किलेसबहुलो जओ भणियं ॥१॥ तित्थयरपवयणसुयं आयरियं गणहरं महिड्ढीयं । आसायंतो बहुसो अणंतसंसारिओ होइ ॥ २ ॥" तस्मादप्रमादिना सुविहितेन भाव्यम् । इति गाथार्थः ॥ १११ ॥

प्रमादस्यैव युक्त्यन्तरेण निषेधमाह—

**पडिलेहणाइचेट्ठा छक्कायविघाइणी पमत्तस्स । भणिया सुयंमि तम्हा अपमाई सुविहिओ होइ ॥११२॥**

प्रत्युपेक्षणा मुनिजनप्रतीता, आदिशब्दाद्गमनादिग्रहः, चेष्टा क्रियाव्यापारः, इत्यनर्थान्तरम् । षट्कायविराधि ( घाति ) नी 'प्रमत्तस्य' साधोः 'भणिता' उक्ता 'श्रुते' सिद्धान्ते। तद्यथा—"पडिलेहणं कुणंतो मिहो कहं कुणइ जणवयकहं वा । देइ व पच्चक्खाणं वाएइ सयं पडिच्छइ वा ॥ १ ॥ पुढवीआउक्काए तेऊवाऊवणस्सइतसाणं । पडिलेहणापमत्तो छण्हंपि विराहओ होइ ॥ २ ॥" तस्मात्सर्वव्यापारेष्वप्रमादी सुविहितो भवतीति पूर्वत्राऽपि योज्यम् । तच्चार्थतो योजितमेव । इति गाथार्थः ॥ ११२ ॥

अथ कीदृगप्रमादी स्यात् ? इत्याह—

**रक्खइ वएसु खलियं उवउत्तो होइ समिइगुत्तीसु । वज्जइ अवज्जहेउं पमायचरियं सुथिरचित्तो ॥११३॥**

'रक्षति' अकरणबुद्ध्या परिहरति 'व्रतेषु' विषयभूतेषु 'स्खलितं' अतिचारम् । तत्र प्राणातिपातविरतौ त्रसस्थावरजन्तूनां संघट्टनपरितापनोपद्रावणानि न करोति । मृषावादविरतौ सूक्ष्ममनाभोगादिना, बादरं वञ्चनाभिसन्धिना न

१ "वञ्चनाभिसंधिना" इत्यपि ॥

भाषते । अदत्तादानविरतौ सूक्ष्ममननुज्ञाप्य कायिकादि न करोति, बादरं स्वामिजीवतीर्थकरगुरुभिरननुज्ञातं नादत्ते, नापि परिभुङ्क्ते । चतुर्थव्रते दशब्रह्मचर्यस्थानानि सम्यगाराधयति । पञ्चमव्रते सूक्ष्मं बालादिममत्वं न करोति, बादरमनेषणीयाहारादि न गृह्णाति 'परिग्गहोणेसणग्गहणे' इत्याप्तवचनात् । उपकरणं चाधिकं मूर्च्छया न धारयति । रात्रिभक्तविरतौ सूक्ष्ममामोद्गारादि रक्षति, बादरं तु दिवाग्रहीतं दिवाभुक्तमित्यादिचतुर्विधां रात्रिभुक्तिं न करोति । एवं सर्वव्रतेषु स्खलितं रक्षति । तथा 'उपयुक्तः' दत्तावधानो भवति । समितिषु प्रवीचाररूपासु, गुप्तिषु प्रवीचाराप्रवीचाररूपासु । यत उक्तम्—"समिओ नियमा गुत्तो गुत्तो समियत्तणंमि भइयबो । कुसलवइमुदीरंतो जं वइगुत्तोवि समिओवि ॥ १ ॥" उपयुक्तता चासु प्रवचनमात्राध्ययनोक्तविधिना विज्ञेया । सर्वस्वं चैताः सर्वसाधूनाम् । यत आह—"अष्टौ साधुभिरनिशं मातर इव मातरः प्रवचनस्य । नियमेन न मोक्तव्याः परमं कल्याणमिच्छद्भिः ॥ १ ॥" किं बहुना, वर्जयति अवद्यहेतुं प्रमादचरितं सुस्थिरचित्त इति स्पष्टार्थमेव । इति गाथार्थः ॥ ११३ ॥

तथा—

**कालंमि अणूणहियं किरियंतरविरहिओ जहासुत्तं । आयरइ सव्वकिरियं अपमाई जो इह चरित्ती ॥११४॥**

'काले' अवसरे, यो यस्याः प्रत्युपेक्षणादिक्रियायाः प्रस्तावस्तस्मिन्नित्यर्थः । प्रस्तावमृते कृष्यादयोऽपि नेष्टसिद्धये स्युरित्यतः काले सर्वां क्रियां करोतीति योगः । कथंभूताम् ? 'अन्यूनाधिकां' न प्रमादातिशयादूनां, नापि शून्यतया स्वस्य स्थापनार्थं वा समधिकां करोति, अवसन्नताप्रसङ्गात् । तथा चागमः—"आवस्सयाइयाइं न करे अहवावि हीणमहियाइं । गुरुवयणबलाइ तहा भणिओ एसो हु ओसन्नो ॥ १ ॥" तथा 'क्रियान्तरविरहितः' इति एकस्याः क्रियायाः द्वितीया क्रिया क्रियान्तरं, तेन विरहितः । प्रत्युपेक्षणादि कुर्वन्न स्वाध्यायं करोति, स्वाध्यायं कुर्वन्न वस्त्रपात्रादिपरिकर्मगमनादि वेति । अत एवोक्तमार्षे—"इंदियत्थे विसज्जित्ता सज्झायं चेव पंचहा । तम्मुत्ती तप्पुरक्कारे उवउत्ते रियंरिए ॥ १ ॥" नन्वेवं यत्केचन नमस्कारस्तोत्रादिसमुच्चारयन्तश्चैत्यप्रदक्षिणां ददति तदागमविरुद्धमिवाभाति, यतः केवलिनोऽप्युपयोगद्वयमेकदा नेष्यते, "सबस्स केवलिस्स जुगवं दो नत्थि उवओगा" इत्यागमश्रुतेः, इत्यत्रोच्यते, केवलिनो युगपदुपयोगद्वयं नास्तीत्येतन्न ज्ञापकं, तस्य सामयिकोपयोगापेक्षत्वात्, छद्मस्थोपयोगस्यान्तर्मौहूर्त्तिकत्वात्, तेषां च पदे पदेऽसंख्येयानां भावात्, जीववीर्यस्य चाचिन्त्यत्वात्, शीघ्रकारित्वाच्च, ईर्यासमितावप्युपयोगः संभवत्येव । तर्हि किमर्थमुक्तं सूत्रे ? 'इंदियत्थे विसज्जित्ता' इत्यादि । इति चेत् सत्यम्, भिन्नविषयापेक्षं तत्तथा हि भिक्षाचर्यादिक्रिया भिन्ना स्वाध्यायश्च भिन्नार्थ इति । स्वाध्यायोपयोगे ईर्योपयोगासंभवः । प्रदक्षिणायां पुनर्मनोवाक्कायैर्जिनवन्दनमेव चिकीर्षितमित्यभिन्नविषयता । तत्रोपयोगद्वयं त्रयं वा न विरुद्धम् । यत एवमागमः—"भिन्नविसयं निसिद्धं किरियादुगमेगया न एगंमि । जोगतिगस्सवि भङ्गियसुत्ते किरिया जओ भणिया ॥ १ ॥" तथा—"सबत्थवि पणिहाणं तग्गयकिरियाभिहाणवन्नेसु । अत्थे विसए य तहा दिट्ठंतो छिन्नजालाए ॥ १ ॥" तस्मात्संविग्नव्यवहारेण मन्दगत्या प्रदक्षिणायां स्तुतिपाठे न कश्चिद्दोषः, अपि तु त्रियोगसारमनुष्ठानमाराधितं भवतीत्यलं प्रसङ्गेन । 'यथासूत्रम्' इति सूत्रोक्तस्याऽनतिक्रमेण ।

१ 'सुत्तेसु' इत्यपि ॥

तत्पुनः—"सुत्तं गणहररइयं तहेव पत्तेयबुद्धरइयं च । सुयकेवलिणा रइयं अभिन्नदसपुव्विणा रइयं ॥ १ ॥" तेषां निश्चयसम्यग्दृष्टित्वेन सद्भूतार्थवादित्वादन्यग्रथितमपि तदनुयायिप्रमाणमेव, न पुनः शेषमिति । आचरति सर्वक्रियाम- प्रमादी च इह चारित्रीति सुगममेव । इति गाथार्थः ॥ ११४ ॥

उक्तं चतुर्थभावसाधुलिङ्गम्, अधुना पञ्चममाह—

संघयणाइणुरूवं आरंभइ सक्कमेवणुट्ठाणं । बहुलाभमप्पछेयं सुयसारविसारओ सुजई ॥ ११५ ॥

संहननं वज्रर्षभनाराचादि, आदिशब्दाद्द्रव्यक्षेत्रकालभावा गृह्यन्ते, तदनुरूपं तदुचितमेवारभते सर्वं 'अनुष्ठानं' तपः- प्रतिमाकल्पादि । यद्यस्मिन् संहननादौ निर्वोढुं शक्यते तदेवारभते, अधिकस्य निष्ठानयनाभावेन प्रतिज्ञाभङ्गसंभवात् । कीदृक् पुनरारभते ? 'बहुलाभं' विशिष्टफलप्रापकं 'अल्पच्छेदं' अल्पापकारम् । अल्पशब्दस्याभाववचनत्वात्संयमाबाधक- मिति भावः । 'श्रुतसारविशारदः' सिद्धान्ततत्त्वाभिज्ञः 'सुयतिः' भावसाधुः । इति गाथार्थः ॥ ११५ ॥

कथं पुनरेवंविधं स्यात् ? इत्याह—

जह तं बहुं पसाहइ निवडइ अस्संजमे दढं न जओ । जणिउज्जमं बहूणं विसेसकिरियं तहाढवइ ॥ ११६ ॥

'यथा' येन प्रकारेण 'तत्' अधिकृतमनुष्ठानं 'बहु प्रसाधयति' पुनः पुनरासेवनेन निपतति वा 'असंयमे' सावद्यक्रि- यायां 'दृढं' अत्यर्थं नैव 'यतः' अनुष्ठानात् । किमुक्तं भवति—अनुचितानुष्ठानपीडितो न पुनस्तत्करणायोत्सहते, कदा- चिद्रोगसंभवे च चिकित्सायामसंयमः, तदकरणे चाविधिमृतस्य संयमान्तरायः । अत एवोक्तम्—"सो हु तवो कायव्वो जेण मणो मंगुलं न चिंतेइ । जेण न इंदियहाणी जेण य जोगा न सीयंति ॥ १ ॥" तथा 'जनितोद्यमं' संपादितकरण- मनोरथं 'बहूनां' अन्येषां समानधार्मिकाणां, शक्यानुष्ठाने हि बहूनां चिकीर्षा संभवति, नेतरस्मिन्निति । 'विशेषक्रियां' अधिकतरानुष्ठानं प्रतिमाभ्यासादिकम् । तथाशब्दः समुच्चये, स चैवं योज्यते—शक्तौ सत्यां विशेषक्रियां चारभते, न तां निष्फलां विदधाति । इति गाथार्थः ॥ ११६ ॥

कथंभूतां पुनस्तां करोति ? इत्याह—

गुरुगच्छुन्नइहेउं कयतित्थपभावणं निरासंसो । अज्जमहागिरिचरियं सुमरंतो कुणइ सक्किरियं ॥११७॥

गुरोर्गच्छस्य चोन्नतिरुत्सर्पणा, धन्योऽयं गुरुर्गच्छो वा यत्सान्निध्यादेवंविधा दुष्करकारिणो दृश्यन्ते, इत्येवं जनश्ला- घारूपा, तद्धेतु' तत्कारणम् । तथा 'कृततीर्थप्रभावनां' उत्पादितजिनशासनसाधुवादां, साधुः सुन्दरो जिनधर्मः सर्वधर्मेषु वयमप्येनमेव कुर्मः, इत्येवमादेयत्वसाधिकामिति भावः । 'निराशंसः' ऐहिकपारत्रिकाशंसाविप्रमुक्तः । तदुक्तम्—"नो इह लोगट्ठयाए आयारमहिट्ठेज्जा, नो परलोगट्ठयाए आयारमहिट्ठेज्जा, नो कित्तिवन्नसद्दसिलोगट्ठयाए आयारमहिट्ठेज्जा, नन्नत्थ आरहंतेहिं हेऊहिं आयारमहिट्ठेज्जत्ति ॥" आर्यमहागिरेराचार्यस्य चरितं वृत्तान्तमागमोक्तं स्मरन् करोति सत्क्रियां प्रकृतः साधुरिति गाथाक्षरार्थः । भावार्थः कथानकादवसेयः ॥ ११७ ॥

तच्चेदम्—

सुहम्मसामिणो अट्ठमट्ठाणे अपच्छिमचउद्दसपुव्वी भयवं थूलभद्दो सूरी संवुत्तो । तस्स य दसपुव्वधारिणो दो सीसा, अज्जमहागिरी सुहत्थी य । परोप्पराणुराइणो भारहे वासे विहरिंसु । अन्नया भयवं महागिरी सुहत्थिस्स गणं समप्पिऊण वोच्छिन्नेवि जिणकप्पे तक्किरियमब्भसमुज्जमारद्धो गणनिस्साए चेव विहरइ । विच्छड्डिज्जंतं भत्तपाणं गिण्हइ । जहासत्ति सेसं च जिणकप्पकिरियमणुचरइ । न याहमुत्तमकिरियाकारित्ति गव्वमुव्वहइ । खंतो दंतो गच्छेण चेव समं गामाणुगामं दुइज्जइ । अन्नया ते दोवि पाडलिपुत्तपुरं पत्ता । तत्थ सुहत्थिसूरिणा वसुभूइनामो सेट्ठी समणोवासओ कओ । सो नियपरियणं पइदिणं धम्मदेसणाए पडिबोहेइ । जाहे कोइ न पडिबुज्झइ, न य गुरुसमीवमुवेइ, ताहे सेट्ठी चिंतइ— "गुणसुट्ठियस्स वयणं घयमहुसित्तो व पावओ भाइ । गुणहीणस्स न सोहइ नेह विहूणो जह पईवो ॥ १ ॥" ता जइ भय- वंतो गुरू इहेयागंतूण एएसिं धम्मं कहंति ता कयाइ पडिबोहो होइ । अहवा विन्नवेमि ताव गुरुं, जमुचियं तं ते चेव नाणनिहिणो मुणिस्संतित्ति संपहारिऊण विन्नत्ता गुरवो । तेवि गुणदंसणाओ उवागया तस्स गिहं । तओ अमयनिस्सं- दसुंदरं तद्दंसणं सोऊण पडिबुद्धा सव्वे सेट्ठिसन्नायगा । तेसिं थिरीकरणत्थमायरिया दिणे दिणे तत्थागच्छंति । अन्नया उवविट्ठाण तेसिं तइयपोरसीए गोयरमडंतो पविट्ठो तत्थ पाडगे महागिरी । ससंभमेण अब्भुट्ठिओ सुहत्थिणा । तओ किमेस मलपंकधारी परिजुन्नचीवरावरियसरीरगदेसो उत्तमपयपत्तेणेएण अब्भुट्ठिउत्ति विम्हिएण पुट्ठं सेट्ठिणा, भयवं ! को एस तुम्हाणंपि गोरवट्ठाणं ? । सूरिणा भणियं, एस महप्पा अम्ह गुरू, सुयनाणसलिलसमुद्दो, परिमुक्कसरीरसक्कारो, जीवियमरणासंसाविवज्जिओ, उज्झियधम्मभत्तपाणेसणिओ, देवाणंपि वंदणिज्जो, अम्हे एयस्स पायरेणुणावि न तुल्ला । एयमायन्निऊण वसुभूई दुइयदिवसे सयणाणं कहेइ । जो सो कल्लिं गुरूहिं अब्भुट्ठिओ महातवस्सी तमागच्छंतं दट्ठूण

तुब्भे भत्तपाणाइं उज्झिज्जमाणाइं पकरेज्जह भणेज्जह य, भो समणा ! एयमम्हे उज्झाएमो जइ रोयइ ता गिण्हाहि । जइ सो कहिंपि गिण्हइ ता तुम्हे अणंतसुहभायणं भवह । तेहिंवि महागिरिमागच्छमाणमुवलब्भ तहेव कीरइ । किं पुण घरे घरे एवं छड्डिज्जइत्ति उवउत्तेण अणेसणिज्जंति न गाहियं सूरिणा,भिक्खारिक्खभायणो चेवागओ उवस्सयं । किमेयंति सुहत्थिणा पुच्छिए भणियमियरेण, अज्जो ! तुब्भेहिं अणेसणा कया । कहमेयं भंते !, जं कल्ले अब्भुट्ठाणं कयंति । तओ न एत्थ एसणा जुज्झइत्ति दोवि विहरिऊण गया वइदिसं । तत्थ केइ दिवसे अत्थिऊण कयसंभासो भयवं महागिरी गओ एलगच्छनयरं । तत्थ य गयग्गपयओवरि कयाणसणो समाहिणा कालगओ गओ अमरलोगंति । सेसमक्खाणयमावस्सयाओ विन्नेयं । इह पुण उवणओ जहा महागिरिणा वोच्छिन्नावि जिणकप्पकिरिया जहासत्तीए समणुट्ठिया, तहा अन्नोवि भावसाहू वीरियमणिगूहंतो विसेसकिरियमायरइत्ति ॥

अमुमेवार्थं स्फुटतरं भावयन्नाह—

**सक्कंमि नो पमायइ असक्ककज्जे पवित्तिमकुणंतो । सक्कारंभो चरणं विसुद्धमणुपालए एवं ॥ ११८ ॥**

'शक्ये' सामर्थ्योचिते समितिगुप्तिप्रत्युपेक्षणास्वाध्यायाध्ययनादौ 'न प्रमाद्यति' नालस्यवान् स्यात् । 'अशक्ये' जिनकल्पमासक्षपणादौ 'प्रवृत्तिं' अङ्गीकारमकुर्वन् शक्यारम्भो भवतीति गम्यते । स च 'चरणं' संयमं 'विशुद्धं' अकलङ्कमनुरूपं कालसंहननादीनां 'पालयति' वर्द्धयति 'एवं' उक्तन्यायेन सम्यगारम्भस्येष्टसिद्धिहेतुत्वात् । इति गाथार्थः ॥ ११८ ॥

ननु धर्ममपि कुर्वन् किं कश्चिदसदारम्भः स्यात् ? उच्यते, स्यादेव मतिमोहमानातिरेकवशात् । कथमिव ? क इव ? इति पराकूतमाशङ्क्याह—

**जो गुरुमवमन्नंतो आरंभइ किर असक्कमवि किंचि । सिवभूइ व्व न एसो सम्मारंभो महामोहा ॥११९॥**

'यः' कश्चिन्मन्दमतिः 'गुरुं' धर्माचार्य 'अवमन्यमानः' हीनाचारोऽयमित्यवज्ञया पश्यन् 'आरभते' प्रकर्तुं प्रतिजानीते, 'अशक्यं' कालसंहननाननुरूपं जिनकल्पादिकम् । अपिशब्दाच्छक्यमपि 'किञ्चित्' विकृतिपरिहारादिकं गुरुभिरक्रियमाणमेव, न तु शेषमनुष्ठानमिति प्रकृतम् । 'शिवभूतिरिव' आद्यदिगम्बरवत् । नैव 'एषः' प्रक्रान्तपुरुषः 'सम्यगारम्भः' सत्प्रवृत्तिर्महामोहाद्धेतोः । अयमाशयः—नाकृतज्ञताज्ञानातिरेकौ विना कश्चिद्गुरोः परमोपकारिणश्छायाभ्रंशायोत्सहते । इति गाथाक्षरार्थः । भावार्थः कथानकगम्यः ॥ तच्चेदम्—

रहवीरपुरे नयरे सीहरहो नाम पत्थिवो होत्था । साहसबलमाणधरो सिवभूई तस्स पाइक्को ॥ १ ॥ सूरोत्ति समाइट्ठो सो महुरासामिणो गहणकज्जे । सामंतमंतिसहिओ दिन्नंमि पयाणए पढमे ॥ २ ॥ संदेहो संजाओ सामंताईण तत्थ सव्वेसिं । उत्तरदाहिणमहुराण का णु घेत्तुं समाएसो ॥ ३ ॥ पुण पुच्छियंमि नियमा रूसइ रायत्ति किमिह कायव्वं । इय चिंताउलहियया भणिया सिवभूइणा ते उ ॥४॥ भो ! भो ! किं चिंताए सयराहं दोवि गिण्हिमो महुरे । बलियत्ते डिंभाणं न हु दोसो होइ कइयावि ॥ ५ ॥ नवरमहं एगागी तुब्भे सव्वेवि होह एगत्थ । दुग्गेज्झमहं घेच्छं इयरं तुब्भेहि सव्वेवि ॥ ६ ॥ अह सम्मएण तेसिं गहिओ सिवभूइणा अणाएण । गंतूण दाहिणाए महुराए सामिओ सहसा ॥ ७ ॥ इयरेवि उ-

१ "पयडेण" इत्यन्यत्र ॥

त्तराए महुराए सामियं गहेऊण । रहवीरपुरं पत्ता जुगवं वद्धाविओ राया ॥ ८ ॥ तुट्ठो दढं नरिंदो महया सिवभूइसाहुणेणाह । मग्गसु वरं महाबल ! सुहड ! फुडं नियमणोभिमयं ॥ ९ ॥ सिवभूइणा पवुत्तं जइ तुट्ठो सुट्ठु देहि तो देव ! । मह इच्छियं पयारं नयरे रत्तिं व दिवसं वा ॥ १० ॥ एवंति पत्थिवेणं पडिवन्ने निब्भओ भमइ एसो । न गणइ कालमकालं अक्खलिओ नयररक्खेहिं ॥ ११ ॥ कइयावि मज्झरत्ते अहिए ऊणे व एइ कइयावि । भज्जा य जग्गमाणी चिट्ठइ जा तस्स आगमणं ॥ १२ ॥ निव्विन्ना सासूए साहइ सा तुज्झनंदणो एसो । एइ चिराओ गेहं अहंपि दुक्खेण जग्गामि ॥ १३ ॥ सा चिंतइ जइ राया तुट्ठो न तहावि एरिसं जुत्तं । उस्सिंखलस्स भमणं ता सिक्खावेमि नियपुत्तं ॥ १४ ॥ तो भणइ सुवसु सुण्हे ! तुममहयं चेव अज्ज जग्गेमि । इय भणिय विहियदारा पजग्गिया सा सुया तत्तो ॥ १५ ॥ सो मज्झरत्तसमए उग्घाडावेइ जाव घरदारं । तो भणियं जणणीए रुट्ठाए एरिसं वयणं ॥ १६ ॥ एत्तियमेत्तनिसाए उग्घाडं जत्थ पेच्छसे दारं । तत्थेव गच्छ पुत्तय ! न इह गिहे जग्गए कोवि ॥ १७ ॥ जगणीवयणं सोउं गहिओ माणेण माणसे एसो । साहुवस्सयदारं निच्चुग्घाडं नियइ कहवि ॥ १८ ॥ तत्थ नियच्छइ सूरिं भयसङ्गविवज्जियं नियकमायं । नामेण अज्जकण्हं सज्झायंतं महुरघोसं ॥ १९ ॥ धन्नो एस कयत्थो रहिओ माणावमाणदुक्खेहिं । इय चिंतंतो वंदइ सूरिं भूलुलियभालयलो ॥ २० ॥ भणइ य भयवं ! भीओ भवभमणाओ तुहागओ सरणं । नियदिक्खादाणेणं करेहि ता पहु ! पसायं मे ॥ २१ ॥ भणइ गुरू कोसि तुमं ? किं वा पव्वयसि ? सोवि पडिभणइ । सुपसिद्धो सिवभूई भिच्चोहं नयरनाहस्स ॥ २२ ॥ तो कह रायाणमपुच्छिऊण पव्वाविमो तओ भणइ । तो खाइ तुम्ह पुरओ दिक्खं अहयं सयं गिण्हे

॥ २३ ॥ इय भणिय जाव लोयं एसो सयमेव काउमारद्धो । ता दिक्खिओ गुरूहिं अणवत्थादोसभीएहिं ॥ २४ ॥ बलि-मह्लाए राया उप्पयाविस्सइत्ति संकाए । सव्वेवि समुच्चलिया पत्ता देसंतरं अन्नं ॥ २५ ॥ कालेण पुणो रन्ना भत्तिब्भर-निब्भरेण आहूओ । रहवीरपुरं नयरं कण्हायरिएहिं सह पत्तो ॥ २६ ॥ दमणहेउं तत्तो आहूओ नियमंदिरं रन्ना । संमाणियो य सुंदरकंबलरयणप्पयाणेण ॥ २७ ॥ आलोइयंमि गुरुणा भणिओ किं पुण इमं महामोल्लं । गहियंति सो पयंपइ दक्खिन्नाओ नरिंदंमि ॥ २८ ॥ तस्स परोक्खस्स पुणो कया निसेज्जाओ तंमि मुणिवइणा । अपत्तिएण गहिओ सिवभूई तो मणे मणयं ॥ २९ ॥ अह अन्नया कयाई उवहिवियारो गुरूहिं पारद्धो । जिणकप्पथेरकप्पे पडुच्च एवं सुय-विहाणा ॥ ३० ॥ जिण बारस रूवाइं थेरा चोद्दसरूविणो । अज्जाणं पन्नवीसं तु अओ उड्ढमुवग्गहो ॥ ३१ ॥ दुगतिग-चउक्कपणगं नवदसएक्कारसे य बारसगं । एए अट्ठविगप्पा उवहिम्मि उ हुंति जिणकप्पे ॥ ३२ ॥ सोउं तं सिवभूई जंपइ एमेव उत्तमो कप्पो । काउं जुज्जइ परलोयसाहणे बद्धकच्छाणं ॥ ३३ ॥ ता एस किह कीरइ संपइ साहूहिं मोक्खकंखी-हिं । मोत्तूण वत्थपत्ताइसंगहं जिणवराविहियं ॥ ३४ ॥ जं किर गुरुस्स लिङ्गं तं चिय सीसस्स जुज्जए काउं । लोएवि लिङ्गिणो जं नियनियदेवाणुरूवंति ॥ ३५ ॥ गुरुणा पडिभणियं— तित्थंकराणुचिन्नं किरियं अम्हारिसा कह कुणंति । किं करिवरपल्लाणं तरंति नणु रासभा वोढुं ॥ ३६ ॥ पढमे च्चिय संघयणे सो कीरइ गरुयसत्तसारेहिं । केवलमुवग्गह च्चिय कायव्वा तस्स अम्हेहिं ॥ ३७ ॥ तित्थंकराणुकारं काउं न हि तरइ पागओ पुरिसो । गत्ताकोलो हरिकुंजरस्स किं लहइ तुल्लत्तं ॥ ३८ ॥ मिच्छादिट्ठी मूढा करिंति उग्घट्टयं जइ पहूणं । ता किं तिलोयपहुणो कुणंति जाणंतया पुरिसा ॥ ३९ ॥ आणावत्तित्तं चिय पहुणो आराहणं इह पहाणं । न हि कोवरिओ सेवइ रायाणं रायचिंधेहिं ॥ ४० ॥ पञ्चविहो उवइट्ठो कप्पो वीरेण विगयमोहेण । जहसत्ति तं कुणंतो आणं आराहए तस्स ॥ ४१ ॥ पढमो य थविरकप्पो परिहारविसुद्धि-कप्पजिणकप्पा । पडिमाकप्पो भणिओ तहा अहालंदकप्पो य ॥ ४२ ॥ पंचवि इमे पहाणा अन्नोन्नानिंदयाण साहूणं । अत्तुक्करिसविमूढयविवज्जियाणं जओ भणियं ॥ ४३ ॥ जोवि दुवत्थतिवत्थो एगेण अचेलओ व संथरइ । न य ते दूसिंति परं सव्वेवि य ते जिणाणाए ॥ ४४ ॥ एत्थ किर थेरकप्पो निच्चो जम्हा इमंमि निप्फन्ना । सेसाण हुंति जोग्गा तित्थं च इमेण निव्वहइ ॥ ४५ ॥ दुब्बलसंघयणाणं एसो च्चिय वट्टमाणपुरिसाणं । उचिओ कप्पो तम्हा एयंमि हवेज्ज रजुत्तो ॥ ४६ ॥ इय विविहजुत्तिसारं पन्नविओ सूरिणा तहवि एसो । गाढाभिमाणवसओ पडिभणिउं एयमाढत्तो ॥ ४७ ॥ जइ ताव मंदसत्ता तुब्भे सुहलंपडा न उज्जमह । सइ सामत्थे किमहं पमायसीलो भविस्सामि ॥ ४८ ॥ इय जंपंतो बहुहा वारिज्जंतोवि वुड्ढवसहेहिं । पडिवन्ननग्गभावो सिवभूई निग्गओ सहसा ॥ ४९ ॥ नेहेणणुपवइया लहुभइणी तस्स उत्तरा नाम । तं वचनं दट्ठं चिंतइ सहभाउणो नूणं ॥ ५० ॥ एएण पगारेणं दिट्ठो परलोयसाहणोवाओ । इय चिंतिय संच-लिया तहेव सा नग्गओ तस्स ॥ ५१ ॥ लज्जाकरित्ति काउं वेसाए साडिया नियच्छा से । तमणिच्छंती दट्ठूण भाउणा सा इमं भणिया ॥ ५२ ॥ देवयदिन्नं एयं मा मुंचसु सुयणु! साडियं एगं । इय एगसाडियत्तं संजायं तस्स अज्जाणं॥५३॥ एवं सो मोहंधो आरंभेऊण कट्टणुट्ठाणं । जाओ मिच्छादिट्ठी दुग्गइदुक्खोहभागी य ॥ ५४ ॥ तथा चागमः—

"ऊहाए पन्नत्तं बोडियसिवभूइउत्तराहि समं । मिच्छादंसणमिणमो रहवीरपुरे समुप्पन्नं ॥ १ ॥ "

## ॥ शिवभूतिचरितं समाप्तम् ॥

महामोहता चास्य गुरुवचनावज्ञयात्मानमुत्क्षमयितुं प्रवृत्तत्वाद्द्रष्टव्या । गुर्वाज्ञया शासनोन्नतिकारिणो लब्धिख्यातिनिरपेक्षस्य साधोरधिकतपःकर्मातापनादिकरणं च वीर्याचाराराधनरूपत्वाद्गुणकरमेव । इति गाथार्थः ॥ ११९ ॥

उक्तं शक्यानुष्ठानारम्भरूपं पञ्चमं भावसाधुलिङ्गम् । अधुना षष्ठं गुणरागमाह—

**जायइ गुणेसु रागो सुद्धचरित्तस्स नियमओ पवरो । परिहरइ तओ दोसे गुणगणमालिन्नसंजणणे ॥१२०॥**

'जायते' संपद्यते 'गुणेषु' ज्ञानादिषु मूलोत्तरगुणेषु वा 'रागः' प्रतिबन्धः 'शुद्धचारित्रस्य' निष्कलङ्कसंयमस्य 'नियमतः' अवश्यंभावेन 'प्रवरः' प्रधानो निर्मिथ्य इति भावः। 'परिहरति' वर्जयति 'ततः' तस्माद्गुणानुरागात् 'दोषान्' दुष्टव्यापारान् । किंविशिष्टान् ? 'गुणगणमालिन्यसंजनकान्' ज्ञानादीनामशुद्धिहेतून् भावसाधुः । इति गाथार्थः ॥ १२० ॥

गुणानुरागस्यैव लिङ्गमाह—

**गुणलेसंपि पसंसइ गुरुगुणबुद्धीए परगयं एसो । दोसलवेणवि निययं गुणनिवहं निग्गुणं गणइ ॥१२१॥**

'गुणलेशमपि' आस्तां महीयांसं गुणमित्यपेरर्थः । 'प्रशंसति' श्लाघते 'परगतं' अन्यसत्कम्, 'एषः' भावसाधुरुत्तमप्रकृतित्वान्महतोऽपि दोषानुपेक्ष्याल्पमपि परगतं गुणं पश्यति, कुथितकृष्णसारमेयशरीरे सितदन्तपङ्क्तिं दामोदरवदिति भावः । परिभावयति च—"कालंमि अणाईए अणाइदोसेहिवासिए जीवे । जं पाविय्यइ गुणोवि हु तं पन्नेजा महच्छरियं ॥ १ ॥ " तथा 'दोषलवेनापि' अल्पप्रमादस्खलितेनापि 'निजकं' आत्मीयं 'गुणनिवहं' सदनुष्ठानकलापं 'निर्गुणं'

असारं 'गणयति' कल्पयति । धिग् मां प्रमादशीलमिति भावनया प्रकृतो भावयतिः, कर्णस्थापितविस्मृतशुण्ठीखण्डापश्रिमदशपूर्वधरश्रीवैरस्वामिवत् । इति गाथार्थः ॥ १२१ ॥

तथा—

**पालइ संपत्तगुणं गुणड्ढसंगे पमोयमुव्वहइ । उज्जमइ भावसारं गुरुतरगुणरयणलाभत्थी ॥ १२२ ॥**

'पालयति' रक्षति वर्द्धयति च जननीव प्रियपुत्रं संप्राप्तं सम्यक्कर्मक्षयोपशमोपलब्धं, गुणं ज्ञानचरणरूपम् । तथा गुणैराढ्यानां समृद्धानां सङ्गे मीलके चिरप्रोषितस्निग्धबन्धुसंप्रयोग इव 'प्रमोदं' आनन्दं 'उत्' प्राबल्येन 'वहति' प्राप्नोति । तद्यथा—"असतां सङ्गपङ्केन यन्मनो मलिनीकृतम् । तन्मेऽद्य निर्मलीभूतं साधुसंबन्धवारिणा ॥ १ ॥ पूर्वपुण्यतरोरद्य फलं प्राप्तं मयाऽमलम् । सङ्गेनासङ्गचित्तानां साधूनां गुणधारिणाम् ॥ २ ॥ " तथा गुणरागादेव 'उद्यच्छति' प्रयतते 'भावसारं' सद्भावसुन्दरं यथा भवति, ध्यानाध्ययनतपःप्रभृतियतिकृत्येष्विति गम्यते । किम् ? इत्यत आह—गुरुतराणि क्षायिकभावभावित्वाद्यानि गुणरत्नानि क्षायिकज्ञानदर्शनचारित्राणि, तेषां यो लाभस्तदर्थी तदभिलाषवान् । तथा हि—भवत्येवोद्यमवतामपूर्वकरणक्षपकश्रेणिक्रमेण केवलज्ञानादिसंप्राप्तिः, सुप्रतीतमिदम् । इति गाथार्थः ॥ १२१ ॥

गुणानुरागस्यैव प्रकारान्तरेण लक्षणमाह—

**सयणोत्ति व सीसोत्ति व उवगारित्ति व गणिव्वओ वत्ति । पडिबंधस्स न हेऊ नियमा एयस्स गुणहीणो १२३**

स्वकीयो जनः 'स्वजनः' । इतिशब्दस्तद्भेदसूचकः । वाशब्दः समुच्चये । ह्रस्वत्वं तु प्राकृतशैल्या । 'शिष्यः' विनेयः । इतिवाशब्दौ पूर्ववत् । 'उपकारी' भक्तपानदानादिना पूर्वमुपकृतवान् । इतिवाशब्दावुक्तवत् । 'गणिव्वओ वत्ति' एकगच्छीय एकगच्छवासी । वेतिशब्दौ पूर्ववदेव । एतेषामेकैकोऽपि प्रायः प्रतिबन्धकारणं संभवति । 'नियमात्' निश्चयेन 'एतस्य' गुणरागिणः पुनः प्रतिबन्धस्य नैव 'हेतुः' निमित्तमेकोऽपि भवतीति । किंविशिष्टः सन् ? इत्याह—'गुणहीनः' निर्गुण इति । उक्तं च—"सीसो सज्झिलओ वा गणिव्वओ वा न सोगइं निंति । जे तत्थ नाणदंसणचरणा ते सोगई मग्गो ॥ १ ॥ " तथा—"परलोकविरुद्धानि कुर्वाणं दूरतस्त्यजेत् । आत्मानं योऽभिसंधत्ते सोऽन्यस्मै स्यात्कथं हितः ? ॥ १ ॥ " इति गाथार्थः ॥ १२३ ॥

अथ चारित्रिणा तेषां स्वजनादीनां किं विधेयम् ? इत्याह—

**करुणावसेण नवरं अणुसासइ तंपि सुद्धमग्गंमि । अच्चंताजोग्गं पुण अरत्तदुट्ठो उवेहेइ ॥ १२४ ॥**

करुणा परदुःखनिवारणबुद्धिः । उक्तं च—"परहितचिन्ताः मैत्री परदुःखविनाशिनी तथा करुणा । परसुखतुष्टिर्मुदिता परदोषोपेक्षणमुपेक्षा ॥ १ ॥ " तद्वशेन तद्रसिकतया, 'नवरं' केवलं रागद्वेषपरिहारेण 'अनुशास्ति' शिक्षयति 'तमपि' स्वजनादिकं, अपिशब्दात्तदितरमपि । क्व ? इत्याह—'शुद्धमार्गे' यथावस्थितमोक्षाध्वविषये । तद्यथा—"किं नारकतिर्यङ्नरविबुधगतिविचित्रयोनिभेदेषु । बत! संसरन्न सततं निर्विण्णो दुःखनिलयेषु ॥ १ ॥ येन प्रमादमुद्धतमाश्रित्य महाधिहेतुमस्खलितम् । संत्यज्य धर्मचिन्तां रतस्त्वमार्येतराचरणे ॥ २ ॥ यन्न प्रयान्ति पुरुषाः स्वर्गं यच्च प्रयान्ति विनिपातम् । तत्र निमित्तमनार्यः प्रमाद इति निश्चितमिदं मे ॥ ३ ॥ सइ सासयम्मि थामे तस्सोवाए य परममुणिभणिए । एगस्स साहए सुपुरिसाण जत्तो तहिं जुत्तो ॥ ४ ॥ " इत्यादिविविधवाचोयुक्तिभिरुत्पादितसंवेगं तं शुद्धधर्मे प्रवर्त्तयति ज्ञापनीयश्चेदसौ स्यात् । 'अत्यन्तायोग्यं' बाढमप्रज्ञापनीयं पुनस्तं 'अरक्तद्विष्टः' रागद्वेषरहितः 'उपेक्षते' अवधीरयति "उपेक्षा निर्गुणेषु" इति वाक्यमनुसृत्य । इति गाथार्थः ॥ १२४ ॥

गुणानुरागस्यैव फलमाह—

**उत्तमगुणाणुराया कालाइदोसओ अपत्ताविं । गुणसंपया परत्थवि न दुलहा होइ भव्वाणं ॥ १२५ ॥**

उत्तमा उत्कृष्टाः, गुणाः ज्ञानादयः, तेष्वनुरागः प्रीतिप्रकर्षः, तस्माद्धेतोः, कालो दुःषमारूपः, आदिशब्दात्संहननसहायाभावौ त एव दोषा दूषणानि, विघ्नकारित्वात् , ततः 'अप्राप्तापि' आस्तां तावत्प्राप्तेत्यपेरर्थः । 'गुणसंपत्' परिपूर्णधर्मसाधनसामग्री वर्त्तमानजन्मनीति गम्यते । 'परत्रेऽपि' भाविभवे, अपिः संभावने संभाव्यते । एतच्चैव 'दुर्लभा' दुरापा भवति 'भव्यानां' मुक्तिगमनयोग्यानाम् । इति गाथार्थः ॥ १२५ ॥

उक्तं गुणरागरूपं षष्ठं भावसाधुलिङ्गम् , अधुना गुर्वाज्ञाराधनरूपं सप्तममाह—

**गुरुपयसेवानिरओ गुरुआणाराहणंमि तल्लिच्छो । चरणभरधरणसत्तो होइ जई नन्नहा नियमा ॥१२६॥**

अत्र कश्चिदाह—पूर्वाचार्यैश्चारित्रिणो लिङ्गषट्कमेवोक्तम् । यतोऽवाचि—"मग्गणुसारी सद्धो पन्नवणिज्जो कियावरो चेव । गुणरागी सक्कारंभसंगओ तह य चारित्ती ॥ १ ॥ " तत्कुत एतत्सप्तमं लिङ्गम् ? इत्युच्यते, भणितमेवोपदेशपदशास्त्रे लिङ्गभणनानन्तरम्—"एयं च अत्थि लक्खणमिमस्स नीसेसमेव धन्नस्स । तह गुरुआणासंपाडणं च गमगं

इदं लिङ्गम् ॥ १ ॥" इत्यलं विस्तरेण । प्रस्तुतव्याख्यानमुच्यते—गुरव उक्तस्वरूपास्तेषां पदानि चरणास्तेषां सेवा सम्यगाराधनम्, न पुनरासन्नवर्त्तित्वमात्रम् । यतः सूत्रम्—"गुरुमूलेवि वसंता अणुकूला जे न हुंति उ गुरूणं । एएसिं तु पयाणं दूरं दूरेण ते हुंति ॥ १ ॥" तस्यां निश्चयेन रतो निरतो नैहिकफलार्थमेव, न च क्वचिन्निपुरोक्तिभिर्निर्भर्त्सितोऽपि गुरुं जिहासति, केवलं गुरुषु बहुमानमेव विधत्ते । यथा—"धन्यस्योपरि निपतत्यहितसमाचरणधर्मनिर्वापी । गुरुवदनमलयनिसृतो वचनरसश्चन्दनस्पर्शः ॥ १ ॥" तथा—"लज्जादयासंजमबंभचेरं कल्लाणभागिस्स विसोहिठाणं । जे मे गुरु सययं अणुसासयंति तेहं गुरू सययं पूययामि ॥ १ ॥" तथा 'गुर्वाज्ञाराधने' गुर्वादेशसंपादने 'तल्लिप्सुः' तमेवादेशं लब्धुमिच्छुर्गुरोरादेशं प्रतीक्षमाणः समीपवर्त्त्येव स्यात् । इत्थंभूतश्चरणभरधरणे चारित्रभारोद्वहने शक्तः समर्थो भवति 'यतिः' सुविहितो, 'नान्यथा' भणितविपरीतो 'नियमात्' निश्चयेन । इति गाथार्थः ॥ १२६ ॥

कथं पुनरेवं (य) निश्चयोऽवसीयते ? इत्याह—

**सव्वगुणमूलभूओ भणिओ आयारपढमसुत्ते जं । गुरुकुलवासोवस्सं वसेज्ज तो तत्थ चरणत्थी ॥१२७॥**

सर्वे गुणा अष्टादशशीलाङ्गसहस्ररूपास्तेषां मूलभूतः प्रथमकारणं 'भणितः' उक्तः, आचारः प्रथममङ्गं, तस्य प्रथमसूत्रे—"सुयं मे आउसंतेणं भगवया एवमक्खायं" इति वाचना प्रकारे । यद्यस्मात् 'गुरुकुलवासः' गुरुपदच्छायासेवनम् । अयमत्र भावार्थः—सुधर्मस्वामी जम्बूस्वामिने कथयति स्म । श्रुतं मया वसता भगवतः समीपे तिष्ठता वक्ष्यमाणमर्थपदमिति । कः पुनरस्य कथनस्य भावार्थः ? सर्वेण धर्मार्थिना गुरुसेवा विधेयेति । तत्र व्याख्यानं यस्मादेवं तस्मादवश्यं 'वसेत्' तिष्ठेत् 'तत्र' गुरुकुले 'चरणार्थी' चारित्रकामी । तथा च गच्छे वसतो गुणः—"जइवि य निग्गयभावो तहावि रक्खिज्जई स अन्नेहिं । वंसकडिल्ले छिन्नोवि वेणुओ पावए न मही (हिं) ॥ १ ॥" इति गाथार्थः ॥ १२७ ॥

नन्वागमे यतेराहारशुद्धिरेव मुख्यश्चारित्रशुद्धिहेतुरुद्घुष्यते । यत उक्तम्—पिंडं असोहयंतो अचरित्ती एत्थ संसओ नत्थि । चारित्तंमि असंते निरत्थिया चेव पव्वज्जा ॥ १ ॥" पिण्डविशुद्धिश्च बहूनां मध्ये वसताऽतिदुष्करैवेत्येकाकिनाऽपि भूत्वा सैव विधेया, किं ज्ञानादिलाभेन कार्यं ? मूलभूतं चारित्रमेव पालनीयं, मूले सत्येव लाभचिन्ता ज्यायसी, इति पराभिप्रायमाशङ्क्याह—

**एयस्स परिच्चाया सुद्धुंछाइवि न सुंदरं भणियं । कम्माइवि परिसुद्धं गुरुआणावत्तिणो विंति ॥१२८॥**

'एतस्य' गुरुकुलवासस्य 'परित्यागात्' सर्वतो मोचनेन 'शुद्धोञ्छादि' शुद्धभैक्षोपधिप्रमुखं न 'सुन्दरं' शोभनं भणितमागमज्ञैरिति गम्यते । यतस्तदुक्तिः—"सुद्धुंछाइसु जत्तो गुरुकुलचागाइणेह विन्नेओ । सवरससरक्खपिच्छत्थघायपायच्छिवणतुल्लो ॥ १ ॥" अस्य व्याख्या—शुद्धोञ्छं निर्दोषभैक्षम्, आदिशब्दात्कलहममत्वपरिहारे च यत्न उद्यमः, गुरुकुलत्यागेन, आदिशब्दात्सूत्रार्थहान्या ग्लानादित्यागेन चेह जिनमते विज्ञेयो बोद्धव्यः । कथंभूतः ? इत्याह—शबरराजस्य सरजस्कस्य पिच्छार्थं घाते पादास्पर्शनतुल्यश्चरणासंघट्टनादेशकल्प इति । संविधानकसंप्रदायश्चेत्याह—

क्वचित्संनिवेशे शबराभिधानः सरजस्कभक्तो राजा बभूव । तस्यैकदा दर्शनार्थमुपरि धार्यमाणमयूरपतत्रछत्रो गुरुराजगाम । कृतसम्मानस्योपनिविष्टस्य च राजप्रियतमा तदातपत्रं चञ्चच्चाकचिक्याऽनेकचन्द्रकराजिराजितमवलोक्य कुतूहलातिरेकतस्तं प्रार्थयितुमारेभे । तत्र च देशे मयूराभावाद्दुर्लभानि मयूरपिच्छानीत्यसावदित्सन्नुत्थाय स्वाश्रयमगमत् । ततो राज्ञी कृताभोजननिश्चया तदानयनाय राजानं प्रोत्साहयाञ्चकार । राज्ञाऽपि यदा पुनः पुनः प्रार्थितोऽपि न ददाति गुरुः, तदा दुर्वारप्रेमग्रहमोहितेन हठादेव गृहीत्वानयत तानि, इत्यादिष्टाः पदातयः प्रत्यूचुः—नासौ जीवन्नर्पयति, प्रहारैश्चोपतिष्ठते । ततो राजोवाच दूरस्था एव तं वाणैरचेष्टं कृत्वा गृह्णीत, किं तु तच्छरीराच्छरानुत्पाटयन्तः पादेन स्पर्शनं मा कुरुत, यतो गुरोरवज्ञा महते पातकाय संपद्यत इति ॥

यादृशोऽस्य शबरराजस्य गुरोर्मारणं कारयतः पादस्पर्शं च वारयतो विवेकस्तादृग्गुरुकुलत्यागिनः शुद्धोञ्छादिलालसस्य साधोरिति भावः । तथा कर्मशब्देनाधाकर्मोच्यते, आदिशब्देन सकलोद्गमोत्पादनैषणादोषपरिग्रहः । तत्रोद्गमदोषाः—"आहाकम्मुद्देसिय पूईकम्मे य मीसजाए य । ठवणा पाहुडियाए पाहुयरकीयपामिच्चे ॥ १ ॥ परियट्टिए अभिहडे उब्भिन्ने मालोहडेय । अच्छेज्जे अणिसट्ठे अज्झोयरए य सोलसमे ॥ २ ॥" उत्पादनादोषाः—"धाई दूइ निमित्ते आजीव वणीमगे तिगिच्छा य । कोहे माणे माया लोभे य हवंति दस एए ॥ १ ॥ पुव्विं पच्छा संथव विज्जा मंते य चुन्न जोगे य । उप्पायणाए दोसा सोलसमो मूलकम्मे य ॥ २ ॥" एषणादोषाः—"संकियमक्खियनिक्खित्तपिहियसाहरियदायगुम्मीसो । अपरिणयलित्तछड्डिय एसणदोसा दस हवंति ॥ १ ॥" एतद्दोषदुष्टमप्याहारादि 'परिशुद्धं' निर्दोषमेव, अपिशब्दस्यावधारणार्थस्येह योगात् 'गुर्वाज्ञावर्त्तिनः' आराध्यादेशविधायिनो, गच्छवासिन इति हृदयम् । 'ब्रुवते' प्रतिपादयन्त्यागमतत्त्वविदः । इति गाथार्थः ॥ १२८ ॥

अत एव गुर्वाज्ञाकारिणं विशेषतः स्तुवन्नाह—

**ता धन्नो गुरुआणं न मुयइ नाणाइगुणगणनिहा(या)णं। सुपसन्नमणो सययं कयन्नुयं मणसि भाविंतो १२९**

यस्माद्गुर्वाज्ञा गरीयसे गुणाय, 'तस्मात्' हेतोर्धन्य एव गुर्वाज्ञां 'न मुञ्चति' नोज्झति । किंविशिष्टाम् ? ज्ञानादिगुणगणस्य निदानं कारणम् । उक्तं च—"नाणस्स होइ भागी थिरयरओ दंसणे चरित्ते य । धन्ना आवकहाए गुरुकुलवासं न मुञ्चन्ति ॥ १ ॥" सुष्ठु अतिशयेन प्रसन्नमना निर्मलमानसो निष्ठुरमपि शिक्षितो न कुप्यति, न कलुषयत्यन्तःकरणम् । केवलम्—"जं मे बुद्धाणुसासंति सीएण फरुसेण वा । मम लाभोत्ति पेहाए पयओ तं पडिसुणे ॥ १ ॥" कथम् ? 'सततं' अनवरतं 'कृतज्ञताम्' उपकाराविस्मृतिरूपां 'मनसि' हृदये 'भावयन्' अवस्थापयन् । तद्यथा—"टोलो व लोढुलंतो अहयं विन्नाणनाणनिलएण । देवो व वंदणिज्जो कओम्हि गुरुसुत्तहारेण ॥ १ ॥" इत्थंभूत एव धन्यो भवति, धर्मधनार्हत्वात् । इति गाथार्थः ॥ १२९ ॥

आह—किं योऽपि सोऽपि गुरुर्गुणसंपत्तये सेवनीय आहोश्वित्कश्चिद्विशिष्ट एव ? इति प्रश्ने प्रतिवचनमाह—

**गुणवं च इमो सुत्ते जहत्थगुरुसद्दभायणं इट्ठो । गुणसंपया दरिद्दो जहुत्तफलदायगो न मओ ॥१३०॥**

चशब्दस्यावधारणार्थत्वात् 'गुणवानेव' गुणगणालङ्कृत एव 'अयं' इति गुरुः 'सूत्रे' सिद्धान्ते, यथार्थः सान्वयो यो गुरुशब्दस्तस्य भाजनमाधारः 'इष्टः' अभिप्रेतः । तथा हि गुरुशब्दस्य यथावस्थितं शास्त्रार्थं गृणातीति गुरुः, इत्यन्वयः ।

---

१ अन्यत्र "मणिनिहाणं" इत्यस्ति । २ अन्यत्र "टोलु व्व डुलडुलंतो" इत्यस्ति ॥

स च संविग्नस्यैव युज्यते, अतः संविग्न एव गुणवान्, नान्यः । तस्य च गुणाः प्राधान्येन—"वयछक्कं कायछक्कं अकप्पो गिहिभायणं । पलियंकनिसिज्जाय सिणाणं सोहवज्जणं ॥ १ ॥ एभिर्विना गुरुत्वाभाव एव, तन्तुभिर्विना पटाभाववत् । शेषास्तु—"पडिरूवो तेयस्सी" इत्यादयो देशकुलजात्यादयोऽन्येऽपि गणिसंपदादयो विशेषगुणाः कादाचित्काः, पटस्य रक्तत्वादिवत् । तत्रेह प्रधानगुणैर्युक्तो गुणवानभिप्रेतः, कार्यसाधकत्वात् । सत्सु तेषु शेषगुणसंप्रयोगोऽपि वरीयानेवेति । विपर्यये पुनः किं स्यात् ? इत्याह—'गुणसंपदा' सद्गुणविभूत्या करणभूतया 'दरिद्रः' दुर्गतो यथोक्तं गुरुसंप्रयोगे फलं, तस्य दायकः संपादयिता 'न मतो' नैव संमतो गीतार्थानाम् । अतो न निर्गुणो गुरुः सेवनीयः । इति गाथागर्भार्थः ॥१३०॥

ननु प्रमत्तेषु दुर्लभा सर्वगुणसंपत्, यतः कोऽपि कुतोऽपि केनापि गुणेन हीनोऽप्यन्येनाधिकः, इति तारतम्यभेदेनानेकधा गुरव उपलभ्यन्ते, तेषां सामाचार्योऽपि नानारूपा एवेति तेषु कं गुरुमाश्रयामः ? कं वा न ? इति दोलायमानमानसानामस्माकं किमुचितम् ? इति शिष्येण सप्रणयं पृष्टो गुरुराह—

**मूलगुणसंपउत्तो न दोसलवजोगओ इमो हेओ। महुरो वक्कमओ पुण पवत्तियव्वो जहुत्तम्मि ॥ १३१ ॥**

मूलगुणा महाव्रतानि व्रतषट्ककायषट्कादयो वाऽष्टादश, तैः सम्यक् सद्बोधप्रधानं प्रकर्षेणोद्यमातिशयेन युक्तोऽनुगतो 'मूलगुणसंप्रयुक्तः' गुरुरिति प्रस्तुतत्वान्नैव दोषलवः स्तोकदोषस्तद्योगात्तत्संबन्धात् 'अयं' गुरुः 'हेयः' परित्याज्यः । उक्तं चागमे—"जेयावि मंदेत्ति गुरुं विइत्ता डहरे इमे अप्पसुएत्ति नच्चा । हीलिंति मिच्छं पडिवज्जमाणा करेंति आसायण ते गुरूणं ॥ १ ॥ पगईए मंदावि हवंति एगे डहरावि य जे सुयबुद्धोववेया । आयारमंता गुणसुट्ठियप्पा जे हीलिया सिहिरिव भासकुज्जा ॥ २ ॥ जेयावि नागं डहरंति नच्चा आसायए से अहिया य होइ । एवायरियं पिहु हीलयंतो नियच्छई जाइपहं खु मंदे ॥ ३ ॥ गुरुगुणरहिओ य इहं दट्ठव्वो मूलगुणविउत्तो जो । न उ गुणमेत्तविहीणोत्ति चंडरुद्दो उदाहरणं ॥ ४ ॥" इत्याद्यागमवचनान्यनुसृत्य मूलगुणशुद्धो गुरुः सामाचारीनानात्वेऽपि न मोक्तव्यः । (कदाचित्) किंचित्प्रमादवांस्तु 'मधुरोपक्रमतः' इति तृतीयार्थे पञ्चमी । ततो 'मधुरोपक्रमेण' सुखदोपायेन प्रियवचनाञ्जलिप्रणाममपूर्वमनुपकृतपरहितरतैर्भवद्भिः सुष्ठु वयं मोचिता गृहवासपाशात् । तदिदानीमुत्तरोत्तरमार्गप्रवर्त्तनेन निस्तारयतास्माद्भीमभवकान्तारात्, इत्यादिप्रोत्साहनेन 'पुनः' भूयोऽपि प्रवर्त्तयितव्यो 'यथोक्ते' मार्गानुयायिन्यनुष्ठान इति शेषः । इति गाथार्थः ॥ १३१ ॥

किमित्येवमुपदिश्यते ? इत्याह—

**पत्तो सुसीससद्दो एव कुणंतेण पंथगेणावि । गाढप्पमाइणोवि हु सेलगसूरिस्स सीसेणं ॥ १३२ ॥**

'प्राप्तः' लब्धः सुशिष्य इति शब्दो विशेषणम्, 'एवं' गुरोरनुवृत्तिं कुर्वता 'पन्थकेन' प्रसिद्धसाधुना, अपिशब्दादन्यैरपि तथाविधैः । यतोऽभाणि—"सीएज्ज कयाइ गुरू तंपि सुसीसा सुनिउणमहुरेहिं । मग्गे ठवेंति पुणरवि जह सेलगपंथगो नायं ॥ १ ॥" तमेव विशिनष्टि—'गाढप्रमादिनोऽपि' अतिशयशैथिल्यवतोऽपि शैलकसूरेः शिष्येणेति व्यक्तमेवेति गाथाक्षरार्थः । भावार्थः कथानकगम्यः ॥ १३२ ॥

तच्चेदम्—

अत्थि सुरट्ठाविसए बारवती नाम पुरवरी रम्मा । कंचणमणिमयमंदिरपायारा धणयनिम्मविया ॥ १ ॥ तत्थ य हरि-

कुलनहयलहरिणंको अरिसमूहमयमहणो । कन्हो नामेण निवो हरि व्व विबुहप्पिओ आसी ॥ २ ॥ तत्थेव सत्थवाही थावच्चा नाम पायडाहेसि । कम्मवसाओ वालंमि नंदणे जायपइमरणा ॥ ३ ॥ सोयभरनिब्भराए तीए वालस्स नो कयं नामं । तो थावच्चापुत्तो सो विक्खाओ सयललोगे ॥ ४ ॥ कालेण कलाकुसलो तारुन्नं पाविओत्ति मायाए । परिणाविओ समं चिय बत्तीसमहेब्भकन्नाओ ॥ ५ ॥ ताहि समं सुहमसमं अणुहवमाणस्स विगयचिंतस्स । दोगुंदुगदेवस्स व समइक्कंतो वहू कालो ॥ ६ ॥ अह अन्नया कयाई विहरंतो समणसंघपरिकिन्नो । भयवं अरिठ्ठनेमी समागओ तीए नयरीए ॥ ७ ॥ रेवयगनगसगासे उज्जाणे नंदणंमि रमणीए । सुररइयसमोसरणे उवविठ्ठो देसणं काउं ॥ ८ ॥ तत्तो निउत्तपुरिसा नाऊणं बहलपुलयचिंचइओ । चलिओ भरहद्धवई वंदणहेउं जिणिंदस्स ॥ ९ ॥ चलिया तेण समाणं दसवि दसारा समुद्दविजयाई । तह चेव महावीरा पंचवि वलदेवपामोक्खा ॥ १० ॥ सोलसरायसहस्सा संचल्ला उग्गसेणपामोक्खा । इगवीससहस्सा तह वीराणं वीरसेणाई ॥११॥ दुद्दंतकुमाराणं सठ्ठिसहस्सा उ संवपमुहाणं । पज्जुन्नप्पमुहाओ कुमारकोडी उ अद्धुठ्ठ ॥ १२ ॥ छप्पन्नं च सहस्सा महसेणाईण वलवगाणंपि । अन्नोवि सेठ्ठिमाई नागरलोगो अणेगविहो ॥ १३ ॥ दट्ठुं कयसिंगारं एगमुहं पत्थियं नयरिलोगं । नियपडिहारं पुच्छइ थावच्चानंदणो एवं ॥ १४ ॥ कत्थ इमो संचल्लो कयसिंगारो जणो तुरियतुरियं । सो आह नेमिनाहस्स वंदणत्थंति नेमिसुयं ॥ १५ ॥ अह सोवि रहारूढो भत्तिब्भरनिब्भरो सह निवेण । वंदइ तिलोयनाहं सुणेइ धम्मं च एगग्गो ॥ १६ ॥ नाऊण असारत्तं भवस्स नीसेसदुक्खपभवस्स । मोक्खं च महासोक्खं सज्झं चारित्तधम्मस्स ॥ १७ ॥ संवेगभाविओ तो थावच्चानंदणो जिणं भणइ । आपुच्छिऊण जणणिं तुहंतिए पव्वइस्सामि ॥ १८ ॥ जुत्तमिणंति पवुत्ते जिणेण गंतूण मंदिरे जणणिं । विन्नवइ पायवडिओ अम्मो गिण्हामि पव्वज्जं ॥ १९ ॥ सावि हु सिणेहमूढा रुयमाणी भणइ दुक्करा सुठ्ठु । अन्नस्सवि पव्वज्जा विसेसओ तुज्झ सुहियस्स ॥ २० ॥ आसालग्गं जणणिं कह मुंचसि पुत्त ! निग्घिणो होउं । बत्तीसं भज्जाओ एयाओ विणयसज्जाओ ॥ २१ ॥ दाणोवभोगकज्जे पज्जत्तं कुलकमागयं रित्थं । पुव्वसुकएण पत्तं विलससु ता दाणधम्मरओ ॥ २२ ॥ वड्ढियकुलसंताणो वयपरिणामे करेज्ज हियइट्ठं । सो भणइ अणिच्चे जीवियंमि न हु एरिसं घडइ ॥ २३ ॥ अवि य—"अन्नह परिचिंतिज्जइ सहरिसकंडुज्जुएण हियएण । परिणमइ अन्नह च्चिय कज्जारंभो विहिवसेण ॥ १ ॥" एमाइउत्तिपडिउत्तिभावणा सुठ्ठु निच्छिओच्छाहं । कलिऊणं थावच्चा अणुमन्नइ तं अकामावि ॥ २४ ॥ गंतुं केसवमूलं कहेइ सयलंपि पुत्तवुत्तंतं । मग्गइ य रायचिंधे दिक्खामहिमाकरणहेउं ॥ २५ ॥ तुठ्ठो भणइ य कन्हो धन्नो सो जस्स निच्छओ धम्मे । ता चिट्ठ निव्वुया तं दिक्खामहिमं भलिस्सामि ॥ २६ ॥ गंतूण य तग्गेहं तीसे पुत्तं सयं भणइ कन्हो । भुंजसु वच्छ ! सुहाइं भिक्खाचरिया महादुक्खा ॥ २७ ॥ सो पडिभणइ महापहु ! भयाभिभूयाण केरिसं सोक्खं । ता सव्वभयपणासी धम्मो च्चिय जुज्जए काउं ॥ २८ ॥ रायाह—महबाहुच्छायाए वच्छ ! वसंतस्स ते भयं नत्थि । अह अत्थि ता निवेयसु जेण निवारेमि तं. तुरियं ॥ २९ ॥ इयरेण वुत्तं—जइ एवं ता इंतं जरं च मच्चुं च मे निवारेहि । जेण सुनिव्वुयहियओ भोगसुहं सामि ! माणेमि ॥ ३० ॥ भणइ नरिंदो सुंदर ! दुव्वारमिमं दुगंपि जियलोए । सुरनाहोवि न एए वारइ अम्हारिसो दूरे ॥ ३१ ॥ जओ—कम्मवसेण जियाणं जरमरणाइं हवंति संसारे । इयरो भणइ अओ च्चिय कम्माइं निहंतुमिच्छामि ॥ ३२ ॥ नाऊण निच्छयं से नरनाहो भणइ साहु साहुत्ति । पव्वयसु धीर ! एवं पुज्जंतु मणोरहा तुज्झ ॥ ३३ ॥ कारेइ केसवो तो उग्घोसणयं पुरीए सव्वाए । संसारभउव्विग्गो थावच्चानंदणो धन्नो ॥ ३४ ॥ पव्वयइ मोक्खकामी जइ ता अन्नोवि कोवि पव्वयइ । ता अणुमन्नइ कन्हो वहइ य तत्तिं कुडुंबस्स ॥ ३५ ॥ सोऊण घोसणं तं सहस्समेगं उवट्ठियं तत्थ । रायाईण सुयाणं थावच्चापुत्तनेहेण ॥ ३६ ॥ निक्खमणमहामहिमं राया तेसिं करेइ सव्वेसिं । इय थावच्चापुत्तो सहस्ससहिओवि निक्खंतो ॥ ३७ ॥ जाओ चोद्दसपुव्वी जिणेण सो चेव तस्स परिवारो । दिन्नो तो उग्गतवो विहरइ महिमंडलं एसो ॥ ३८ ॥ विहरंतो संपत्तो कयाइ सेलगपुरंमि सो भयवं । पंचसयमंतिसहियं सेलगरायं कुणइ सड्ढं ॥ ३९ ॥ तत्तो य विहरमाणो पत्तो सोगंधियाए नयरीए । तत्थवि पहाणसेट्ठिं सुदंसणं सावगं कुणइ ॥ ४० ॥ सो पुण सुयपरिव्वायगधम्मे पुव्वं किरासि अइभत्तो । सोऊण सावगं तं समागओ तो सुओ तत्थ ॥ ४१ ॥ पत्तो सुदंसणगिहं दंसणमालिन्नभीरुणा तेण । नाभुट्ठिओ न पणओ न पेहिओ नेव संलत्तो ॥ ४२ ॥ चिंतइ तओ सुओवि हु अरिहइ एसो न ताव उवएसं । जाव न एयस्स गुरू पराइओ एयपच्चक्खं ॥ ४३ ॥ तो भणइ भो सुदंसण ! पुव्वं तं मज्झ सासणे आसि । संपइ कस्स समीवे गहिओ अन्नारिसो धम्मो ॥ ४४ ॥ तो कयअब्भुट्ठाणो पणामपुव्वं सिरत्थकरकमलो । सुमरंतो गुरुनामं सुदंसणो भणइ एयं तु ॥ ४५ ॥ सिरिथावच्चापुत्तो सीसो तेलोक्कनाहनेमिस्स । नीलासोउज्जाणे विहरइ सो मज्झ धम्मगुरू ॥ ४६ ॥ भणइ सुओ तं मज्झवि दंसेहि
७ जेण तस्सीसो । अहवा पराजिणित्ता करेमि तं चेव नियसीसं ॥ ४७ ॥ चिंतइ सुदंसणो तो अमच्छरी एस

१ इतः परम् अन्यत्र तु "भुवणनाहस्स नेमिनाहस्स नमणत्थं" इत्यस्ति । २ "ते निव्वुयं" इत्यपि ॥

 

धम्मकामो य । गुरुवयणामयसित्तो लहिही बोहिं न संदेहो ॥ ४८ ॥ इय तं घेत्तूण गओ गुरुमूलं पुच्छई सुओ तत्थ । कुडिलाइं पसिणाइं सद्दच्छलगहणकज्जेसु ॥ ४९ ॥ सरिसवया तह मासा तुम्हं भक्खाउ किं कुलत्थी वा । धन्नराईं एमिं दो दो अत्था उ पसिणाणं ॥ ५० ॥ नाऊण य तब्भावं वागरियाइं गुरूहि तह ताइं । सव्वन्नुनि मणे जह सुयस्स संपन्नओ जाओ ॥ ५१ ॥ पसिणाणमुत्तराइं न एत्थ वित्थरभयाउ भणियाइं । जाणिउकामेण दढं नायएसु निरूवियव्वाइं ॥ ५२ ॥ सोऊण सुओ धम्मं संविग्गो सूरिपायमूलंमि । सीससहस्सेण समं पव्वइओ सुद्धपरिणामो ॥ ५३ ॥ जाओ चोद्दसपुव्वी गुरूहिं दिन्नंमि पुव्वपरिवारो । विहरिउमारद्धो भूमिमंडले भवकयबोहो ॥ ५४ ॥ अह थावच्चापुत्तो सूरी सेलम्मि पुंडरीयंमि । दोमासकयाणसणो नेव्वाणमणुत्तरं पत्तो ॥ ५५ ॥ इयरोवि विहरमाणो सेलगपुरमागओ नरिंदस्स । दिक्खावसरोत्ति ठिओ सुभूमिभागंमि उज्जाणे ॥ ५६ ॥ बुद्धो सेलगराया रज्जं दाऊण मड्डुगसुयस्स । पंचहि मंतिसएहिं पंथगपमुहेहिं परियरिओ ॥ ५७ ॥ निक्खंतो सुयविहिणा गुरुभाउयसुयमुणिंदपयमूले । एगारसअंगाइं अहिज्जिओ वज्जियावज्जो ॥ ५८ ॥ पंथगपमुहाण तओ पंचण्हसयाण नायगो ठविओ । सुयमुणिवरेण विहिणा सेलगसूरी महासत्तो ॥ ५९ ॥ सुयसूरीवि महप्पा समए आहारवज्जणं काउं । गिरिपुंडरीयसिहरे सहस्ससहिओ सिवं पत्तो ॥ ६० ॥ अह सेलगरायरिसी अणुचियभत्ताइभोगदोसेण । दाहजराईतविओ समागओ सेलगपुरंमि ॥ ६१ ॥ उज्जाणंमि पसत्थे सुभूमिभागंमि तं समोसरियं । सोऊण हट्ठतुट्ठो विणिग्गओ मड्डुगो राया ॥ ६२ ॥ कयवंदणाइकिच्चो सरीरवत्तं वियाणिउं गुरुणो । विन्नवइ एहिं भंते ! मम गेहे जाणसालासु ॥ ६३ ॥ भत्तोसहाइएहिं अहापवत्तेहि तत्थ तुम्हाणं । कारेमि जेण किरियं धम्मसरीरस्स रक्खट्ठा ॥ ६४ ॥ पडिवन्नमिणं गुरुणा पारद्धा तत्थ उत्तमा किरिया । निद्धमहुराइएहिं वियडेण य वेज्जवयणाओ ॥ ६५ ॥ वेज्जाण कुसलयाए पच्छोसहपाणगाइसुलभा । थेवदियहेहि एसो जाओ निरुओ य बलवं च ॥ ६६ ॥ नवरं निद्धुन्हाइआहारे पाणगे य अइगिद्धो । सुहसीलयं पवन्नो नेच्छइ ठाणंतरविहारं ॥ ६७ ॥ बहुसोवि भणिज्जंतो विरमइ नो जाव सो पमायाओ । ताहे पंथगवज्जा मुणिणो मंतेंति एगत्थ ॥ ६८ ॥ कम्माइँ नूण घणचिक्कणाइ कुडिलाइँ वज्जसाराइं । नाणड्ढयंपि पुरिसं पंथाओ उप्पहं नेंति ॥ ६९ ॥ मोत्तूण रायरिद्धिं मोक्खत्थी ताव एस पव्वइओ । संपइ अइप्पमाया विम्हारियपओयणो जाओ ॥ ७० ॥ काले न देइ सुत्तं अत्थं न कहेइ पुच्छमाणाणं । आवस्सगाइतत्तिं मोत्तुं बहुमन्नए निद्दं ॥ ७१ ॥ उवगारी दढमेसो अम्हाणं धम्मचरणहेउत्ता । मोत्तुं घेत्तुं च इमं जुत्तंति फुडं न याणामो ॥ ७२ ॥ अहवा किं अम्हाणं कारणरहिएण नीयवासेण । एयं पंथगसाहुं वेयावच्चे निजुंजेमो ॥ ७३ ॥ आपुच्छिऊण सूरिं विहरामो उज्जया वयं सव्वे । कालहरणंपि कीरइ जा वेयइ एस अप्पाणं ॥ ७४ ॥ सामत्थिऊण एवं पंथगसाहुं ठवित्तु गुरुपासे । गुरुसम्मएण सव्वे अन्नत्थ सुहं पविहरंति ॥ ७५ ॥ पंथगमुणीवि गुरुणो वेयावच्चं अखंडियं कुणइ । भत्तिबहुमाणसारं कुणइ अणूणं च नियकिरियं ॥ ७६ ॥ कत्तियचाउम्मासे सूरी भोत्तूण निद्धमहुराइं । पाऊण मज्जमहियं सुत्तो नीसट्ठसव्वंगो ॥ ७७ ॥ आवस्सगं कुणंतो पंथगसाहूवि खामणनिमित्तं । सीसेण तस्स पाए घट्टेइ विणयनयनिऊणो ॥ ७८ ॥ तो कुविओ रायरिसी जंपइ को एस अज्ज निलज्जो । पाए आघट्टंतो निद्दाविग्घे मह पयट्टो ॥ ७९ ॥ रुट्ठं दट्ठूण गुरुं संविग्गो पंथगो भणइ एवं । चाउम्मासियखामणकए मए दुमिया तुब्भे ॥ ८० ॥ ता एगं अवराहं खमह न काहामि एरिसं बीयं । हुंति खमासील च्चिय उत्तमपुरिसा जओ लोए ॥ ८१ ॥ इय पंथगमहुरगिरं आयन्नंतस्स तस्स सूरिस्स । सूरुग्गमे तमं पिव अन्नाणं दूरमोसरियं ॥ ८२ ॥ परिनिंदिऊण सुइरं अप्पाणं जायसंजमुज्जोओ । खामेइ पंथगं पिहु पुणो पुणो सुद्धपरिणामो ॥ ८३ ॥ दुइयदिणे रायाणं आपुच्छिय दोत्ति सेलगपुराओ । निक्खंता पारद्धा उग्गविहारेण विहरेउं ॥ ८४ ॥ अवगयतव्वुत्तंता संपत्ता सेसमंतिमुणिणोवि । विहरिय चिरं सुविहिणा आरूढा पुंडरीयगिरिं ॥ ८५ ॥ थावच्चापुत्तो इव काउं संलेहणं विहुयकम्मा उप्पन्नविमलनाणा सिद्धा परिनिव्वुया सव्वे ॥ ८६ ॥ इय मूलगुणविसुद्धो मोत्तव्वो नियगुरू न गीएहिं । सम्ममणुवत्तियव्वो सुसाहुणा पंथगेणेव ॥ ८७ ॥

॥ शैलकराजर्षिकथानकं समाप्तम् ॥

एवं कुर्वतः साधोर्गुणमाह—

**एवं गुरुबहुमाणो कयन्नुया सयलगच्छगुणवुड्ढी । अणवत्थापरिहारो हुंति गुणा एवमाईया ॥ १३३ ॥**

'एवं' गुरुममुञ्चता सन्मार्गोद्यमं च कारयता यतिना 'गुरुबहुमानः' मानसप्रीत्यतिशयः कृतो भवति । तथाहि—द्विविधो गुरुः, सामान्यगुरुः परमगुरुश्च । तत्र सामान्यगुरुरनन्तरो धर्माचार्यादिः । परंपरः पूर्वपूर्वतरपूर्वतमादिचिन्तयाऽनेकविधो यावत् सुधर्मस्वाम्यादिः । परमगुरुर्भगवांस्तीर्थकरः । ततश्चानन्तरगुरुबहुमानेन येनासौ स्थापितस्तस्मिन् बहुमानकृतो भवति । तद्बहुमानेन पूर्वतरे यावदावलिकादिभूते गणधरे, ततस्तदाराध्ये भगवति परमगुरुतीर्थाधिनायके । अत एवोक्तं परमगुरुणा—"जे गुरुं मन्नए से ममं मन्नए जे ममं मन्नए से गुरुं मन्नए" । इत्येवमनेकभेदगुरुबहुमानकृतो भवतीति ।

यथा कृतज्ञता चाराधिता भवति । प्रधानश्चायं पुरुषस्य गुणो लोकेऽपि गीयते । यदुक्तम्—"दो पुरिसे धरउ धरा अहवा दोहिंपि धारिया वसुहा । उवयारे जस्स मई उवयरियं जो न पम्हुसइ ॥ १ ॥" लोकोत्तरेऽप्येकत्रिंशतिगुणमध्ये पठित एवेति । तथा सकलगच्छस्य गुणानां वृद्धिराधिक्यं कृतं भवति गुरुममुञ्चता । तथा हि—सम्यगाज्ञावर्त्तिनो गच्छस्य गुरुर्ज्ञानादिगुणान् वर्द्धयत्येव । यदि पुनस्ते शिष्याः—"वाइया संगहिया य भत्तपाणेहिं पोसिया । जायपक्खा जहा हंसा पक्कमंति दिसोदिसं ॥ १ ॥" ततस्तान् खलुकप्रायानवबुध्य न केवलं न शिक्षयति गुरुः तत्परित्यागं च विधत्ते, कालिकाचार्यवदिति । तथाऽनवस्था मर्यादाहानिस्तस्याः परिहारकृतो भवति गुरुममुञ्चतेति । अयमभिप्रायः—य एकं गुरुमल्पदोषमपि मुञ्चति, तमन्येऽपि न संगृह्णन्ति, सूक्ष्मदोषाणां परिहर्तुमशक्यत्वात् । संगृहीतोऽपि न स्थिरो भवति, अत एकाकित्वमालम्बते । तं च स्वेच्छाचारसुखितमालोक्यान्योऽप्यन्योऽपि तदेवाङ्गीकरोति । एवंप्रकारानवस्थापरिहृता भवति गुरुसेवकेनेति । 'भवन्ति' जायन्ते 'गुणा एवमादयः' अन्येऽपि गुरुग्लानबालवृद्धादीनां विनयवैयावृत्त्यकरणादयः सूत्रार्थागमस्मारणादयोऽपि भूयांसः । इति गाथार्थः ॥ १३३ ॥

एवमकरणे पुनः किं स्यात् ? इत्याह—

**इहरा वुत्तगुणाणं विवज्जओ तह य अत्तउक्करिसो । अप्पच्चओ जणाणं बोहिविघायाइणो दोसा ॥ १३४ ॥**

'इतरथा' इतरगुरुपरित्यागरूपेण 'उक्तगुणानां' गुरुबहुमानादीनां 'विपर्ययः' अभावोऽबहुमानाकृतज्ञतादिदोषसद्भावो वा स्यात् । तथा 'आत्मोत्कर्षश्च' आत्मनि सौष्ठवाभिमानश्चानर्थपरंपराकारणं गुरुकुलवासत्यागिनः स्यात् । तथा 'अप्रत्ययः' अविश्वासश्च 'जनानां' लोकानां साधुविषये स्यात् । यदुत परस्परविभिन्नानामन्योन्यानुष्ठानदूषकाणामेतेषां न ज्ञायते कोऽपि सत्यवाद्यलीकवादी वेति । ततश्च को दोष ? इति चेदुच्यते, बोधिविघातः प्रेत्यजिनधर्मप्राप्त्यभावस्तेषां व्यलीकभाजां, तन्निमित्तभूतस्य यतेरपि, आदिशब्दाद्भावपातश्च । सम्यग्दर्शनाभिमुखानां चारित्राभिमुखानां च स्यात् । एते 'दोषाः' दूषणानि गुरुत्यागकारिणां भवन्ति । इति गाथार्थः ॥ १३४ ॥

ननु पूर्वं क्रियास्वप्रमादः चारित्रिणो लिङ्गमुक्तम्, इदानीं तु प्रमादवानपि गुरुश्चारित्रवानेवेति न मोक्तव्य इत्युच्यते तत्कथं न पूर्वापरविरोधः ? सत्यम्, अप्रमादश्चारित्रिणो लिङ्गं तदविनाभावित्वेनोक्तं, वह्नेर्धूमवत् । दृश्यते च क्वापि निर्दग्धेन्धनोऽवष्टब्धो वा धूमं विना वह्निः । एवं प्रमादिनोऽपि चारित्रमित्यत एवाह—

**वकुसकुसीला तित्थं दोसलवा तेसु नियमसंभविणो।जइ तेहिं वज्जणिज्जो अवज्जणिज्जो तओ नत्थि॥१३५॥**

यदि वेह पञ्चविधा यतयः—पुलाकाः, बकुशाः, कुशीलाः, निर्ग्रन्थाः, स्नातकाश्च । तत्र नियमेनाप्रमादिनो निर्ग्रन्थाः स्नातकाश्च, किं तु ते कदाचिदेव श्रेणिमस्तकारोहणे केवलज्ञानोत्पत्तौ च भवन्तीति न तीर्थप्रवाहहेतवः । पुलाकोऽपि कदाचिदेव लब्धिसद्भावे संभवतीति चेतस्याधायाह—"बकुसकुसीला" गाहा । तत्र बकुशाः शरीरोपकरणविभूषाकारिणः । यदाह—"उवगरणदेहचोक्खा रिद्धीजसगारवा सिया निच्चं । बहुसबलछेयजुत्ता निग्गंथा बाउसा भणिया ॥ १ ॥" कुशीलाः सातिचारज्ञानादिगुणाः । यदाह—"आसेवणा कसाए दुहा कुसीलो दुहावि पंचविहो । नाणे दंसण चरणे तवे य अह सुहुमए चेव ॥ १ ॥ इह नाणाइकुसीलो उवजीवं होइ नाणमाईणि । अह सुहमो पुण तुस्सं एस तवस्सित्ति संसाए ॥ २ ॥" एत एव सर्वतीर्थकृतां तीर्थसन्तानकारिणः संभवन्ति, अपरविकल्पानामभावात् । ततः किम् ? इत्याह—'दोषलवाः' सूक्ष्मदोषाः 'तेषु' बकुशकुशीलेषु नियमसंभविनः । यतस्तेषां द्वे गुणस्थानके प्रमत्ताप्रमत्ताख्येऽन्तर्मुहूर्त्तकालावस्थायिनी । ततो यदा प्रमत्तगुणस्थानके वर्त्तते तदा प्रमाद्यपि चारित्रवानेव, यावत्सप्तमप्रायश्चित्तार्हापराधम् । ततः परमचारित्रः स्यात् । उक्तं च—"छेयस्स जाव दाणं ता वयमेगंपि नो अइक्कमइ । एगं अइक्कमंतो अइक्कमे पंचमूलेण ॥ १ ॥" अत एव पार्श्वस्थादीनामपि केषांचिच्चारित्रमिष्यते । यतोऽभाणि—"पासत्थाईयाणं अब्भुट्ठत्ताण जेसि पच्छित्तं । मूलाईयं भणियं ते निच्चरणा न उण अन्ने ॥ १ ॥" तदेवं बकुशकुशीलेषु नियमभाविनो दोषलवाः, यदि च तैर्वर्जनीयो यतिः स्यात्, अवर्जनीयस्ततो नास्त्येव । तदभावे तीर्थस्याप्यभावप्रसङ्गः । इति गाथार्थः ॥ १३५ ॥

अस्योपदेशस्य फलमाह—

**इय भावियपरमत्था मज्झत्था नियगुरुं न मुंचंति । सव्वगुणसंपओगं अप्पाणंमिवि अपेच्छंता ॥ १३६ ॥**

'इति' पूर्वोक्तप्रकारैर्भावितो मनसि परिणामितः परमार्थो यथावस्थितपक्षो यैस्ते तथा, 'मध्यस्थाः' कुग्राहाद्यदूषिताः 'निजगुरुं' आत्मीयधर्माचार्यं 'न मुञ्चन्ति' नैव व्युत्सृजन्ति, 'सर्वगुणसंप्रयोगं' समग्रगुणसामग्रीमात्मन्यपि 'अपश्यन्तः' अनवलोकयन्तः । इयमत्र भावना—मध्यस्थो बुद्धिमानालोचयति—"दुक्करयं खु जहुत्तं जहुत्तवायट्ठिया विसीयन्ति ।

१ "उवजीवी" इत्यपि ॥

एस नियओ हु मग्गो जहसत्तीए चरणसुद्धी ॥ १ ॥" इयमपि मदीयो गुरुरुत्सर्गापवादवेदी, यथाशक्तिक्रियापरः, शुद्धमार्गोपदेष्टा, सद्भावतुलनासारः, प्रकृष्टकष्टकारिणामुपबृंहकः, साहाय्यकर्त्ता च पूजापात्रं ज्ञानवताम्। यत उक्तम्—"तुच्छं वपुः संहननं कनिष्ठं वीर्यं न वर्यं किल कालदोषात्। तथाऽपि धर्माय कृतप्रयत्नाः कथं न पूज्या विदुषां मुनीन्द्राः? ॥ १ ॥" अत एनं परमोपकारिणमादरेणाराधयामि। यत एवमागमः—"जहा हि यग्गी जलणं न मंसे नाणाहुई मंतपयाभिसित्तं। एवायरियं उवचिट्ठएज्जा अणंतनाणोवगओवि सत्तो ॥ १ ॥ जस्संतिए धम्मपयाइँ सिक्खे तस्संतिए वेणइयं पउंजे। सक्कारए सिरसा पंजलीओ कायग्गिराहो मणसावि निच्चं ॥ २ ॥" एवमागमबहुमानान्निजगुरुं सम्यगाराधयन्ति। इति गाथार्थः ॥ १३६ ॥

अन्यच्च गुरुत्यागकारी निश्चितं गुरोरवज्ञां विधत्ते, ततश्चानर्थमागमस्मारणेन दर्शयन्नाह—

**एयं अवमन्नंतो वुत्तो सुत्तंमि पावसमणोत्ति। महमोहबंधगोवि य खिंसंतो अपडितप्पंतो ॥ १३७ ॥**

'एनं' प्रस्तुतं गुरुं 'अवमन्यमानः' हीलयन् साधुरिति गम्यते, 'उक्तः' भणितः 'सूत्रे' सिद्धान्ते 'पापश्रमणः' कुत्सितयतिः 'इतिः' उपप्रदर्शने। तच्चेदं सूत्रम्—"आयरियउवज्झाएहि सुत्तं विणयं च गाहिए। ते चेव खिंसइ बाले पावसमणेत्ति वुच्चइ ॥ १ ॥ आयरियउवज्झायाणं सम्मं नो पडितप्पइ। अप्पडिपूयए थद्धे पावसमणेत्ति वुच्चइ ॥ २ ॥" तथा 'महामोहबन्धकः' प्रकृष्टमिथ्यात्वोपार्जकश्च, अपिशब्दः सूत्रान्तरं संभावयति, किं कुर्वन्? 'खिंसंतो' इति गुरोर्निन्दां कुर्वन् 'अपडितप्पंतो' इति तेषां वैयावृत्त्यादावादरमकुर्वन्निति। सूत्रान्तरं चावश्यके त्रिंशत्सु मोहनीयस्थानेषु पठ्यते—"आयरियउवज्झाए खिंसइ मंदबुद्धीए। तेसिमेव य नाणीणं सम्मं नो पडितप्पइ ॥ १ ॥" क्रियापदं च पर्यन्ते "महामोहं पकुव्वइ" इति। तओ भणितम्। इति गाथार्थः ॥ १३७ ॥

आह गुरोः सामर्थ्याभावे यदि शिष्योऽधिकतरं तपः करोति तत्किं युक्तमाहोस्विदयुक्तं? गुरोर्लाघवहेतुत्वात्, इत्यत्रोच्यते, गुरुसन्निधौ युक्तमेव, गुरोर्गौरवहेतुत्वात्। तथा हि सदाचारे चारिणि शिष्ये भवत्येव गुरोः साधुवादः, पुत्रे पितुरिव। किन्तु—

**सविसेसंपि जयंतो तेसिमवन्नं विवज्जए सम्मं। तो दंसणसोहीओ सुद्धं चरणं लहइ साहू ॥ १३८ ॥**

'सविशेषं' शोभनतरं, अपिशब्दात् समानमपि। किं मत्तोऽप्येषोऽधिकं करोतीति भावनया 'यतमानः' सदनुष्ठानोद्योगवान् 'तेषां' गुरूणां 'अवज्ञां' अभ्युत्थानाद्यकरणरूपां 'वर्जयति' न करोति 'सम्यक्' शुद्धपरिणामो भावसाधुरिति प्रकृतत्वात्। ततश्च दर्शनशुद्धेर्हेतोः 'शुद्धं' अकलङ्कं 'चरणं' चारित्रं 'लभते' प्राप्नोति साधुः, भावमुनिरिति। अयमत्र भावार्थः—सम्यक्त्वं ज्ञानचरणयोः कारणम्। यत एवमागमः—"नादंसणस्स नाणं नाणेण विणा न हुंति चरणगुणा। अगुणस्स नत्थि मोक्खो नत्थि अमुक्खस्स निव्वाणं ॥ १ ॥" तच्च गुरुबहुमानिन एव भवति, अतो दुष्करकारकोऽपि तस्मिन्नवज्ञां न विदध्यात्, तदाज्ञाकारी च भूयात्। यत उक्तम्—"छट्ठट्ठमदसमदुवालसेहिं मासद्धमासखमणेहिं। अकरेंतो गुरुवयणं अणंतसंसारिओ होइ ॥ १ ॥" इति गाथार्थः ॥ १३८ ॥

अथ साधुधर्मलिङ्गनिगमनं, तत्फलं चाभिधित्सुराह—

**इय सत्तलक्खणधरो होइ चरित्ती तओ य नियमेण। कल्लाणपरंपरलाभजोगओ लहइ सिवसोक्खं ॥ १३९ ॥**

'इतिः' उपप्रदर्शने। पूर्वोपदर्शितसप्तसंख्यलक्षणधरो भवति 'चारित्री' भावसाधुः। 'तओ' इति स कः? चशब्दोऽवधारणे। स एव, नान्यः कल्याणपरंपरा सुदेवत्वसुमनुजत्वादिरूपा, तस्या लाभः प्राप्तिः, तद्योगात्तत्संबन्धत्वात् 'लभते' अवाप्नोति 'शिवसौख्यं' सिद्धिशर्म। इति गाथार्थः ॥ १३९ ॥

उक्तं श्रावकसाधुसंबन्धभेदाद्द्विधा धर्मरत्नम्, इदानीं कः कीदृगिदं कर्तुं शक्नोति? इत्येतदाह—

**दुविहंपि धम्मरयणं तरइ नरो घेत्तुमविगलं सो उ। जस्सेगवीसगुणरयणसंपया सुत्थिया अत्थि ॥ १४० ॥**

'द्विविधं' द्विप्रकारं, न पुनरेकतरमेवेत्यपेरर्थः। 'तरति' इत्यनेकार्थत्वाद्धातूनां शक्नोति 'नरः' इति जातिनिर्देशान्नरजातीयो जन्तुः, न पुनः पुमानेवेति, 'ग्रहीतुं' उपादातुं अविकलं (संपूर्णं) स एव, तुशब्दस्यावधारणार्थत्वात्। यः कथंभूतः? इत्याह—यस्याप्येकविंशतिगुणरत्नसंपदादिप्रतिपादिता विशेषणविभूतिः 'सुस्थिता' कुबोधाद्यदूषितत्वान्निरुपद्रवा 'अस्ति' विद्यत इति। ननु पूर्वमुक्तमेवैकविंशतिगुणसमृद्धो योग्यो धर्मरत्नस्येति, तत्किं पुनरिदमुच्यते? सत्यं, पूर्वं योग्यतामात्रमुक्तं, यथा बालत्वेऽपि वर्त्तमानो राजपुत्रो राज्यार्ह उच्यते, संप्रति करणशक्तिरप्यस्याभिधीयते—यथा प्रौढीभूतो राजपुत्रः कर्तुं शक्नोत्येतावद्राज्यम्। इति गाथार्थः ॥ १४० ॥

एवं च स्थिते विशेषतः पूर्वाचार्याणां श्लाघामाह—

**ता सुट्ठु इमं भणियं पुव्वायरिएहिं परहियरएहिं। इगवीसगुणोवेओ जोगो सइ धम्मरयणस्स ॥ १४१ ॥**

यस्त एभिर्गुणैर्युक्तो धर्मं कर्तुं शक्नोति । ततः 'सुष्ठु' शोभनमिदं 'भणितं' उक्तं 'पूर्वाचार्यैः' अतीतसूरिभिः 'परहितरतैः' अन्यजनोपकारकरणलम्पटैः । किं तत् ? इत्याह—एकविंशतिभिर्गुणैरुपेतो युक्तो 'योग्यः' उचितः 'सकृत्' सदा धर्मरत्नस्य' उक्तस्वरूपस्य । इति गाथार्थः ॥ १४१ ॥

अथ प्रकृतप्रकरणार्थमनुवदन्नुपसंहारगाथायुग्ममाह—

**धम्मरयणोच्चियाणं देसचरित्तीण तह चरित्तीणं । लिंगाइं जाइं समए भणियाइं मुणियतत्तेहिं ॥ १४२ ॥**
**तेसिं इमो भावत्थो नियमइविभवाणुसारओ भणिओ । सपराणुग्गहहेउं समासओ संतिसूरीहिं ॥ १४३ ॥**

'धर्मरत्नोचितानां' उक्तस्वरूपाणां 'देशचरित्रिणां' (देश) विरतानां, तथा 'चरित्रिणां' सर्वविरतानां 'लिङ्गानि' चिह्नानि यानि 'समये' सिद्धान्ते 'भणितानि' अभिहितानि 'मुनिततत्त्वैः' अवबुद्धसिद्धान्तसद्भावैः । तेषां 'अयं' उक्तस्वरूपो 'भावार्थः' तात्पर्यं 'निजमतिविभवानुसारतः' स्वबुद्धिसंपदानुरूपं 'भणितः' सिद्धान्ताम्भोधेः पारस्य लङ्घुमशक्यत्वात् यावदेवावबुद्धं तावदेव भणितमिति भावः । किमर्थं पुनरियान् प्रयासः कृतः ? इत्याह—स्वपरयोरनुग्रह उपकारः, स एव हेतुः कारणं यस्य भणनस्य तत् 'स्वपरानुग्रहहेतु' । सोऽप्यागमादेव भविष्यतीति चेन्न, तत्रागमे कोऽप्यर्थः क्वापि भणितः, तमल्पायुषोऽल्पमेधसश्चैदंयुगीना नावगन्तुमीशा इति समासतोऽल्पग्रन्थेन भणितः । कैः ? इत्याह—शान्तिप्रधानैर्माध्यस्थ्यसुस्थचेतोभिः सूरिभिराचार्यैः । इति गाथायुग्मार्थः ॥ १४२ ॥ १४३ ॥

१ "धम्मरयणत्थियाणं देसविरईण" इत्यपि । २ "धर्मरत्नार्थिनां" इत्यपि ॥

अथ शिष्याणामर्थित्वोत्पादनायोक्तशास्त्रार्थपरिज्ञानस्य फलमुपदर्शयन्नाह—

**जो परिभावइ एयं सम्मं सिद्धंतगब्भजुत्तीहिं । सो मुत्तिमग्गलग्गो कुग्गहगत्तेसु न हु पडइ ॥ १४४ ॥**

'यः' कश्चिल्लघुकर्मा 'परिभावयति' सम्यगालोचयति 'एनं' पूर्वोक्तं धर्मलिङ्गभावार्थं 'सम्यग्' मध्यस्थभावेन सिद्धान्तगर्भाभिरागमसाराभिर्युक्तिभिरुपपत्तिभिः 'सः' प्राणी मुक्तिमार्गे निर्वाणनगराध्वनि लग्नो गन्तुं प्रवृत्तः कुग्रहा दुष्षमाभाविनो मतिमोहविशेषास्त एव गर्त्ता अवटा गतिविघातहेतुत्वादनर्थजनकत्वाच्च, तेषु नैव पतति । हुशब्दस्यावधारणार्थत्वात् । अत एव सुखेन सन्मार्गेण गच्छति । इति गाथार्थः ॥ १४४ ॥

उक्तं प्रकरणार्थपरिभावनस्यानन्तरफलम्, अधुना परंपरफलमाह—

**इय धम्मरयणपगरणमणुदियहं जे मणंमि भावेंति । ते गलियकलिलपंका नेव्वाणसुहाइं पावेंति ॥ १४५ ॥**

'इय' शब्द इतिशब्दार्थे प्राकृते दृश्यते । इत्यनन्तरोक्तं धर्मरत्नमुक्तान्वर्थम्, तत्प्रतिपादकप्रकरणं शास्त्रविशेषो धर्मरत्नप्रकरणं 'अनुदिवसं' प्रतिदिनं, उपलक्षणत्वात् प्रतिसन्ध्यं प्रतिप्रहरमित्यपि द्रष्टव्यम् । 'ये' केचिदासन्नमुक्तिगमा 'मनसि' हृदये 'भावयन्ति' विवेकसारं चिन्तयन्ति 'ते' शुभशुभतराध्यवसायभाजो, गलितोऽपेतः कलिलपङ्कः पातकमलोत्करो येभ्यस्ते तथाविधाः 'निर्वाणसुखानि' अपवर्गशर्माणि 'प्राप्नुवन्ति' लभन्ते । कीदृशानि पुनस्तानि ? इति चेदुच्यते—"नवि अत्थि माणुसाणं तं सोक्खं नवि य सव्वदेवाणं । जं सिद्धाणं सोक्खं अव्वाबाहं उवगयाणं ॥ १ ॥ जह नाम कोइ मेच्छो नगरगुणे बहुविहेवि जाणंतो । न चएइ परिकहेउं उवमाए तहिं असंतीए ॥ २ ॥ इय सिद्धाणं सोक्खं अणोवमं नत्थि तस्स ओवम्मं । किंचि विसेसेणेत्तो सारिक्खमिणं सुणह वोच्छं ॥ ३ ॥" तच्च सादृश्यमिदम्—"वेणुवीणामृदङ्गादिनादयुक्तेन हारिणा । श्लाघ्यस्मरकथाबद्धगीतेन स्तिमितः सदा ॥ १ ॥ कुट्टिमादौ विचित्राणि दृष्ट्वा रूपाण्यनुत्सुकः । लोचनानन्ददायीनि लीलावन्ति स्वकानि हि ॥ २ ॥ चन्दनागुरुकर्पूरधूपगन्धान्वितस्ततः । पुटवासादिगन्धांश्च व्यक्तमाघ्राय निस्पृहः ॥ ३ ॥ नानारससमायुक्तं भुक्त्वाऽन्नमिह मात्रया । पीत्वोदकं च तृप्तात्मा स्वादयन्स्वादिमं शुभम् ॥ ४ ॥ मृदुतूलीसमाक्रान्तदिव्यपर्यङ्कसंस्थितः । सहसाम्भोदसंशब्दश्रुतेर्भयघनं भृशम् ॥ ५ ॥ इष्टभार्यापरिष्वक्तस्तद्रतान्तेऽथवा नरः । सर्वेन्द्रियार्थसंप्राप्त्या सर्वाबाधानिवृत्तिजम् ॥ ६ ॥ यद्वेदयति शं हृद्यं प्रशान्तेनान्तरात्मना । मुक्तात्मनस्ततोऽनन्तं सुखमाहुर्मनीषिणः ॥ ७ ॥" इति संभाव्यते । एवमागमार्थपरिभावनपराणां संवेगातिरेकात्कालसंहननतथाभव्यत्वादिसामग्रीवशात्पारंपर्येणापवर्गप्राप्तिः । इति गाथार्थः ॥ १४५ ॥

॥ इति स्वोपज्ञवृत्तिसहितं धर्मरत्नप्रकरणं समाप्तम् ॥

॥ श्री शखेश्वर पार्श्वनाथाय नम· ॥

## बृहद्गच्छीय श्रीमद् रत्नशेखरसूरि संदृब्ध

स्वोपज्ञवृत्ति सहित

# गुणस्थानक्रमारोह


पुनर्मुद्रण प्रकाशक

**दिव्य दर्शन ट्रस्ट**

C/o. कुमारपाल वि शाह

६८-गुलालवाडी, मुबई-४०० ००४.

वीर स. २५०८

वि सं २०३८

मूल्य

५-०० रु.

# प्राक्कथन
## ( गुणस्थानक्रमारोह )

१४ गुणस्थानकों के क्रम से आत्मविकास के निम्नस्तर से चरम उत्कर्ष का निरूपण यह जैन महर्षियो की अद्भुत देन है। विकास की कोई भी अवस्था इस प्रक्रिया मे अस्पृष्ट नहीं रह जाती। इस प्रक्रिया का सक्षिप्त किन्तु परिपूर्ण वर्णन करने वाली यह लघु कृति गुणस्थानक क्रमारोह आचार्य श्री रत्नशेखर सूरि महाराज की कीर्तिलता बनकर मुमुक्षुओ को आज तक सद्बोध का फल वितीर्ण कर रही है।

मूलगाथा और उसके सस्कृत स्वोपज्ञ विवरण सहित यह ग्रंथ कई वर्ष पूर्व देवचन्द लालभाई पुस्तकोद्धार फण्ड (सूरत) इस सस्था से प्रकाशित किया गया था। जो कई वर्षों से अप्राप्य भी था। अध्येता वर्ग इसके पुन· प्रकाशन की आवश्यकता को महसूस कर रहा था। सिद्धान्त महोदधि स्व आचार्यदेव श्रीमद् विजय प्रेम सूरीश्वर महाराज के पट्टालंकार न्याय विशारद आ श्री विजय भुवन भानु सूरि महाराज की पुनीत प्रेरणा और आशीर्वाद से हम इस महत्त्वपूर्ण कृति का प्रकाशन करने मे समर्थ हुये हैं। इस कार्य में प्रत्यक्ष एव परोक्ष सहायता करने वाले सत्पुरुषो के प्रति हम पूर्णतया कृतज्ञ हैं। मुमुक्षु वर्ग इस ग्रन्थ का अध्ययन कर के उत्तरोत्तर गुणसंवर्धन करे यही एक मगल कामना।

# विषयानुक्रमः

॥ श्रीजिनाय नमः ॥

# ॥ अथ श्रीगुणस्थानक्रमारोहवृत्तिः प्रारभ्यते ॥

( कर्ता श्रीरत्नशेखरसूरिः )

अर्हत्पदं हृदि ध्यात्वा, गुणस्थानविचारिणाम्। अनुष्टुभामियं वृत्ति-र्लिख्यते ह्यवचूर्णिवत् ॥ १ ॥ तत्रादौ मङ्गलार्थमभीष्टदैवतनमस्कारं सम्बन्धाभिधेयक्रमाद्यपद्यमाह—

**गुणस्थानक्रमारोह-हतमोहं जिनेश्वरम्। नमस्कृत्य गुणस्थान-स्वरूपं किञ्चिदुच्यते॥ १ ॥**

व्याख्या—यत्र यत्र पूर्वाप्राप्तगुणविशेषाविर्भावो भवति तत्तद्गुणस्थानमित्युच्यते, तानि गुणस्थानानि, तेषां स्वरूपं, किञ्चिद्-अल्पमात्रमुच्यत इति सम्बन्धः. किं कृत्वा? 'नमस्कृत्य' प्रणिपत्य 'जिनेश्वरं' श्रीसर्वज्ञं, कथंभूतं? 'गुणस्थानक्रमारोहहतमोहं' गुणस्थानानां क्रमो गुणस्थानक्रमः, गुणस्थानक्रमेणारोहणं गुणस्थानक्रमारोहः, गुणस्थानक्रमारोहेण-क्षपकश्रेण्यारोहलक्षणेन हतो

१ देवता प्र०। २ नमस्कारस्य प्र०। ३ आरोहणं प्र०। ४ रोहणेन प्र०।

मोहो येन स तथा तं गुणस्थानक्रमारोहहतमोहं, क्षपकश्रेण्यारोहक्रमेणैव मोहो हन्यते, यदाह वाचकमुख्यः—"पूर्वं करोत्यनन्तानुबन्धिनाम्नां क्षयं कषायाणाम्। मिथ्यात्वमोहगहनं, क्षपयति सम्यक्त्वमिथ्यात्वम् ॥ १ ॥ सम्यक्त्वमोहनीयं, क्षपयत्यष्टावतः कषायांश्च। क्षपयति ततो नपुंसक-वेदं स्त्रीवेदमथ तस्मात् ॥ २ ॥ हास्यादि ततः षट्कं, क्षपयति तस्माच्च पुरुषवेदमपि। संज्वलनानपि हत्वा, प्राप्नोत्यथ वीतरागत्वम् ॥ ३ ॥" आह-ननु हतमोहमित्यत्रोक्तं, न ह्येकस्यैव मोहस्य घातेन जिनेश्वरत्वमुपपद्यते, किन्तु ज्ञानावरणदर्शनावरणान्तरायाणामपि घाते जिनेश्वरत्वं स्यात् तत्कथमिति, अत्रोच्यते—अष्टस्वपि कर्मसु मोहस्यैव प्राधान्यं, यतः*—"अक्खाण रसणी कम्माण मोहणी तह वयाण बंभवयं। गुत्तीण य मणगुत्ती, चउरो दुक्खेण जिप्पंति ॥१॥" मोहे हते शेषकर्माणि सुखहतान्येव, यदागमः×—"जह मत्थयसूईए, हयाए हम्मए तलो। तह कम्माणि हम्मंति, मोहणिज्जे खयं गए ॥१॥" ततो मोहघाते शेषघातिनां घातोऽवश्यंभाव्येवेति न दोषः ॥१॥ अथ चतुर्दशसंख्यानां गुणस्थानकानां नामान्येव श्लोकचतुष्टयेनाह—

**चतुर्दशगुणश्रेणि-स्थानकानि तदादिमम्। मिथ्यात्वाख्यं द्वितीयं तु, स्थानं सास्वादनाभिधम् ॥२॥**
**तृतीयं मिश्रकं तुर्यं, सम्यग्दर्शनमव्रतम्। श्राद्धत्वं पञ्चमं षष्ठं, प्रमत्तश्रमणाभिधम् ॥ ३ ॥**

१ घाते प्र०। * अक्षणां रसना कर्मणां मोहनीयं व्रतानां तथा ब्रह्मव्रतम्। गुप्तीनां च मनोगुप्तिः चत्वारि दुःखेन जीयन्ते ॥ १ ॥
× यथा मस्तकसूच्या हतायां हन्यते तालः। तथा कर्माणि हन्यन्ते, मोहनीये क्षयं गते ॥ १ ॥ २ नामानि प्र०।

**सप्तमं त्वप्रमत्तं चा-पूर्वात्करणमष्टमम्। नवमं चानिवृत्त्याख्यं, दशमं सूक्ष्मलोभकम् ॥ ४ ॥**
**एकादशं शान्तमोहं, द्वादशं क्षीणमोहकम्। त्रयोदशं सयोग्याख्यमयोग्याख्यं चतुर्दशम् ॥५॥**

**चतुर्भिः कुलकम्**

व्याख्या—इह हि भव्यजीवानां सिद्धिसौधाधिरोहणार्थं गुणश्रेणिरिव निःश्रेणिस्तस्यां च पदन्यासास्पदस्थानीयानि यानि गुणाद्गुणान्तरप्राप्तिरूपाणि स्थानानि-विश्रामधामानि चतुर्दशसंख्यानि, तेषां नामानि यथा—प्रथमं मिथ्यात्वगुणस्थानकं १, द्वितीयं सास्वादनगुणस्थानकं २, तृतीयं मिश्रगुणस्थानकं ३, चतुर्थमविरतसम्यग्दृष्टिगुणस्थानकं ४, पञ्चमं देशविरतिगुणस्थानकं ५, षष्ठं प्रमत्तसंयतगुणस्थानकं ६, सप्तममप्रमत्तसंयतगुणस्थानकं ७, अष्टमं निवृत्तिबादर ( अपूर्वकरण ) गुणस्थानकं ८, नवमं अनिवृत्तिबादरगुणस्थानकं ९, दशमं सूक्ष्मसंपरायगुणस्थानकं १०, एकादशमुपशान्तमोहगुणस्थानकं ११, द्वादशं क्षीणमोहगुणस्थानकं १२, त्रयोदशं सयोगिकेवलिगुणस्थानकं १३, चतुर्दशमयोगिकेवलिगुणस्थानकं १४ मिति २-३-४-५॥ अथ प्रथमं व्यक्ताव्यक्तमिथ्यात्वस्वरूपमाह—

**अदेवागुर्वधर्मेषु, या देवगुरुधर्मधीः। तन्मिथ्यात्वं भवेद्व्यक्त-मव्यक्तं मोहलक्षणम् ॥ ६ ॥**

व्याख्या—या स्पष्टचैतन्यानां संज्ञिपञ्चेन्द्रियादिजीवानामदेवागुर्वधर्मेषु क्रमेण देवगुरुधर्मबुद्धिः संपद्यते, तद्व्यक्तं मिथ्यात्वं

भवति, उपलक्षणात् —*जीवाइपयत्थेसुं, जिणोवइट्ठेसु जा असद्दहणा । सद्दहणावि अ मिच्छा, विपरीअपरूवणा जा य ॥ १ ॥ संसयकरणं जं चिअ, जो तेसु अणायरो पयत्थेसु । तं पञ्चविहं मिच्छं, तद्दिट्ठी मिच्छदिट्ठी अ ॥ २ ॥ एतत्पञ्चविधमपि मिथ्यात्वं व्यक्तमेव, अथवा—+आभिग्गहिअमणाभि-ग्गहियं तहाभिनिवेसिअं चेव । संसइअमणाभोगं, मिच्छत्तं पंचहा होइ ॥ १ ॥ इत्यत्रापि यदेकमनाभोगिकमिथ्यात्वं तदव्यक्तं, शेषमिथ्यात्वचतुष्टयं तु व्यक्तमेव, तथा—।दसविहे मिच्छत्ते पन्नत्ते, तंजहा—अधम्मे धम्मसन्ना, धम्मे अधम्मसन्ना, उम्मग्गे मग्गसन्ना, मग्गे उम्मग्गसन्ना, अजीवेसु जीवसन्ना, जीवेसु अजीवसन्ना, असाहुसु साहुसन्ना, साहुसु असाहुसन्ना, अमुत्तेसु मुत्तसन्ना, मुत्तेसु अमुत्तसन्ना । इत्येवमादिकमपि यन्मिथ्यात्वं तद्व्यक्तमेव, अपरं तु यदनादिकालं यावन्मोहनीयमकृतिरूपं मिथ्यात्वं सद्दर्शनरूपात्मगुणाच्छादकं जीवेन सह सदाऽविनाभावि भवति, तदव्यक्तं मिथ्यात्वमिति ॥ ६ ॥ अथ मिथ्यात्वस्य गुणस्थानकत्वमाह—

* जीवादिपदार्थेषु जिनोपदिष्टेषु या अश्रद्धा । श्रद्धाऽपि च मिथ्या, विपरीतप्ररूपणा या च । १ । संशयकरणं यदेव, यस्तेषु अनादरः पदार्थेषु । तत् पञ्चविधं मिथ्यात्वं, तद्दृष्टिर्मिथ्यादृष्टिश्च ॥ २ ॥ + आभिग्रहिकमनाभिग्रहिकं तथाऽऽभिनिवेशिकमेव । सांशयिकमनाभोगिकं मिथ्यात्वं पञ्चधा भवति । १ । । दशविधं मिथ्यात्वं प्रज्ञप्तम्, तद्यथा—अधर्मे धर्मसंज्ञा १ धर्मे अधर्मसंज्ञा २ उन्मार्गे मार्गसंज्ञा ३ मार्गे उन्मार्गसंज्ञा ४ अजीवेषु जीवसंज्ञा ५ जीवेषु अजीवसंज्ञा ६ असाधुषु साधुसंज्ञा ७ साधुषु असाधुसंज्ञा ८ अमूर्तेषु मूर्तसंज्ञा ९ मूर्तेषु अमूर्तसंज्ञा १०

१ अमग्ग । प्र० । २ अजीवे । प्र० । ३ जीवे प्र० ।

**अनाद्यव्यक्तमिथ्यात्वं, जीवेऽस्त्येव सदा परम् । व्यक्तमिथ्यात्वधीप्राप्ति-र्गुणस्थानतयोच्यते ॥ ७ ॥**

व्याख्या—अनादि च तदव्यक्तं च अनाद्यव्यक्तं, तच्च तन्मिथ्यात्वं च अनाद्यव्यक्तमिथ्यात्वं ' जीवे ' प्राणिनि अव्यवहारराशिवर्तिनि 'सदा' सर्वदाऽप्यस्त्येव, परं व्यक्तमिथ्यात्वस्य—पूर्वोक्तस्वरूपस्य धीर्बुद्धिस्तत्प्राप्तिरेव गुणस्थानतयोच्यत इति। **अत्र**—ननु '* सव्वजिअठाण मिच्छे ' इति मिथ्यादृष्टौ सर्वाण्यपि जीवस्थानानि लभ्यन्ते, तत्कथं व्यक्तमिथ्यात्वधीप्राप्तिरेव प्रथमगुणस्थानतामाप्नोति ? इत्यत्रोच्यते ' सर्वे भावाः सर्वजीवैः प्राप्तपूर्वा अनन्तशः ' इति वचनात् ये प्राप्तव्यक्तमिथ्यात्वबुद्धयो जीवा व्यवहारराशिवर्त्तिनस्त एव प्रथमगुणस्थाने लभ्यन्ते, न त्वव्यवहारराशिवर्तिनः, तेषामव्यक्तमिथ्यात्वस्यैव सद्भावादित्यदोषः॥ ७ ॥ **अथ** मिथ्यात्वदूषणमाह—

**मद्यमोहाद्यथा जीवो, न जानाति हिताहितम् । धर्माधर्मौ न जानाति, तथा मिथ्यात्वमोहितः ॥ ८ ॥**

* सर्वजीवस्थानानि मिथ्यात्वे

१ गुणस्थानस्थाः । प्र० । २ अन्ततो निगोदावस्थायामपि तथाभूताव्यक्तस्पर्शमात्रप्रतिपत्तिरविपर्यस्तापि भवति इति मलयगिरिपादाः षडशीतिवृत्तौ । कर्मस्तवविवरणादावप्येवमेवेतिध्येयम् ।

व्याख्या—यथा ' जीवो ' मनुष्यादिप्राणी ' मद्यमोहाद् 'मदिरोन्मादात् हितं वाऽहितं वा किमपि न जानाति, नष्टचैतन्यवत्, तथा मिथ्यात्वमोहितो जीवो धर्माधर्मौ सम्यग् न जानात्यज्ञानत्वात्, यदाह—मिथ्यात्वेनालीढचित्ता नितान्तं, तत्त्वातत्त्वं जानते नैव जीवाः । किं जात्यन्धाः कुत्रचिद्वस्तुजाते, रम्यारम्यव्यक्तिमासादयेयुः ? ॥ १ ॥ इति ॥ ८ ॥ अथ मिथ्यात्वस्य स्थितिमाह—

**अभव्याश्रितमिथ्यात्वे-ऽनाद्यनन्ता स्थितिर्भवेत् । सा भव्याश्रितमिथ्यात्वे-ऽनादिसान्ता पुनर्मता ॥ ९ ॥**

व्याख्या—अभव्यजीवानाश्रित्य मिथ्यात्वे—सामान्येनाव्यक्तमिथ्यात्वविषयेऽनाद्यनन्ता स्थितिर्भवति, तथा सैव स्थितिर्भव्यजीवान् पुनराश्रित्यानादिसान्ता पुनर्मता—संमता, यदाह—*मिच्छत्तमभव्वाणं, तमणाइमणंतयं मुणेयव्वं । भव्वाणं तु अणाइ, सपज्जवसियं तु मिच्छत्तं ॥१॥" इयं च स्थितिः सामान्येन मिथ्यात्वमाश्रित्य दर्शिता, यदि पुनर्मिथ्यात्वगुणस्थानस्य स्थितिर्विचार्यते तदा अभव्यानाश्रित्य साद्यनन्ता भव्यानाश्रित्य सादिसान्तेति । तदा मिथ्यात्वगुणस्थानस्थो जीवो विंशत्युत्तरशतबन्धप्रायोग्यकर्मप्रकृतीनां मध्यात् तीर्थकृत्कर्माहारकद्वयाबन्धात्सप्तदशोत्तरशतबन्धकः, तथा द्वाविंशत्युत्तरशतोदयप्रायोग्यकर्मप्रकृतीनां मध्यात् मिश्रसम्यक्त्वाहारकद्विकतीर्थकृत्कर्मेतिपञ्चप्रकृतीनामनुदयात्सप्तदशोत्तरशतवेदिता, अष्टचत्वारिंशदधिकशतसत्ताको भवति ॥ ९ ॥ इति

१ मनुष्यादिकः । प्र० । २ नष्टचैतन्यत्वात् । प्र० । ३ सम्पत्ते । प्र० । * मिथ्यात्वमभव्यानां तदनाद्यनन्तं ज्ञातव्यम् । भव्यानां तु अनादि सपर्यवसितं मिथ्यात्वम् ॥ १ ॥

व्याख्या—इति[1] त्रयात्मकं पृथक्त्ववितर्कसविचारात्मकं प्रथमं शुक्लध्यानं कथितं, तस्माद्ध्यानात् 'परां' प्रकृष्टां शुद्धिं प्राप्नोति, कथंभूतां ? 'सिद्धिश्रीसौख्यवार्णिकां' मुक्तिलक्ष्मीसुखनिदर्शनिकामासादयतीत्यर्थः ॥ ६५ ॥ अथ तस्यैव विशेषस्वरूपमाह—

यद्यपि प्रतिपात्येतदुक्तं[3] ध्यानं प्रजायते । तथाप्यतिविशुद्धत्वादूर्ध्वस्थानं समीहते ॥ ६६ ॥

व्याख्या—यद्यप्येतदुक्तं ध्यानं 'प्रतिपाति' पतनशीलं 'प्रजायते' समुत्पद्यते, तथापि 'अतिविशुद्धत्वाद्' अतिनिर्मलत्वात् 'ऊर्ध्वस्थानं' अग्रेतनं गुणस्थानं 'समीहते' तदारोहाय धावतीत्यर्थः । तथाऽपूर्वगुणस्थानस्थो जीवो निद्राद्विकदेवद्विकपञ्चेन्द्रियत्वप्रशस्तविहायोगतित्रसनवकवैक्रियाहारकतैजसकार्मणवैक्रियोपाङ्गआहारकोपाङ्गआद्यसंस्थाननिर्माणतीर्थकृद्वर्णचतुष्कागुरुलघूपघातपराघातोच्छ्वासरूपद्वात्रिंशत्प्रकृतिव्यवच्छेदात् षड्विंशतिर्बन्धकः, अन्त्यसंहननत्रिकसम्यक्त्वोदयव्यवच्छेदात् द्वासप्ततेर्वेदयिताऽष्टत्रिंशदधिकशतसत्ताको भवति ॥ ६६ ॥ इति क्षपकस्याष्टमम् । अथ क्षपकोऽनिवृत्तिगुणस्थानमारोहन् याः प्रकृतीर्यत्र यथा क्षिपति तत्र तास्तथा श्लोकपञ्चकेनाह—

अनिवृत्तिगुणस्थानं, ततः समधिगच्छति । गुणस्थानस्य तस्यैव, भागेषु नवसु क्रमात् ॥ ६७ ॥

गतिः श्वाभ्री च तैरश्ची, द्वे तयोरानुपूर्विके । साधारणत्वमुद्योतः, सूक्ष्मत्वं विकलत्रयम् ॥ ६८ ॥

---

१ योगी 'समाहितः' समाधिमान् 'इति' पूर्वोक्तं प्र० २ ध्यायन् परां ३ शुक्लध्यानं ४ शुक्लध्यानं ५ ०शतेर्बन्धकः

एकेन्द्रियत्वमातापस्त्यानगृद्ध्यादिकत्रयम् । स्थावरत्वमिहाद्यंशे, क्षीयन्ते षोडशेत्यमूः ॥ ६९ ॥

अष्टौ मध्यकषायाश्च, द्वितीयेऽथ तृतीयके । षण्ढत्वं तुर्यके स्त्रीत्वं, हास्यषट्कं च पञ्चमे ॥ ७० ॥

चतुर्ष्वंशेषु शेषेषु, क्रमेणैवातिशुद्धितः । पुंवेदश्च ततः क्रोधो, मानो माया च नश्यति ॥ ७१ ॥

पञ्चभिः कुलकम्

व्याख्या—'ततः' तस्मादष्टमगुणस्थानादनन्तरं क्षपकोऽनिवृत्तिगुणस्थानं नवमं समारोहति समधिगच्छति, ततस्तस्यैव गुणस्थानस्य नवसु भागेषु कृतेषु आद्येंऽशे प्रथमे भागे 'इत्यमूः' इत्येताः षोडश कर्मप्रकृतयः क्षीयन्ते, इत्यमूः काः ? 'श्वाभ्री गतिः' नरकगतिः, 'तैरश्ची' तिर्यग्गतिः, तयोर्नरकतिरश्चोर्द्वे आनुपूर्विके नरकानुपूर्वी तिर्यगानुपूर्वी चेति 'साधारणत्वं' साधारणनाम 'उद्योत' उद्योतनाम 'सूक्ष्मत्वं' सूक्ष्मनाम 'विकलत्रयं' द्वित्रिचतुरिन्द्रियजातिलक्षणं 'एकेन्द्रियत्वं' एकेन्द्रियजातिरूपं, 'आताप' आतपनाम, 'स्त्यानगृद्ध्यादिकत्रयं' निद्रानिद्राप्रचलाप्रचलास्त्यानर्द्धिरितित्रिकं, 'स्थावरत्वं' स्थावरनामकर्मेति षोडश कर्मप्रकृतयोऽनिवृत्तिगुणस्थानस्य प्रथमे भागे क्षीयन्ते, तथाऽष्टौ मध्यकषाया—अप्रत्याख्यानप्रत्याख्यानलक्षणा द्वितीये भागे क्षीयन्ते, तृतीये भागे 'षण्ढत्वं' नपुंसकत्वं क्षीयते, 'तुर्यके' चतुर्थके भागे 'स्त्रीत्वं' स्त्रीवेदः क्षीयते, पञ्चमे भागे हास्यरत्यरतिभयशोकजुगुप्सेतिषट्कं च क्षीयते, शेषेषु 'चतुर्ष्वंशेषु' षष्ठादिनवमान्त्येषु 'क्रमेणैवातिशुद्धितो' ध्यानस्यातिनैर्म-

---

१ निवृत्तिगु० प्र०

ल्यतः पुंवेदः सञ्ज्वलनक्रोधो मानो माया च नश्यति, अयमर्थः—षष्ठे भागे पुंवेदः क्षीयते, सप्तमे भागे संज्वलनक्रोधः क्षीयते, अष्टमे संज्वलनमानः क्षीयते, नवमे भागे संज्वलनमाया च क्षीयते, तथा चानिवृत्तिगुणस्थानस्थो जीवो हास्यरत्यरतिभयशोकजुगुप्साव्यवच्छेदाद् द्वाविंशतेर्बन्धकः, हास्यषट्कोदयव्यवच्छेदात् षट्षष्टेर्वेदयिता, नवमांशे मायान्तपञ्चत्रिंशत्प्रकृतिसत्ताव्यवच्छेदात् त्र्युत्तरशतसत्ताको भवति ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ इति क्षपकस्य नवमम् । अथ क्षपकस्य दशमगुणस्थानमाह—

ततोऽसौ स्थूललोभस्य, सूक्ष्मत्वं प्रापयन् क्षणात् । आरोहति मुनिः सूक्ष्मसंपरायं गुणास्पदम् ॥ ७२ ॥

व्याख्या—'ततो' नवमगुणस्थानादनन्तरं 'असौ' क्षपको मुनिः 'सूक्ष्मसंपरायास्पदं' (रायं गुणास्पदं) सूक्ष्मसंपरायनामकं गुणस्थानमारोहति, किं कुर्वन् ? 'क्षणात्' क्षणमात्रात् 'स्थूललोभस्य' स्थूलरूपस्य संज्वलनलोभस्य 'सूक्ष्मत्वं' सूक्ष्माणुरूपत्वं प्रापयन् । तथा सूक्ष्मसंपरायस्थो जीवः पुंवेदसंज्वलनचतुष्कबन्धव्यवच्छेदाद् कर्मप्रकृतीनां सप्तदशकस्य बन्धकः, त्रिवेदत्रिसंज्वलनोदयव्यवच्छेदात्षष्टेर्वेदयिता मायासत्ताव्यवच्छेदात द्व्युत्तरशतसत्ताको भवति ॥ ७२ ॥ इति क्षपकस्य दशमम् । अथ क्षपकस्यैकादशं गुणस्थानं न भवतीत्याह—

एकादशं गुणस्थानं, क्षपकस्य न संभवेत् । किंतु स सूक्ष्मलोभांशान्, क्षपयन् द्वादशं व्रजेत् ॥ ७३ ॥

व्याख्या—क्षपकस्यैकादशं गुणस्थानकं 'न' नैव भवेत्, किंतु दशमादेव गुणस्थानात्क्षपकः 'सूक्ष्मलोभांशान् सूक्ष्मीकृत-

---

१ भवेन्नहि । दशमात्सूक्ष्म० प्र० २ 'हि' स्फुटं

लोभखण्डान् क्षपयन् सन् 'द्वादशं' क्षीणमोहाख्यं गुणस्थानं 'श्रयेत्' गच्छेदिति, अत्र क्षपकश्रेण्यां च समर्थयति, तत्क्रमश्चायं—×
अणमिच्छमीससम्मं, अट्ठनपुमित्थिवेअछक्कं च । पुंवेयं च खवेइ, कोहाईए अ संजलणे ॥ १ ॥ ७३ ॥ अथ तत्र शुक्लध्यानस्य द्वितीयांशाश्रयणमाह—

**भूत्वाऽथ क्षीणमोहात्मा, वीतरागो महायतिः । पूर्ववद्भावसंयुक्तो, द्वितीयं शुक्लमाश्रयेत् ॥७४॥**

व्याख्या—अथ चानन्तरं स क्षपकः 'क्षीणमोहात्मा भूत्वा' क्षीणमोहगुणस्थानाद्धापरिणतिमयो भूत्वा द्वितीयं शुक्लध्यानं 'पूर्ववत्' प्रथमशुक्लध्यानरीत्या 'श्रयेत्' भजेत्, कथंभूतः क्षपकः ? 'वीतरागो' विशेषेण इतो रागो यस्मात्स तथा, पुनरपि कथंभूतः ? 'भावसंयुक्तो' विशुद्धतरभावोपेतः, एवंविधः क्षपको द्वितीयं शुक्लध्यानं श्रयेदित्यर्थः ॥ ७४ ॥

अथ तदेव शुक्लध्यानं सनामविशेषणमाह—

**अपृथक्त्वमवीचारं, सवितर्कगुणान्वितम् । स ध्यायत्येकयोगेन, शुक्लध्यानं द्वितीयकम् ॥७५॥**

व्याख्या—'स' क्षपकः क्षीणमोहगुणस्थानवर्ती द्वितीयं शुक्लध्यानं 'एकयोगेन' एकतरयोगेन संध्यायति, यदाह— एकं त्रियोगभाजामाद्यं स्यादपरमेकयोगवताम् । तनुयोगिनां तृतीयं, निर्योगानां चतुर्थं तु ॥ १ ॥ कथंभूतं ? 'अपृथक्त्वं'

× अणमिथ्यात्वमिश्रसम्यक्त्वानि अष्टनपुंसकस्त्रीवेदषट्कं च । पुंवेदं च क्षपयति क्रोधादिकान् च संज्वलनान् ॥ १ ॥

१ स प्र० २ अथानन्तरं प्र० ३ हि प्र०

पृथक्त्ववर्जितं, 'अविचारं' विचाररहितं, 'सवितर्कगुणान्वितं' वितर्कमात्रगुणोपेतं, द्वितीयं शुक्लध्यानं ध्यायतीत्यर्थः ॥ ७५ ॥ अथापृथक्त्वमेव व्यक्तमाह—

**निजात्मद्रव्यमेकं वा, पर्यायमथवा गुणम् । निश्चलं चिन्त्यते यत्र, तदेकत्वं विदुर्बुधाः ॥७६॥**

व्याख्या—'बुधा' ज्ञानतत्पराः 'तदेकत्वम्' अपृथक्त्वं 'विदुः' अवधारयन्ति स्म कथयन्ति स्म, तत्किं ?—ध्यायकेन यन्निजात्मद्रव्यं 'एकं' केवलं स्वकीयविशुद्धपरमात्मद्रव्यं, 'वा' अथवा तस्यैव परमात्मद्रव्यस्य एकं केवलं पर्यायं, 'वा' अथवा एकमद्वितीयं गुणं वा, तदत्र गुणपर्यायविशेषः पूर्वोक्त एव, एतदेवोपिमेकं द्रव्यमेकं गुणं वा एकं पर्यायं वा, 'निश्चलं' चलनवर्जितं यत्र ध्यायते तदेकत्वमिति ॥ ७६ ॥ अथाविचारत्वमाह—

**यद्व्यञ्जनार्थयोगेषु, परावर्त्तविवर्जितम् । चिन्तनं तदविचारं, स्मृतं सद्ध्यानकोविदैः ॥ ७७ ॥**

व्याख्या—सम्प्रति सद्ध्यानकोविदत्वं शास्त्राम्नायविशेषादेवास्ति, न त्वनुभवात्, यदाहुः श्रीहेमचन्द्रसूरिपादाः—अनविच्छित्याऽऽम्नायः, समागतोऽस्येति कीर्त्यतेऽस्माभिः । दुष्करमप्याधुनिकैः, शुक्लध्यानं यथाशास्त्रम् ॥ १ ॥ तैः सद्ध्यानकोविदैः—शास्त्राम्नायावगतशुक्लध्यानरहस्यैस्तद् 'अविचारं' अविचारविशेषणोपेतं द्वितीयं शुक्लं स्मृतं प्रज्ञप्तं, तत्किं ?—यत्पूर्वोक्तव्यञ्जनेषु 'व्यञ्जनार्थयोगेषु' शब्दाभिधेययोगरूपेषु 'परावर्त्तविवर्जितं' शब्दाच्छब्दान्तरमित्यादिसंक्रमेण रहितं चिन्तनं श्रुतानुसारादेव

१ नेः प्र० २ व्यञ्जन्य० प्र० ३ शब्दार्थ० प्र०

क्रियते तदविचारमिति ॥ ७७ ॥ अथ सवितर्कत्वमाह—

**निजशुद्धात्मनिष्ठं हि, भावश्रुतावलम्बनात् । चिन्तनं क्रियते यत्र, सवितर्कं तदुच्यते ॥ ७८ ॥**

व्याख्या—यत्र 'निजशुद्धात्मनिष्ठं' स्वकीयातिविशुद्धपरमात्मलीनं 'हि' स्फुटं चिन्तनं सूक्ष्मविचारणात्मकं क्रियते, तत्सवितर्ककगुणोपेतं द्वितीयं शुक्लध्यानं, कस्मात् ? 'भावश्रुतावलम्बनात्' सूक्ष्मान्तर्जल्परूपभावागमश्रुतावलम्बनमात्रचिन्तनादिति ॥ ७८ ॥ अथ द्वितीयशुक्लजनितसमरसीभावमाह—

**इत्येकत्वमविचारं, सवितर्कमुदाहृतम् । तस्मिन् समरसीभावं, धत्ते स्वात्मानुभूतितः ॥ ७९ ॥**

व्याख्या—'इति' पूर्वोक्तप्रकारेण एकत्वाविचारसवितर्करूपविशेषणत्रयोपेतं द्वितीयं शुक्लध्यानं 'उदाहृतं' कथितं, 'तस्मिन्' द्वितीये शुक्लध्याने वर्त्तमानो ध्यानी—ध्यानात् समरसीभावस्तदेकीकरणं मतं । आत्मा यदपृथक्त्वेन, लीयते परमात्मनि ॥ १ ॥ तं समरसीभावं 'धत्ते' धारयति, कुतः ? 'स्वात्मानुभूतितः' स्वस्यात्मनोऽनुभूतिरनुभवनं स्वात्मानुभूतिस्तस्याः ॥ ७९ ॥ अथ क्षीणमोहगुणस्थानाद्धाऽवसाने यत्करोति तदाह—

**इत्येतद्ध्यानयोगेन, प्लुष्यत्कर्मेन्धनोत्करः । निद्राप्रचलयोर्नाशमुपान्त्ये कुरुते क्षणे ॥ ८० ॥**

व्याख्या—इत्येतत्पूर्वोक्तध्यानयोगेन द्वितीयशुक्लध्यानसमायोगेन 'प्लुष्यत्कर्मेन्धनोत्करो' दह्यमानकर्मसमिदुत्करो योगीन्द्रः

१ ०कमाह २ ०बगनाधक० प्र० ३ सोऽयं प्र०

'उपान्त्ये' अन्त्यसमयापसमये निद्राप्रचलयोः 'नाशं करोति' क्षयं कुरुते ॥ ८० ॥ अथान्त्यसमये यत्करोति तदाह—

**अन्त्ये दृष्टिचतुष्कं च, दशकं ज्ञानविघ्नयोः। क्षपयित्वा मुनिः क्षीणमोहः स्यात्केवलात्मकः ॥८१॥**

व्याख्या—क्षपको मुनिः क्षीणमोहस्यान्त्ये समये 'दृष्टिचतुष्कं' चक्षुर्दर्शनादिदर्शनचतुष्कं ज्ञानान्तरायदशकं चेत्येनाश्चतुर्दश प्रकृतीः क्षपयित्वा क्षीणमोहांशः सन् केवलात्मकः स्यादिति। तथा क्षीणमोहगुणस्थानस्थो जीवो दर्शनचतुष्कज्ञानान्तरायदशकोच्चयशोरूपषोडशबन्धव्यवच्छेदादेकसातवेद्यबन्धकः, तथा संज्वलनलोभऋषभनाराचनाराचोदयव्यवच्छेदात्सप्तपञ्चाशत्प्रकृतेर्वेदयिता, लोभसत्ताक्षपकत्वादेकोत्तरशतसत्ताको भवति ॥८१॥ इति क्षपकस्य द्वादशम् ॥८१॥ अथ क्षीणमोहान्तप्रकृतीनां संख्यामाह—

**एवं च क्षीणमोहान्ता, त्रिषष्टिप्रकृतिस्थितिः। पञ्चाशीतिर्जरद्वस्त्रप्रायाः शेषाः सयोगिनि ॥८२॥**

व्याख्या—'एवं' पूर्वोक्तप्रकारेण त्रिषष्टिप्रकृतीनां स्थितिः क्षीणमोहान्तैव, कोऽर्थः?—चतुर्थगुणस्थानादारभ्य क्षीयमाणानां प्रकृतीनां त्रिषष्टिः क्षीणमोहे संपूर्णा, यथैकस्याः प्रकृतेश्चतुर्थगुणस्थाने क्षयः, पुनरेकस्याः पंचमे, अष्टानां सप्तमे, षट्त्रिंशत्प्रकृतीनां नवमे, सप्तदशप्रकृतीनां द्वादशे क्षयः, इत्येवं त्रिषष्टिप्रकृतीनां क्षीणमोहान्तैव स्थितिरुक्ता, तथा शेषास्त्रिषष्टिव्यतिरिक्ताः पञ्चाशीतिप्रकृतयो 'जरद्वस्त्रप्रायाः' अत्यर्थं जीर्णचीवरकल्पाः सयोगिगुणस्थाने भवन्ति ॥ ८३ ॥ अथ सयोगिनि यो भावो भवति, ये च सम्यक्त्वचारित्रे भवतस्तदाह—

१ ०गुणस्थान प्र० २ अत्यन्तजी० प्र०

**भावोऽत्र क्षायिकः शुद्धः, सम्यक्त्वं क्षायिकं परम्। क्षायिकं हि यथाख्यातचारित्रं तस्य निश्चितम् ॥८३॥**

व्याख्या—'तस्य' केवलात्मनो भगवतः, 'अत्र' सयोगिगुणस्थाने भावः क्षायिक एव 'शुद्धः' अतिनिर्मलो भवति, सम्यक्त्वं 'परं' प्रकृष्टं क्षायिकमेव 'हि' स्फुटं चारित्रं क्षायिकं यथाख्यातनामकं निश्चितं भवति, कोऽर्थः? अत्रौपशमिकक्षायोपशमिकभावयोरभावत्वात् क्षायिको भावः, तथा दर्शनमोहनीयस्य चारित्रमोहनीयस्य क्षयत्वात्क्षायिके सम्यक्त्वचारित्रे इति ॥ ८३ ॥ अथ तस्य केवलात्मनः केवलज्ञानबलमाह—

**चराचरमिदं विश्वं, हस्तस्थामलकोपमम्। अत्यक्षं भासते तस्य, केवलज्ञानभास्वतः ॥ ८४ ॥**

व्याख्या—'तस्य' केवलज्ञानभास्वतः केवलाधिगमभार्त्तण्डस्य 'चराचरं विश्वं' सचराचरं जगत् 'हस्तस्थामलकोपमं' हस्ततलगृहीतामलकफलोपमं 'प्रत्यक्षं' साक्षात्कारेण 'भासते' दीप्यत इति, अत्र भास्वतः सूर्यस्योपमानं व्यवहारमात्रेणैव दर्शितं, न निश्चयतो, यतो निश्चयनयेन केवलज्ञानसूर्ययोर्महदन्तरं, यदाह—[†]चंदाइच्चगहाणं पहा पयासेइ परिमियं खित्तं। केवलिअनाणलंभो, लोआलोअं पयासेइ ॥ १ ॥ ८४ ॥ अथार्जिततीर्थकृत्कर्मणो विशेषमाह—

**विशेषात्तीर्थकृत्कर्म, येनास्त्यर्जितमूर्जितम्। तत्कर्मोदयतोऽत्रासौ, स्याज्जिनेन्द्रो जगत्पतिः ॥८५॥**

व्याख्या—'विशेषाद्' अर्हद्भक्तिप्रमुखविंशतिपुण्यस्थानकविशेषाराधनाद् 'येन' जन्तुना 'ऊर्जितं' स्फीतं तीर्थकृत्कर्म

१ ०वोऽस्य प्र० २ ०भावात् ३ क्षयात् † चन्द्रादित्यग्रहाणां प्रभा प्रकाशयति परिमितं क्षेत्रम्। केवल्यज्ञानलाभो लोकालोकं प्रकाशयति ॥१॥

'अर्जितम्' उपार्जितमस्ति, तीर्थकृत्कर्मार्जने हि हेतुभूतान्यर्हद्भक्तिमुख्यानि विंशतिस्थानान्यतानि, यदाह—*अरिहंत सिद्ध पवयण गुरु थेर बहुस्सुए तवस्सीसुं। वच्छलया एएसिं, अभिक्खनाणोवओगे अ ॥ १ ॥ दंसणविणए आवस्सए अ सीलव्वए निरइयारे। खणलवतवच्चियाए, वेयावच्चे समाही अ ॥ २ ॥ अप्पुव्वनाणगहणे, सुअभत्ती पवयणे पभावणया। एएहिं कारणेहिं, तित्थयरत्तं लहइ जीवो ॥ ३ ॥ ततः 'अत्र' सयोगिनि गुणस्थाने 'तत्कर्मोदयतः' तीर्थकृत्कर्मोदयात् 'असौ' केवली 'जगत्पतिः' त्रिभुवनाधिपतिः 'जिनेन्द्रः' स्यात्, जिनाः सामान्यकेवलिनस्तेषामिन्द्र इव जिनेन्द्रः ॥ ८५ ॥

अथ तीर्थकृतो महिमानमाह—

**स सर्वातिशयैर्युक्तः, सर्वामरनरनतः। चिरं विजयते सर्वोत्तमं तीर्थं प्रवर्त्तयन् ॥ ८६ ॥**

व्याख्या—'स' भगवांस्तीर्थंकरः, +चउरो जम्मप्पभिइ, इक्कारस कम्मसंखए जाए। नव दस य देवजणिए, चउतीसं अइसए वंदे ॥ १ ॥ इत्येवंविधैश्चतुस्त्रिंशत्संख्यैरतिशयैर्युक्तः, तथा 'सर्वामरनरैर्नतः' सकलदेवमानवनमस्कृतः, 'सर्वो-

१ ०न्येव प्र० २ ०एएसुं प्र० ३ ०दतिशयै० प्र०

* अर्हत्सिद्धप्रवचनगुरुस्थविरबहुश्रुते तपस्विषु। वात्सल्यमेतेषु अभीक्ष्णं ज्ञानोपयोगौ च ॥ १ ॥ दर्शनविनयौ आवश्यकानि च शीलव्रते निरतिचारता। क्षणलवतपस्त्यागा वैयावृत्त्यं समाधिश्च ॥२॥ अपूर्वज्ञानग्रहणं श्रुतभक्तिः प्रवचने प्रभावना। एतैः कारणैस्तीर्थकरत्वं लभते जीव ॥३॥

+ चत्वारो जन्मप्रभृति एकादश कर्मसंक्षये जाते। नव दश च देवजनिताश्चतुस्त्रिंशतमतिशयान्वन्दे ॥

रिकयोगवान् भवति, मिश्रत्वं चात्र कार्मणेनैव सहौदारिकस्य, 'तृतीयाद्येषु त्रिषु तु' पुनस्तृतीयप्रमुखेषु त्रिषु समयेषु तृतीयचतुर्थपञ्चमलक्षणेषु स केवली केवलैकार्मणधरो भवति, केवलकार्मणकाययोगी भवति, 'तदा' तत्र समये स केवली केवलकार्मणकाययोगत्वादनाहारको भवति, यदाह—"औदारिकप्रयोक्ता प्रथमाष्टमसमययोरसाविष्टः। मिश्रौदारिकयोक्ता सप्तमषष्ठद्वितीयेषु ॥ १ ॥ कार्मणशरीरयोक्ता चतुर्थके पञ्चमे तृतीये च। समयत्रये च तस्मिन् भवत्यनाहारको नियमात् ॥२॥" ॥ ९२ ॥ अत्र यः केवली समुद्घातं करोति तदाह—

**यः षण्मासाधिकायुष्को, लभते केवलोद्गमम्। करोत्यसौ समुद्घातमन्ये कुर्वन्ति वा नवा ॥९३॥**

व्याख्या—यः षण्मासाधिकायुष्कः सन् 'केवलोद्गमं' केवलोत्पत्तिं 'लभते' प्राप्नोति, असौ समुद्घातं निश्चयेन करोति, 'अन्ये' षण्मासमध्यायुष्काः केवलिनः समुद्घातं कुर्वन्ति वाऽपरा न कुर्वन्ति च, तेषां समुद्घातकरणे भजनैव, यदाह—षण्मास्यायुषि शेषे उत्पन्नं येषां केवलज्ञानम्। ते नियमात्समुद्घातिनः शेषाः समुद्घाते भक्तव्याः। १। छम्मासाऊ सेसे, उप्पन्नं जेसि केवलं नाणं। ते नियमा समुग्घाया, सेसा समुग्घाय भइयव्वा ॥ १ ॥" ॥ ९४ ॥ अथ समुद्घातान्निवृत्तो यत्करोति तदाह—

**समुद्घातान्निवृत्तोऽसौ, मनोवाक्काययोगवान्। ध्यायेद्योगनिरोधार्थं, शुक्लध्यानं तृतीयकम् ॥९४॥**

व्याख्या—असौ मनोवाक्काययोगवान् केवली—सयोगिकेवली समुद्घातान्निवृत्तः सन् 'योगनिरोधार्थं' योगनिरोधनिमित्तं तृतीयं शुक्लध्यानं ध्यायेत् ॥ ९४ ॥ अथ तदेव तृतीयं शुक्लध्यानमाह—

**आत्मस्पन्दात्मिका सूक्ष्मा, क्रिया यत्रानिवृत्तिका। तत्तृतीयं भवेच्छुक्लं, सूक्ष्मक्रियानिवृत्तिकम् ॥९५॥**

व्याख्या—तस्मिन्नवसरे तस्य केवलिनस्तृतीयं सूक्ष्मक्रियाऽनिवृत्तिकनाम शुक्लध्यानं भवति, तत्किं ? यत्रात्मस्पन्दात्मिका सूक्ष्मा क्रियाऽनिवृत्तिका भवति, कोऽर्थः ?—आत्मस्पन्दात्मिका क्रियापि सूक्ष्मत्वादनिवृत्तिका भवति, सूक्ष्मत्वं मुक्त्वा पुनः स्थूलत्वं न भजतीत्यर्थः ॥ ९६ ॥ अथ मनोवचःकाययोगानामपि यथा यथा सूक्ष्मत्वं करोति तथा तथा श्लोकचतुष्टयेनाह—

**बादरे काययोगेऽस्मिन्, स्थितिं कृत्वा स्वभावतः। सूक्ष्मीकरोति वाक्चित्तयोगयुग्मं स बादरम् ॥ ९६ ॥ त्यक्त्वा स्थूलं वपुर्योगं, सूक्ष्मवाक्चित्तयोः स्थितिम्। कृत्वा नयति सूक्ष्मत्वं, काययोगं तु बादरम् ॥ ९७ ॥ सुसूक्ष्मकाययोगेऽथ, स्थितिं कृत्वा पुनः क्षणम्। निग्रहं कुरुते सद्यः, सूक्ष्मवाक्चित्तयोगयोः ॥ ९८ ॥ ततः सूक्ष्मे वपुर्योगे, स्थितिं कृत्वा क्षणं हि सः। सूक्ष्मक्रियं निजात्मानं, चिद्रूपं विन्दति स्वयम् ॥ ९९ ॥ चतुर्भिः कुलकम्।**

व्याख्या—स केवली सूक्ष्मक्रियाऽनिवृत्तिनामकतृतीयशुक्लध्यानध्याता अचिन्त्यात्मवीर्यशक्त्याऽस्मिन् बादरे काययोगे

१ न प्र० २ स प्र० ३ पुन क्षण पू०

स्वभावतः स्थितिं कृत्वा 'बादरं वाक्चित्तयोगयुग्मं' स्थूलवचोमनोयोगयुगलं सूक्ष्मीकरोति, ततः 'स्थूलं' बादरं वपुर्योगं त्यक्त्वा सूक्ष्मवाक्चित्तयोः स्थितिं कृत्वा बादरं काययोगं सूक्ष्मत्वं प्रापयति, स सूक्ष्मकाययोगे पुनः 'क्षणं' क्षणमात्रं स्थितिं कृत्वा 'सद्यः' तत्कालं सूक्ष्मवाक्चित्तयोः 'निग्रहं' सर्वथा तत्संभवाभावं कुरुते, ततः सूक्ष्मे काययोगे क्षणं स्थितिं कृत्वा 'हि' स्फुटं स केवली निजात्मानं सूक्ष्मक्रियं चिद्रूपं स्वयमात्मनैव 'विन्दति' अनुभवति इति श्लोकचतुष्टयार्थः ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ अथ यदेव सूक्ष्मक्रियस्य वपुषः स्थैर्यं भवति, तदेव केवलिनां ध्यानं स्यादित्याह—

**छद्मस्थस्य यथा ध्यानं, मनसः स्थैर्यमुच्यते। तथैव वपुषः स्थैर्यं, ध्यानं केवलिनो भवेत् ॥ १०० ॥**

व्याख्या—'यथा' येन प्रकारेण 'छद्मस्थस्य' योगिनो मनसः स्थैर्यं ध्यानमुच्यते, 'तथैव' तेन प्रकारेण 'वपुषः स्थैर्यं' शरीरस्य निश्चलत्वं, केवलिनो ध्यानं भवतीति ॥ १०० ॥ अथ शैलेशीकरणारम्भी सूक्ष्मकाययोगी यत्करोति तदाह—

**शैलेशीकरणारम्भी, वपुर्योगे स सूक्ष्मके। तिष्ठन्नूर्ध्वास्पदं शीघ्रं, योगातीतं यियासति ॥१०१॥**

व्याख्या—केवलिनो ह्रस्वाक्षरपञ्चकोद्गिरणमात्रायुषः शैलवन्निश्चलकायस्य चतुर्थध्यानपरिणतिरूपं शैलेशीकरणं भवति, ततः स केवली 'शैलेशीकरणारम्भी' शैलेशकरणारम्भः 'सूक्ष्मके वपुर्योगे' सूक्ष्मरूपे काययोगे तिष्ठन् 'शीघ्रं' त्वरितं ऊर्ध्वास्पदं 'योगातीतम्' अयोगिगुणस्थानं 'यियासति' यातुमिच्छति ॥ १०१ ॥ अथ भगवान् स केवली सयोगिगुणस्थानान्त्य-

१ ०णारम्भक० प्र०

समये यत्करोति तदाह—

**अस्यान्त्येऽङ्गोदयच्छेदात्, स्वप्रदेशघनत्वतः। करोत्यन्त्याङ्गसंस्थानत्रिभागोनावगाहनम् ॥१०२॥**

व्याख्या—'अस्य' सयोगिकेवलिगुणस्थानस्य 'अन्त्ये' अन्त्यसमये औदारिकद्विकमस्थिरद्विकं विहायोगतिद्विकं प्रत्येकत्रिकं संस्थानषट्कं अगुरुलघुचतुष्कं वर्णादिचतुष्कं निर्माणकर्म तैजसकार्मणद्वयं प्रथमं संहननं स्वरद्विकमेकतरं वेदनीयं चेति त्रिंशत्प्रकृतीनामुदयव्यवच्छेदो भवति, ततोऽङ्गोपाङ्गोदयव्यवच्छेदादन्त्याङ्गसंस्थानावगाहनायाः सकाशात्त्रिभागोनावगाहनां करोति, कस्मात्?—'स्वप्रदेशघनत्वतः' चरमाङ्गोपाङ्गगतनासिकादिच्छिद्राणां पूरणेन स्वप्रदेशानाम्-आत्मप्रदेशानां घनत्वं-निबिडत्वं भवति तस्मात्स्वप्रदेशघनत्वतस्त्रिभागोनत्वं भवतीति। सयोगिगुणस्थानस्थो जीव एकविधबन्धक उपान्त्यसमयं यावत्, ज्ञानान्तरायदर्शनचतुष्कोदयव्यवच्छेदाद् द्विचत्वारिंशत्प्रकृतिर्वेदयिता, निद्राप्रचलाज्ञानान्तरायदर्शनचतुष्करूपषोडशप्रकृतीनां सत्ताव्यवच्छेदात्पञ्चाशीतिसत्ताको भवति ॥ १०२ ॥ इति सयोगिगुणस्थानम् १३ अथायोगिगुणस्थानस्य स्थितिमाह—

**अथायोगिगुणस्थाने, तिष्ठतोऽस्य जिनेशितुः। लघुपञ्चाक्षरोच्चारप्रमितैव स्थितिर्भवेत् ॥१०३॥**

व्याख्या—'अथ' त्रयोदशगुणस्थानानन्तरं 'अयोगिगुणस्थानके' चतुर्दशे 'अस्य जिनेशितुः' जिनेन्द्रस्य 'तिष्ठतः' अवस्थितस्य 'लघुपञ्चाक्षरोच्चारप्रमितैव' 'अइउऋऌ' वर्णपञ्चकसमुच्चरणकालतुल्यैव स्थितिर्भवति ॥ १०३ ॥ अथायोगिगुणस्थाने ध्यानसंभवमाह—

**तत्रानिवृत्तिशब्दान्तं, समुच्छिन्नक्रियात्मकम्। चतुर्थं भवति ध्यानमयोगिपरमेष्ठिनः ॥१०४॥**

व्याख्या—'तत्र' तस्मिन्नयोगिगुणस्थानेऽयोगिपरमेष्ठिनश्चतुर्थं ध्यानं 'समुच्छिन्नक्रियात्मकं' वक्ष्यमाणस्वरूपं भवति, कथंभूतं? 'अनिवृत्तिशब्दान्तं' अनिवृत्तिशब्दोऽन्ते यस्य तत्समुच्छिन्नक्रियानिवृत्तिनामकं चतुर्थं ध्यानमिति ॥ १०४ ॥

अथास्य चतुर्थध्यानस्य स्वरूपमाह—

**समुच्छिन्ना क्रिया यत्र, सूक्ष्मयोगात्मिकाऽपि हि। समुच्छिन्नक्रियं प्रोक्तं, तद् द्वारं मुक्तिवेश्मनः ॥१०५॥**

व्याख्या—'यत्र' ध्याने 'सूक्ष्मयोगात्मिकाऽपि' सूक्ष्मकाययोगरूपाऽपि क्रिया 'समुच्छिन्ना' सर्वथा निवृत्ता तत्समुच्छिन्नक्रियं नाम चतुर्थं ध्यानं प्रोक्तं, कथंभूतं? 'मुक्तिवेश्मनः' सिद्धिसौधस्य 'द्वारं' द्वारोपममिति ॥ १०५ ॥ अथ शिष्येण कृतं प्रश्नद्वयमाह—

**देहास्तित्वेऽप्ययोगित्वं, कथं? तद् घटते प्रभो!। देहाभावे तथा ध्यानं, दुर्घटं घटते कथम् १०६**

व्याख्या—शिष्यः पृच्छति, हे प्रभो! 'देहास्तित्वे' सूक्ष्मेऽपि वपुर्योगास्तित्वे योगित्वेऽयोगित्वमस्तीति तत्कथं घटते? इत्येकः प्रश्नः, तथा चेद्यदि देहाभावः सर्वथा काययोगाभावः संजातस्तदा देहाभावे (ध्यानं) दुर्घटं कथं घटते? इति द्वितीयः प्रश्नः ॥ १०६ ॥ अथाचार्यः प्रश्नद्वयस्योत्तरं पद्यद्वयेनाह—

---

१ ०वि हि प्र० २ शिष्यकृतं प्र०

**वपुषोऽत्रातिसूक्ष्मत्वाच्छीघ्रंभाविक्षयत्वतः। कायकार्यासमर्थत्वात्, सति कायेऽप्ययोगता ॥१०७॥**

**तच्छरीराश्रयाद्ध्यानमस्तीति न विरुध्यते। निजशुद्धात्मचिद्रूपनिर्भरानन्दशालिनः ॥१०८॥ युग्मम्**

व्याख्या—आचार्य आह-भोः शिष्य! 'अत्र' अयोगिगुणस्थाने काये सूक्ष्मे वपुर्योगे सत्यप्ययोगता प्रोच्यते, कस्मात्? 'वपुषः' कायस्यातिसूक्ष्मत्वात्-सूक्ष्मक्रियारूपत्वादिति, तथा 'शीघ्रंभाविक्षयत्वतः' क्षयस्य भावः क्षयत्वं, शीघ्रं भाविक्षयत्वं यस्य तच्छीघ्रंभाविक्षयत्वं तस्मात्, तथा 'कायकार्यासमर्थत्वात्' देहकृत्यसाधनाक्षमत्वात् काये सत्यप्ययोगता भवतीति, तथा 'तच्छरीराश्रयात्' तादृग्देहास्तित्वाश्रयणात् ध्यानमस्तीति 'न विरुध्यते' न विरोधमाप्नोति, कस्य? अयोगिगुणस्थानवर्तिनो भगवतः परमेष्ठिनः, कथंभूतस्य? 'निजशुद्धात्मचिद्रूपनिर्भरानन्दशालिनः' स्वकीयनिर्मलपरमात्मचिद्रूपतन्मयत्वोत्पन्ननिर्भरपरमानन्दविराजमानस्येति ॥ १०८ ॥ अथ ध्यानस्य निश्चयव्यवहारत्वमाह—

**आत्मानमात्मनाऽऽत्मैव, ध्याता ध्यायति तत्त्वतः। उपचारस्तदन्यो हि, व्यवहारनयाश्रितः १०९**

व्याख्या—'तत्त्वतो' निश्चयनयादात्मैव ध्याता 'आत्मनैव' करणभूतेन कृत्वा आत्मानमेव कर्मतापन्नं ध्यायति, 'हि' स्फुटं 'तदन्यो' यः कश्चिदुपचारोऽष्टाङ्गयोगप्रवृत्तिलक्षणः स सकलोऽपि व्यवहारनयाश्रितो ज्ञेयः ॥ १०९ ॥ अथायोगिन एवोपान्त्यसमयकृत्यमाह—

चिद्रूपात्ममयोऽयोगी, ह्युपान्त्यसमये द्रुतम् । युगपत्क्षपयेत्कर्मप्रकृतीनां द्विसप्ततिम् ॥ ११० ॥

व्याख्या—'चिद्रूपात्ममयः' केवलात्ममयः 'अयोगी' अयोगिगुणस्थानवर्त्ती 'हि' स्फुटमुपान्त्यसमये 'द्रुतं' शीघ्रं युगपत्समकालं कर्मप्रकृतीनां द्विसप्ततिं 'क्षपयेत्' क्षयं प्रापयेदिति ॥ ११० ॥ अथ ता द्विसप्ततिकर्मप्रकृतीर्नामतः श्लोकपञ्चकेनाह—

देहबन्धनसङ्घाताः, प्रत्येकं पञ्च पञ्च च। अङ्गोपाङ्गत्रयं चैव, षट्कं संस्थानसंज्ञकम् ॥ १११ ॥ वर्णाः पञ्च रसाः पञ्च, षट्कं संहनमात्मकम्। स्पर्शाष्टकं च गन्धौ द्वौ, नीचानादेयदुर्भगम् ॥११२॥ तथाऽगुरुलघुत्वाख्यमुपघातोऽन्यघातिता । निर्माणमपर्याप्तत्वमुच्छ्वासश्चायशस्तथा ॥११३॥ विहायोगतियुग्मं च, शुभास्थैर्यद्वयं पृथक्। गतिर्दिव्याऽऽनुपूर्वी च, प्रत्येकं च स्वरद्वयम् ॥११४॥ वेद्यमेकतरं चेति, कर्मप्रकृतयः खलु । द्वासप्ततिरिमा मुक्तिपुरीद्वारार्गलोपमाः ॥११५॥ पञ्चभिः कुलकम् ।

व्याख्या—देहपञ्चकं ५ बन्धनपञ्चकं १० संघातनपञ्चकं १५ अङ्गोपाङ्गत्रयं १८ संस्थानषट्कं २४ वर्णपञ्चकं २९ रसपञ्चकं ३४ संहननषट्कं ४० स्पर्शाष्टकं ४८ गन्धद्वयं ५० नीचैर्गोत्रं ५१ अनादेयं ५२ दुर्भगत्वं ५३ अगुरुलघुत्वं ५४ उपघातत्वं ५५ पराघातत्वं ५६ निर्माणत्वं ५७ अपर्याप्तत्वं ५८ उच्छ्वासत्वं ५९ अयशस्त्वं ६० विहायोगतिद्वयं ६२ शुभाशुभद्वयं ६४ स्थैर्यास्थैर्यद्वयं ६६ देवगतिः ६७ देवानुपूर्वी ६८ प्रत्येकनाम ६९ सुस्वरदुःस्वरद्वयं ७१ एकतरं वेद्यं ७२ चेति द्वासप्ततिः कर्मप्रकृतयो मुक्तिपुरीद्वारार्गलारूपा उपान्त्ये समये क्षपयति ॥ १११ ॥ ११२ ॥ ११३ ॥ ११४ ॥ ११५ ॥ अथायोग्यन्त्ये समये याः प्रकृतीः क्षपयित्वा यत्करोति तत् श्लोकत्रयेणाह—

१ ह्युपान्त्ये प्र० २ ०दुर्भगा

अन्त्ये ह्येकतरं वेद्यमादेयत्वं च पूर्णता। त्रसत्वं बादरत्वं हि, मनुष्यायुश्च सयशः ॥ ११६ ॥ नृगतिश्चानुपूर्वी च, सौभाग्यं चोच्चगोत्रताम् । पञ्चाक्षत्वं तथा तीर्थकृन्नामेति त्रयोदश ॥ ११७ ॥ क्षयं नीत्वा स लोकान्तं, तत्रैव समये व्रजेत् । लब्धसिद्धत्वपर्यायः, परमेष्ठी सनातनः ॥११८॥ त्रिभिर्विशेषकम्।

व्याख्या—सोऽयोगी 'हि' स्फुटमन्त्ये समये एकतरं वेद्यं १ आदेयत्वं २ पर्याप्तत्वं ३ त्रसत्वं ४ बादरत्वं ५ मनुष्यायुः ६ सयशः ७ मनुष्यगतिः ८ मनुष्यानुपूर्वी ९ सौभाग्यं १० उच्चैर्गोत्रं ११ पञ्चेन्द्रियजातिः १२ तीर्थकृन्नामेति १३ त्रयोदश प्रकृतीः क्षयं नीत्वा तत्रैव समये 'लब्धसिद्धत्वपर्यायः' प्राप्तसिद्धत्वनामा परमेष्ठी सनातनः स ततो भगवान् शाश्वतः 'लोकान्तं' लोकपर्यन्तं 'व्रजेद्' गच्छेदिति । तथाऽयोगिगुणस्थानस्थो जीवोऽवन्धकःस्त्वथैकतरवेद्य १ आदेय २ यशः ३ सुभग ४ त्रसत्रिक- ७ पञ्चेन्द्रियत्व ८ मनुष्यगति ९ मनुष्यानुपूर्वी १० मनुष्यायुः ११ उच्चैर्गोत्र १२ तीर्थकृदिति १३ त्रयोदशप्रकृतिवेदयिता,

१ च प्र० २ पञ्चेन्द्रियत्वं प्र०

अन्त्यसमयद्वयादर्वाक् पञ्चाशीतिसत्ताकः, उपान्त्ये समये त्रयोदशप्रकृतिसत्ताकोऽन्त्यसमयेऽसत्ताकः ॥ ११६ ॥ ११७ ॥ ११८ ॥ इत्ययोगिनश्चतुर्दशम् ॥ निष्कर्मात्मा तस्मिन्नेव समये लोकान्तं कथं यातीत्याशङ्क्याह—

पूर्वप्रयोगतोऽसङ्गभावाद्वन्धविमोक्षतः । स्वभावपरिणामाच्च, सिद्धस्योर्द्ध्वगतिर्भवेत् ॥ ११९ ॥

व्याख्या—'सिद्धस्य' निष्कर्मात्मन ऊर्ध्वगतिर्भवति, कस्मात् ?—'पूर्वप्रयोगतः' अचिन्त्यात्मवीर्येणोपान्त्यसमयद्वये पञ्चाशीतिकर्मप्रकृतिक्षपणाय पूर्वं यः प्रयुक्तः प्रयोगो—व्यापारः प्रयत्नस्तस्मादित्येको हेतुः, न सङ्गोऽसङ्गस्तस्य भावोऽसङ्गभावस्तस्मात्, कर्मोपग्रहरूपसङ्गाभावात् इति द्वितीयो हेतुः, बन्धाद्विमोक्षो बन्धविमोक्षस्तस्माद्गाढतरबन्धनविमुक्तितः इति तृतीयो हेतुः, स्वभावेन परिणमनं स्वभावपरिणामस्तस्माच्चथास्वाभाव्यादिति चतुर्थो हेतुः ॥ ११९ ॥ अथैतद्धेतुचतुष्टयं सदृष्टान्तं क्रमेण श्लोकचतुष्टयेनाह—

कुलालचक्रदोलेषुमुख्यानां हि यथा गतिः । पूर्वप्रयोगतः सिद्धा, सिद्धस्योर्द्ध्वगतिस्तथा ॥१२०॥ मृल्लेपसङ्गनिर्मोक्षाद्यथा दृष्टाऽप्स्वलाबुनः । कर्मसङ्गविनिर्मोक्षात्तथा सिद्धगतिः स्मृता ॥१२१॥ एरण्डफलबीजादेर्बन्धच्छेदाद्यथा गतिः । कर्मबन्धनविच्छेदात्, सिद्धस्यापि तथेक्ष्यते ॥ १२२ ॥ यथा-

१ ०मद्गत्या० प्र०

धस्तिर्यगूर्ध्वं च, लेप्टुवाय्वग्निवीचयः । स्वभावतः प्रवर्त्तन्ते, तथोर्ध्वगतिरात्मनः ॥ १२३ ॥ चतुर्भिः कलापकम् ॥

व्याख्या—' कुलालचक्रं ' कुम्भकारोपकरणं ' दोला ' प्रेङ्खा ' इषुः ' बाणस्तन्मुख्यानां यन्त्रगोफणमुक्तगोलकादीनां गतिः ' हि ' स्फुटं ' यथा ' येन प्रकारेण पूर्वप्रयोगतः ' सिद्धा ' प्रसिद्धा ' तथा ' तेन प्रकारेण पूर्वप्रयोगतः सिद्धस्योर्ध्वगतिः सिद्धेत्येको दृष्टान्तः, तथा ' मृल्लेपसङ्गनिर्मोक्षात् ' मृत्तिकामलेपसङ्गतिमुक्तेः ' अप्सु ' जलेषु ' अलाबुनः ' तुम्बकफलस्य यथोर्ध्वगतिर्दृष्टा, तथा कर्मलेपसङ्गनिर्मोक्षात्सिद्धानामूर्ध्वगतिः स्मृतेति द्वितीयहेतुदृष्टान्तः, तथा ' एरण्डफलबीजादेः ' एरण्डफलबीजस्य, आदिशब्दाच्छणबीजादेर्बन्धच्छेदाद्यथोर्ध्वगतिर्भवेत्, कर्मबन्धनविच्छेदात्सिद्धस्यापि तथैवोर्ध्वगतिर्भवतीति तृतीयहेतुदृष्टान्तः, तथा ' लेष्टुवाय्वग्निवीचयः ' इष्टकाखण्डसमीरणवह्नयः स्वभावत एव यथाऽधस्तिर्यगूर्ध्वं क्रमेण प्रवर्त्तन्ते, तथाऽऽत्मनोऽपि स्वभावादेवो-र्ध्वगतिर्भवतीति चतुर्थहेतुदृष्टान्तः ॥ १२०–१२३ ॥ अथाधस्तिर्यग्लोकेषु निष्कर्मात्मनो गतिनिषेधमाह—

न चाधो गौरवाभावान्न तिर्यक् प्रेरकं विना । न च धर्मास्तिकायस्याभावाल्लोकोपरि व्रजेत् ।१२४।

व्याख्या—सिद्धात्माऽधस्तान्न गच्छति, कस्मात् ?–' गौरवाभावात्, ' कर्मजनितगुरुत्वाभावात्, तथा ' प्रेरकं विना ' प्रेरककर्माभावान्न तिर्यग् गच्छति, तथा निष्कर्मा लोकोपरि न व्रजेदलोकमध्ये न गच्छेत्, कस्मात् ?–धर्मास्तिकायस्याभावात्,

१ इत्येकहेतुदृष्टान्तः २ लोप० प्र० ३ ०भावत प्र०

लोके हि जीवपुद्गलयोर्गतिहेतुर्धर्मास्तिकायो भवति, मत्स्यादीनां सलिलवत्, तस्य धर्मास्तिकायस्यालोकेऽसम्भवात् सिद्धात्मा लोकोपरि न व्रजेदिति ॥ १२४ ॥ अथ सिद्धानां स्थितिर्यथा सिद्धिशिलोपरि लोकान्तेऽस्ति तथा श्लोकद्वयेनाह—

मनोज्ञा सुरभिस्तन्वी, पुण्या परमभासुरा । प्राग्भारा नाम वसुधा, लोकमूर्ध्नि व्यवस्थिता ॥ १२५ ॥ नृलोकतुल्यविष्कम्भा, सितच्छत्रनिभा शुभा । ऊर्ध्वं तस्याः क्षितेः सिद्धा, लोकान्ते समवस्थिताः ॥ १२६ ॥ युग्मम् ॥

व्याख्या—प्राग्भारा नाम वसुधा सिद्धिशिलेतिख्याता पृथ्वी ' लोकमूर्ध्नि ' चतुर्दशरज्ज्वात्मकलोकशिरसि व्यवस्थिता वर्त्तते, तस्याः क्षितेरूर्ध्वं ' लोकान्ते ' लोकप्रान्तस्पृष्टात्मप्रदेशाः सिद्धाः समवस्थिता भवन्ति, कथंभूता क्षितिः ?–' मनोज्ञा ' मनोहारिणी, पुनः कथंभूता ?–' सुरभिः ' कर्पूरपूराधिकसौरभ्या, ' तन्वी ' सूक्ष्मावयवत्वात्कोमला, न तु स्थूलावयवत्वात्कर्कशा, ' पुण्या ' पवित्रा ' परमभासुरा ' प्रकृष्टतेजोभासुरा ' नृलोकतुल्यविष्कम्भा ' मनुष्यक्षेत्रसमविस्तारा ' सितच्छत्रनिभा ' श्वेतच्छत्राकारा, परमोत्तानच्छत्रोपमा, ' शुभा ' सकलशुभोदयमयीति, सा प्राग्भारा वसुधा सर्वार्थसिद्धाद् द्वादशभिर्योजनैर्भवति, मध्यदेशे साऽष्टयोजना, प्रान्तेषु तीक्ष्णधारोपमा, तस्याः शिलाया उपरि एकेन योजनेन लोकान्तं, तस्य योजनस्य यश्चतुर्थः क्रोशस्तस्य

१ प्रति प्र० २ ०जनकन्दा प्र० ३ ततस्तस्य प्र०

षष्ठे भागे सिद्धानामवगाहना भवति, यदाह—*ईसीपब्भाराए, उवरिं खलु जोयणंमि जो कोसो । कोसस्स य छब्भाए, सिद्धाणोगाहणा भणिया ॥ १ ॥ तथाहि—द्विसहस्रधनुःप्रमाणस्य क्रोशस्य षष्ठे भागे धनुषां त्रीणि शतानि त्रयस्त्रिंशदधिकानि भवन्ति, धनुस्त्रिभागद्वयं च, तत उत्कृष्टतः सिद्धात्मप्रदेशानामवगाहनाऽप्येतावत्येव भवति नाधिकेति, यदाह—×तिन्नेव धणुसयाइं, धणु तित्तीस च धणु तिभागोणं । इअ एसा उक्कोसा, सिद्धाणोगाहणा भणिया ॥१२५॥१२६॥ अथ सिद्धात्मप्रदेशानामवगाहनाऽऽकारमाह—

कालावसरसंस्थाना, या मूषागतसिक्थका । तत्रस्थाकाशसंकाशाऽऽकारा सिद्धावगाहना ।१२७।

व्याख्या—या ' मूषागतसिक्थका ' गलितमदना ' कालावसरसंस्थाना ' अन्तकालसमयाकारा भवति, तत्रस्थो य आकाशस्तत्संकाशाकारा गलितमदनमूषागताकाशसदृशाकृतिः सिद्धानामवगाहना भवतीति ॥ १२७ ॥ अथ सिद्धानां ज्ञानदर्शनविषयमाह—

ज्ञातारोऽखिलतत्त्वानां, द्रष्टारश्चैकहेलया । गुणपर्याययुक्तानां, त्रैलोक्योदरवर्त्तिनाम् ॥ १२८ ॥

व्याख्या—' त्रैलोक्योदरवर्त्तिनां ' चतुर्दशरज्ज्वात्मकलोकमध्यवर्त्तमानानां ' गुणपर्याययुक्तानां ' पूर्वोक्तस्वरूपैर्गुणैः

१ ०षणस्य प्र०

* ईषत्प्राग्भाराया उपरि खलु योजने यः क्रोशः । क्रोशस्य च षड्भागे सिद्धानामवगाहना भणिता ॥ १ ॥

× त्रीण्येव धनुःशतानि धनूंषि त्रयस्त्रिंशच्च धनुः तृतीयभागोनम् । इत्येषोत्कृष्टा सिद्धानामवगाहना भणिता ॥ १ ॥

पर्यायैश्चोपलक्षितानां 'अखिलतत्त्वानां' समस्तजीवाजीवादिपदार्थानां ते ज्ञातारो भवन्ति, विशेषोपयोगतया परिच्छेदका भवन्ति, न केवलं ज्ञाताः, समयान्तरं 'एकहेलया' सामान्योपयोगतया द्रष्टारश्च भवन्ति ॥ १२८ ॥ अथ सिद्धानां गुणाष्टकं सहेतुकं श्लोकत्रयेणाह—

**अनन्तं केवलज्ञानं, ज्ञानावरणसंक्षयात् । अनन्तं दर्शनं चैवं, दर्शनावरणक्षयात् ॥ १२९ ॥**
**शुद्धसम्यक्त्वचारित्रे, क्षायिके मोहनिग्रहात् । अनन्ते सुखवीर्ये च, वेद्यविघ्नक्षयात्क्रमात् ॥ १३० ॥**
**आयुषः क्षीणभावत्वात्, सिद्धानामक्षया स्थितिः । नामगोत्रक्षयादेवामूर्त्तानन्ताऽवगाहना ॥ १३१ ॥**
**त्रिभिर्विशेषकम्**

व्याख्या—सिद्धानामनन्तं केवलज्ञानं भवति, कस्मात्?—ज्ञानावरणसंक्षयात्, अनन्तं दर्शनं चापि भवति, कस्मात् ?—दर्शनावरणक्षयात्, सिद्धानां शुद्धसम्यक्त्वचारित्रे भवतः, कथंभूते?—क्षायिके, कस्मात्?—मोहनिग्रहात्, दर्शनमोहनीयचारित्रमोहनीययोः क्षीणत्वात्, अनन्ते सुखवीर्ये च भवतः, कस्मात् ?—वेद्यविघ्नक्षयात्, वेद्यक्षयादनन्तं सुखं, विघ्नक्षयादनन्तं वीर्यमित्यर्थः, सिद्धानामक्षया स्थितिर्भवति, कस्मात् ?—आयुषः क्षीणभावत्वात्, मूर्त्तत्वेनानन्तानामवगाहो मूर्त्तानन्तावगाहना तस्या अभावोऽमूर्त्तानन्ताव-

१ सिद्धा मुक्ता प्र० २ समयान्तं प्र० ३ चापि प्र० ४ क्षायिके शुद्धसम्यक्त्वचारित्रे प्र० ५ गति प्र०

गाहना, सिद्धानाममूर्त्तानन्तावगाहना भवति, कस्मात् ?- नामगोत्रक्षयादेवेति ॥ १२९ ॥ १३० ॥ १३१ ॥ अथ सिद्धानां यत्सौख्यं तदाह—

**यत्सौख्यं चक्रिशक्रादिपदवीभोगसंभवम् । ततोऽनन्तगुणं तेषां, सिद्धावक्लेशमव्ययम् ॥ १३२ ॥**

व्याख्या—चक्रिशक्रादिपदवीभोगसंभवं यत्सौख्यमुत्कृष्टं वर्ण्यते ततोऽपि 'तेषां' सिद्धानामनन्तगुणं भवति, क?—'सिद्धौ' मुक्तौ, कथंभूतं सौख्यं ?—'अक्लेशं' अविद्यास्मितरागद्वेषाभिनिवेशाः क्लेशाः, ते न विद्यन्ते यत्र तदक्लेशं, पुनः कथम्भूतं ?—'अव्ययं' न व्येति—न चलति स्वस्वभावादिति अव्ययमक्षयमित्यर्थः ॥ १३२ ॥ अथ तैः सिद्धैर्भगवद्भिर्यत्प्राप्तं तत्सारमाह—

**यदाराध्यं च यत्साध्यं, यद् ध्येयं यच्च दुर्लभम् । चिदानन्दमयं तत्तैः, संप्राप्तं परमं पदम् ॥ १३३ ॥**

व्याख्या—'तैः' सिद्धैर्भगवद्भिस्तत्परमं पदं प्राप्तं, तत्किम् ? 'यदाराध्यं' आराधकैर्यत्पदं समाराध्यते, तथा 'यत्साध्यं' साधकैः पुरुषैः सम्यग्ज्ञानदर्शनचारित्रादिभिः कृत्वा यत्साध्यते, तथा 'यद्ध्येयं' ध्यायकैर्योगिभिर्यत्सदैव नानाविधध्यानोपायैर्ध्यायते, तथा 'यच्च दुर्लभं' यत्पदमभव्यानां सर्वथा दुर्लभं, भव्यानामपि केषाञ्चिदप्राप्तसामग्रीविशेषाणां सर्वथा दुर्लभं, दूरभव्यानां तु कष्टलभ्यमित्येवं यद् दुर्लभं तदपि तैर्धन्यैर्भगवद्भिः सिद्धैर्लब्धमिति. कथम्भूतं तत्परमं पदं ?—'चिदानन्दमयं' चिद्रूपपरमानन्दमयमिति ॥ १३३ ॥ अथ मुक्तेः स्वरूपं वृहद्वृत्तेनाह—

१ गत प्र० २ वृहद्वत्ताह प्र०

**नात्यन्ताभावरूपा न च जडिममयी व्योमवद्व्यापिनी नो, न व्यावृत्तिं दधाना विषयसुखघना नेष्यते सर्वविद्भिः । सद्रूपात्मप्रसादाद् दृगवगमगुणौघेन संसारसारा, निःसीमाऽत्यक्षसौख्योदयवसतिरनिःपातिनी मुक्तिरुक्ता ॥ १३४ ॥**

व्याख्या—मुक्तिः कैश्चिदत्यन्ताभावरूपा मन्यते, अन्यैर्जडिममयी—ज्ञानाभावमयी मन्यते, अपरैर्व्योमवद्व्यापिनी मन्यते, एकैर्व्यावृत्तिं—पुनरावृत्तिं दधाना मन्यते, अपरैः क्लिष्टकर्मभिर्विषयसुखघना—विषयसुखमयी मुक्तिरुच्यते, सर्वविद्भिस्तु श्रीसर्वज्ञैरभावरूपा जडिममयी व्योमवद्व्यापिनी व्यावृत्तिरूपा विषयसुखमयी वा मुक्तिर्नेष्यते, किंतु 'सद्रूपात्मप्रसादात्' विद्यमानचिद्रूपात्मप्रसत्तितो 'दृगवगमगुणौघेन' सम्यग्दर्शनज्ञानगुणसमूहेन कृत्वाऽसारभूतसंसारात्सारभूता, 'निस्सीमात्यक्षसौख्योदयवसतिः' अनन्तातीन्द्रियानन्दानुभवस्थानं, 'अनिःपातिनी' निपातरहिता 'मुक्तिः' सिद्धिः'उक्ता' गदितेति ॥ १३४ ॥ अथ पूर्वर्षिरचितबहुशास्त्रेभ्यो गुणस्थानार्थसंगतश्लोकसंग्रहेण प्रकरणोद्धारमाह—

**इत्युध्धृतो गुणस्थानरत्नराशिः श्रुतार्णवात् । पूर्वर्षिसूक्तिनावैव, रत्नशेखरसूरिभिः ॥ १३५ ॥**

व्याख्या—'इति' पूर्वोक्तप्रकारेण'उध्धृतः' प्रकटीकृतः कर्मतापन्नो 'गुणस्थानरत्नराशिः' गुणस्थानान्येव रत्नानि गुण-

१ नेष्यते प्र०

स्थानरत्नानि तेषां राशिर्गुणस्थानरत्नराशिः, कस्मात् ?–'श्रुतार्णवात्' आगमरत्नाकरात्, कयेव कृत्वा ?–'पूर्वर्षिसूक्तिनावेव' पूर्वर्षीणां सूक्तिः–शोभनोक्तिः पद्यरचना सैव नौस्तया पूर्वर्षिसूक्तिनावेव कृत्वा न त्वात्मकृतैः श्लोकैः, प्रायः पूर्वर्षिरचितैरेवेत्यर्थः, कैरुद्धृतः ?–'रत्नशेखरसूरिभिः' बृहद्गच्छीयश्रीवज्रसेनसूरिशिष्यैः श्रीहेमतिलकसूरिपट्टप्रतिष्ठितैः श्रीरत्नशेखरसूरिभिः स्वपरोपकाराय प्रकरणरूपतया प्रकटित इत्यर्थः ॥ १३५ ॥ इतिश्री गुणस्थानक्रमारोहवृत्तिः ।

---

१ तैः श्लोकै० प्र०

इति श्रीबृहद्गच्छीयरत्नशेखरसूरिसूत्रितो गुणस्थानक्रमारोहः सवृत्तिकः

॥ श्री शंखेश्वर पार्श्वनाथाय नमः ॥

## सूरितिलक श्री रत्नशेखरसूरि विरचित

स्वोपज्ञवृत्ति समेत

# गुरुगुणषट्त्रिंशत्षट्त्रिंशिका

पुनर्मुद्रण प्रकाशक
**दिव्य दर्शन ट्रस्ट**
C/o कुमारपाल वि शाह
६८-गुलालवाडी, मुबई-४०० ००४

वीर स २५०८
वि स. २०३८

मूल्य
५-०० रु.

॥ अर्हम् ॥

॥ न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरीश्वरेभ्यो नमः ॥

श्री रत्नशेखरसूरिकृतस्वोपज्ञदीपिकया विवृत्त्या समेतं

# गुरुगुणषट्त्रिंशत्षट्त्रिंशिकाकुलकम् ।

श्रीमदर्हंपदं जीयान्, महोदयमहोज्ज्वलम् । जगत्त्रितयसाम्राज्यं, यत्प्रसादर्द्धिवर्णिका ॥ १ ॥
कलाकुलनयज्ञान–संपद्विस्तारकारकः । श्रीयुगादिजिनो भूयाद्, भविनां भूरिभूतये ॥ २ ॥
भूर्भुवःस्वस्त्रयीशार्च्यः, कल्याणार्णवचन्द्रमाः । निरस्ताशेषदोषः श्री–शान्तिः शान्तिं तनोतु वः ॥ ३ ॥
स श्रीनेमिजिनो जीयात्, श्यामलाऽपि यदङ्गरुक् । सुधाञ्जनशलाकेव, सुदृशां दृग्विशुद्धये ॥ ४ ॥
यन्नामस्मृतिमात्रेण, मनोऽभीष्टार्थसिद्धयः । प्राणिनां स्युः सदा स श्री-पार्श्वनाथोऽस्तु वः श्रिये ॥ ५ ॥
सर्वज्ञोऽतिशयश्रीमान्, प्रातिहार्यैरलंकृतः । वर्धमानो जिनो भूयाद्, वर्द्धमानसमृद्धये ॥ ६ ॥
श्रीमन्तोऽजितनाथाद्याः, सर्वेऽन्येऽपि जिनेश्वराः । सन्तु श्रेयःश्रियः सिद्धै, वृद्धै च सुखसंपदाम् ॥७॥
अहंपूर्विकया सर्वा, यं सेवन्ते सुलब्धयः । स गुरुर्गौतमो मे स्ताद्, अद्भुताभीष्टलब्धये ॥ ८ ॥
अर्हद्भिःसरसीभवं गणधरादित्यप्रभोद्भासितं, त्रैलोक्येश्वरषट्पदैरविरतं चाघ्रातसारं मुदा ।
हस्ताद् दृष्टिपथान्मुखाच्च मुनिभिर्नित्यं न यन्मुच्यते, तज्जैनागमपङ्कजं मम मनोहंसस्य भूयान्मुदे ॥९॥

श्रीशारदा शारदशर्वरीश–विभाभिरामोज्ज्वलकायकान्तिः ।
ममोज्ज्वलध्यानपथावतीर्णा, वर्णानुपूर्वीं विमलां तनोतु ॥ १० ॥
श्रीवज्रसेनाभिधसूरिराजैः, सुसूत्रधारैरिव यैर्व्यधायि ।
अयं जनोऽप्यश्मसमोऽभिवन्द्य–स्तेभ्यो गुरुभ्योऽस्तु मम प्रणामः ॥ ११ ॥

एवं देवगुरुभ्यः, कृतप्रणामोऽहमल्पबुद्धिरपि । विवृणोमि सुगुरुगुणषट्–त्रिंशत्षट्त्रिंशिकाकुलकम् ॥१२॥

इह हि शिष्टसमयानुसारतो मङ्गलार्थमभीष्टदैवतनमस्काराविर्भाविकां संबन्धादिगर्भां च सूत्रस्येमामादिगाथामाह—

१ क–पुस्तके " जीयाद् " ॥

वीरस्स पए पणमिय, सिरिगोयमपमुहगणहराणं च । गुरुगुणछत्तीसीओ, छत्तीसं कित्तइस्सामि ॥१॥

व्याख्या—वीरस्य पादौ प्रणम्य गुरुगुणषट्त्रिंशिकाः षट्त्रिंशत्संख्याकाः कीर्तयिष्यामीति संटङ्कः । तत्र विशेषेण ईरयति प्रेरयत्यष्टकर्माणीति वीरः । यदाह—" विदारयति यत्कर्म, तपसा च विराजते । तपोवीर्येण युक्तश्च, तस्माद्वीर इति स्मृतः ॥ १ ॥" तस्य च श्रीवीरस्य श्रीसिद्धार्थभूपालविशालकुलकमलमार्तण्डमण्डलस्य श्रीत्रिशलादेवीकुक्षिसरसीरुहराजहंसस्य बाललीलादलितप्रसर्पद्दर्पसुपर्वाखर्वगर्वावदातसंतुष्टाखिलाखण्डलाद्यमरवृन्दपरिकल्पितवीर इतिनामधेयस्य तीर्थाधिनाथस्य पादौ प्रणम्य; तथा श्रीगौतमप्रमुखगणधराणां च श्रीगौतमसद्गोत्रश्रीमदिन्द्रभूतिप्रभृत्येकादशगणनायकानां च । ते च इमे–' पढमित्थ इंदभूई, बीए पुण होइ अग्गिभूइत्ति । तइए अ वाउभूई, तओ विअत्ते सुहम्मे अ ॥१॥ मंडिअमोरियपुत्ते, अकंपिए चेव अयलभाया य । मेअज्जे अ पभासे, गणहरा हुंति वीरस्स ॥ २ ॥' एतेषां च पादौ प्रणम्य । एते च वक्ष्यमाणनिःशेषगुरुगुणानां आधारभूतत्वाद्विशेषतश्चात्र प्रणामार्हाः । तथा च " गृणाति सद्धर्मम् " इति गुरुः । स च गुणवानेव तत्त्वतो विशुद्धसम्यक्तत्त्वावबोधजनकसद्धर्मदेशनादिसमर्थो भवति । यदाह—" आयारे वट्टंतो, आयारपरूवणाअ संकंतो । आयारपरिब्भट्ठो, सोऽसुद्धपरूवणे भइओ ॥ १ ॥ गुणसुट्ठिअस्स वयणं, महुघयसित्तु व्व पावओ भाइ । गुणहीणस्स न रेहइ, नेहविहूणो जह पईवो ॥ २ ॥ " अपि च—" वाङ्मात्रसाराः परमार्थबाह्या, न दुर्लभाश्चित्रकरा मनुष्याः ।

१ वक्ष्यमाणा हि निरुक्तिरिति नाविष्यति मध्यगता निरुक्तिदर्शिका पङ्क्तिर्नतूपलभ्यते पुस्ताप्यादर्शे इति विरवाचा संमत् भविष्यत्यन्यो वा सूत्ररामिप्रायोऽगोचरो न ॥

२ आचारे वर्तमान आचारप्ररूपणायां संक्रान्तः आचारपरिभ्रष्ट. अशुद्धप्ररूपणायां भाज्य· ॥ १ ॥ ३ ब–पुस्तके " चित्रकरा "॥

ते दुर्लभा ये जगतो हिताय, धर्मे स्थिता धर्ममुदाहरन्ति ॥ १ ॥ केचित् प्रवालमिव रागभृतः स्वयं स्युः, केचिच्च चूर्णकणवत्पररङ्गयोग्याः। कश्मीरजातमिव सौरभपूरगौरा, धन्याः पुनः स्वपररञ्जकतां भजन्ति ॥ २ ॥ आत्मप्रबोधविरहादविशुद्धबुद्धेरन्यप्रबोधनविधिं प्रति कोऽधिकारः। सामर्थ्यमस्ति तरितुं सरितो न यस्य, तस्य प्रतारणपरा परतारणोक्तिः ॥ ३ ॥" अतो गुणवानेव गुरुरालोक्यते। ते च गुणा ज्ञानदर्शनचारित्रादयो यद्यप्यमेयास्तथाऽपि षट्त्रिंशत्षट्त्रिंशत्संख्यया कलितानां कतिपयगुरुगुणानां याः षट्त्रिंशत्संख्याकाः षट्त्रिंशिकास्ताः कीर्तयिष्यामि।

ननु किमित्येवं गुरुगुणाः कीर्त्यन्ते? उच्यते, गुणवान् गुरुरेव संप्रति दुष्षमान्धकारसंभारतिरोहितसन्मार्गाणां प्राणिनां दीप्रप्रदीपकल्पत्वादनल्पगौरवार्हो भवति। यतः—"गुरुर्गौरवार्हो गुरुपक्रियातः, फलं देवतोऽपीति सम्यग् मतिर्मे। तमिस्रातमिस्रापहारी कृशानु–र्हिमज्ञानुरित्युच्यते किं न लोकैः?॥ १ ॥" अपि च—"यद्वत्सहस्रकिरणः, प्रकाशको निचिततिमिरमग्नस्य। तद्वद्गुरुरत्र भवेद्, अज्ञानध्वान्तपतितस्य ॥२॥" वाचकमुख्योऽप्याह—"दुष्प्रतिकारौ माता–पितरौ स्वामी गुरुश्च लोकेऽस्मिन्। तत्र गुरुरिहामुत्र च, सुदुष्करतरप्रतीकारः ॥ १ ॥ गुर्वायत्ता यस्मा–च्छास्त्रारम्भा भवन्ति सर्वेऽपि। तस्माद्गुर्वाराधनपरेण हितकांक्षिणा भाव्यम् ॥ २ ॥" इति गाथार्थः ॥ १ ॥

अथ यथोक्तगुरुगुणषट्त्रिंशत्षट्त्रिंशिकासु प्रथमषट्त्रिंशिकासूत्रगाथामाह—

**चउविहदेसणकहधम्म–भावणासारणाइकुसलमई। चउविहचउझाणविऊ, छत्तीसगुणो गुरू जयउ॥२॥**

१ अ–क–पुस्तके "देवतोऽपीति" ॥

व्याख्या—चतुर्विधासु देशनासु, चतुर्विधासु कथासु, चतुर्विधेषु धर्मेषु, चतुर्विधासु भावनासु, चतुर्विधासु स्मारणादिषु कुशला निपुणा मतिर्यस्येति स तथा। तथा प्रत्येकं प्रत्येकं चतुर्विधानि चत्वारि ध्यानानि वेत्तीति चतुर्विधचतुर्ध्यानविदिति षट्त्रिंशद्गुणो गुरुर्जयत्विति समासार्थः।व्यासार्थस्त्वयम्—तत्र चतुर्विधा देशना। यथा—आक्षेपिणी१ विक्षेपिणी२ संवेगिनी३ निर्वेदिनी४ चेति। उक्तं च—"अक्खेविणी अ विक्खे–विणी य संवेअणी तहा चेव। निव्वेअणिआ एसा, चउव्विहा देसणा होइ ॥ १ ॥ आयारं ववहारं, हेऊदिट्ठंत दिट्ठिवायाई। देसिज्जइ जीए सा, अक्खेविणिदेसणा पढमा ॥ १ ॥ परमयविऊहिं परमय–वयणेहिं जीए परमयाउ जणो। विक्खेविज्जइ एसा, विक्खेविणिदेसणा बीआ ॥ २ ॥ उवसमविवेगसंवर–समयासंतोससंभवं सुक्खं। वण्णिज्जइ जीए सा, संवेअणिदेसणा तइआ ॥३॥ जरमरणरोगसोगा–इएहिं अइदारुणं भवसरूवं। पयडिज्जइ जीए सा, निव्वेअणिदेसणा तुरिया ॥ ४ ॥" तथा चतुर्विधा कथा। यथा—अर्थकथा, कामकथा, धर्मकथा, संकीर्णकथा चेति। यदुच्यते—"अर्थं कामं च धर्मं च, तथा संकीर्णरूपताम्। आश्रित्य वर्तते लोके, कथा तावच्चतुर्विधा ॥ १ ॥ सामादिधातुवादादि–कृष्यादिप्रतिपादिका। अर्थोपादानपरमा, कथाऽर्थस्य प्रकीर्तिता ॥ १ ॥ संक्लिष्टचित्तहेतुत्वात्, पापसंबन्धकारिका। तेन दुर्गतिवर्तिन्याः, प्रापणप्रवणा मता ॥ २ ॥ कामोपादानगर्भार्था, वयोदाक्षिण्यसूचिका। अनुरागेङ्गिताद्युत्या, कथा कामस्य वर्णिता ॥ ३ ॥ सा मलीमसकामेषु, रागोत्कर्षविधायिका। विपर्यासकरा तेन, हेतुभूतैव दुर्गतेः ॥ ४ ॥ दयादानक्षमाद्येषु, धर्माङ्गेषु प्रतिष्ठिता। धर्मोपादेयतागर्भा, बुधैर्धर्मकथोच्यते ॥ ५ ॥ सा

१ अ–क–पुस्तके–"निव्वेदनी" ॥

शुद्धचित्तहेतुत्वात्, पुण्यकर्मविनिर्जरे। विधत्ते तेन विज्ञेया, कारणं नाकमोक्षयोः ॥ ६ ॥ त्रिवर्गसाधनोपाय–प्रतिपादनतत्परा। याऽनेकरससारार्था, सा संकीर्णकथोच्यते ॥ ७ ॥ चित्राभिप्रायहेतुत्वा–दनेकफलदायिका। विदग्धताविधानेन, हेतुभूतैव सद्गतेः ॥ ८ ॥" तथा चतुर्विधो धर्मः। यथा—दानधर्मः १, शीलधर्मः २, तपोधर्मः ३, भावधर्मः ४ चेति। तत्र दानधर्मस्त्रिधा—ज्ञानदानम् १, अभयदानम् २, धर्मोपष्टम्भदानम् ३ च। तत्र ज्ञानदानं यथा—"जीवाजीवाइपयत्थवित्थरं उभयलोअकरणिज्जं। जेणं जाणंति जणा, तदाणं नाणदाणंति ॥ १ ॥" अभयदानं यथा—"जं सुहुमबायराणं, जीवाण ससत्तिओ सयाकालं। कीरइ रक्खणजयणा, तं जाणह अभयदाणंति ॥ १ ॥" धर्मोपष्टम्भदानं यथा—"जं धम्मसाहगाणं, साहूणं असणवसणमाईणि। दिज्जंति सुपत्ताणं, धम्मोवट्ठंभदाणमिणं ॥ १ ॥" अथ शीलमपि त्रिधा—सदाचारशीलं१, अष्टादशसहस्रशीलाङ्गलक्षणं२, ब्रह्मव्रतपालनरूपं३ च। यदुच्यते—"सुद्धं समायारमनिंदणिज्जं, सहस्सअट्ठारसभेअभिन्नं। बंभाभिहाणं च महव्वयंति, सीलं तिहा केवलिणो वयंति॥ १॥" अथ तपः, तद् द्विविधम्—बाह्यम्, अभ्यन्तरं २ च। यथा—"अणसणमूणोयरिया, वित्तीसंखेवणं रसच्चाओ। कायकिलेसो संली–णया य बज्झो तवो होइ ॥ १ ॥ पायच्छित्तं विणओ, वेयावच्चं तहेव सज्झाओ। झाणं उस्सग्गोऽविय, अब्भितरओ तवो होइ ॥ २ ॥" कैश्चित्तपस्त्रिविधं शारीरादिभेदमप्युच्यते, यथा—"देवातिथिगुरुप्राज्ञपूजनं शौचमार्जवम्। ब्रह्मचर्यमहिंसा च, शारीरं तप उच्यते॥१॥ अनुद्वेगकरं वाक्यं, सत्यं प्रियं हितं च यत्। स्वाध्यायाभ्यसनं चैव, वाङ्मयं तप उच्यते ॥ २ ॥ मनःप्रसादः सौम्यत्वं,

१ विनिर्जरम् ॥

मौनमात्मविनिग्रहः। भावसंशुद्धिरित्येतन्, मानसं तप उच्यते ॥ ३ ॥ शारीराद्वाङ्मयं सारं, वाङ्मयान्मानसं शुभम्। जघन्यमध्य-मोत्कृष्ट-निर्जराकारणं तपः ॥ ४ ॥" अथवा सात्त्विकं १ राजसं २ तामसं३ इति त्रिधा। यथा—"श्रद्धया परया तप्तं, तपस्तत्त्रिविधं नरैः। अफलाकाङ्क्षिभिर्युक्तैः, सात्त्विकं परिचक्षते ॥ १ ॥ सत्कारमानपूजार्थं, तपो दम्भेन चैव यत्। क्रियते तदिह प्रोक्तं, राजसं चलमध्रुवम् ॥ २ ॥ मूढग्राहेण यत्रात्म-पीडया क्रियते नपः। परस्योच्छेदनार्थं वा, तत्तामसमुदाहृतम् ॥ ३ ॥" अथ भावधर्म उच्यते, स च क्षायोपशमिकादिकशुभलेश्यापरिणामविशेषाद्यानादौ सर्वत्र स्वारसिकः चित्तस-मुल्लास एव भावधर्म उच्यते। यदाह—"दाने शीले तपसि च, यत्स्वारसिको मनःसमुल्लासः। शुभलेश्यानन्दमयो, भवत्यसौ भावधर्म इति ॥ १ ॥" विपर्यासे तु न धर्मः। यतः—"ज्ञाने ध्याने दाने, मौने मौने सदाग्रतो भवतु। यदि निर्मलो न भाव—स्तदा हुतं भस्मनि समग्रम् ॥ १ ॥" अपि च—"धनं दत्तं वित्तं जिनवचनमभ्यस्तमखिलं, क्रियाकाण्डं चण्डं रचितमवनौ सुप्तमसकृत्। तपस्तीव्रं तप्तं चरणमपि चीर्णं चिरतरं, न चेच्चित्ते भावस्तुषवपनवत्सर्वमफलम्॥१॥" अपि च—"ज्वालाभिः शलभा जलैर्जलचराः स्फूर्जज्जटाभिर्वटा, मौण्ड्यैरूरणकाः समस्तपशवो नाग्न्यैः खरा भस्मभिः। काष्ठाङ्गीकरणैर्द्रुमाः शुकवराः पाठैर्बका ध्यानकैः, किं सिद्ध्यन्ति न भावशुद्धिविकलाः स्युश्चेत् क्रियाः सत्फलाः ॥ १ ॥" चतस्रो भावनाः। यथा—ज्ञानभावना, दर्शनभावना, चारित्रभावना, वैराग्यभावना, चेति। तथा चोच्यते—"भावनाभिरसंमूढो, मुनिर्ध्याने स्थिरीभवेत्। ज्ञानदर्शनचारित्र-वैराग्योपगताश्च ताः ॥१॥ वाच-

१ तीर्थकरादिबहुमाने ॥

ना पृच्छना सानु-प्रेक्षणं परिवर्तनम्। सद्धर्मदेशनं चेति, ज्ञातव्या ज्ञानभावना॥२॥ संवेगः प्रशमः स्थैर्य-मसंमूढत्वमस्मयः। आस्तिक्यमनुकम्पेति, ज्ञेया सम्यक्त्वभावना ॥ ३ ॥ ईर्यादिविषयायत्ता, मनोवाक्कायगुप्तयः। परीसहसहिष्णुत्व-मिति चारित्रभावना ॥ ४ ॥ विषयेष्वनभिष्वङ्गः, कायतत्त्वानुचिन्तनम्। जगत्स्वभावचिन्तेति, वैराग्यस्थैर्यभावना ॥ ४ ॥" अथ चतस्रः स्मारणादिकाः। यथा—स्मारणा, वारणा, नोदना, प्रतिनोदना चेति। यदाह—"सारणा वारणा चेव, चोयणा पडिचोअणा। सीअंताणं सुसीसाणं, दायव्वा होइ सूरिणा ॥ १ ॥ पम्हट्ठे सारणा वुत्ता, अणायारस्स वारणा। चुक्काणं चोअणा भुज्जो, निट्ठुरं पडिचोअणा ॥ २ ॥ जहिं नत्थि सारणा वा-रणा य संचोअणा य गच्छंमि। सो गच्छोवि अग-च्छो, संजमकामीहिं मुत्तव्वो ॥ ३ ॥ जीहाएवि लिहंतो, न भद्दओ जत्थ सारणा नत्थि। दंडेणवि ताडंतो, स भद्दओ सारणा जत्थ ॥ ४ ॥" इत्येतेषु देशनाकथाधर्मभावनास्मारणादिपदेषु यथायोगं करणकारणोपदेशादिविधौ कुशलमतिर्गुरुर्भ-वतीति। अथ चतुर्विधानि चत्त्वारि ध्यानानि। यथा—आर्तध्यानं, रौद्रध्यानं, धर्मध्यानं, शुक्लध्यानं चेति। तच्च एकैकमपि चतुर्विधम्। तत्रार्तं चतुर्धा। यथा—अनिष्टयोगार्तं, इष्टनाशार्तं, रोगार्तं, निदानार्तं चेति। यदाहुः श्रीजिनभद्रगणिक्षमाश्रम-णपादाः—"अमणुन्नाणं सद्दा-इविसयवत्थूण दोसमइलस्स। धणिअं विओगचिंतण-मसंपयोगाणुसरणं च ॥ १ ॥ इट्ठाणं विसयाई-ण वेअणाए अ रागरत्तस्स। अविओगज्झवसाणं, तह संजोगाभिलासो अ ॥ २ ॥ तह सूलसीस-रोगा-इवेयणाए वियोगपणिहाणं। तदसंपओगचिंतण, तप्पडिआराउलमणस्स ॥ ३ ॥ देविंदचक्कवट्टि-त्तणाइगुणरिद्धिपत्थ-

१ विलुप्ते। २ ध्रुवः स्वबुद्धिनाम्॥ ३ ग-ङ-क-पुस्तके "तह संपओग" इत्यपि ॥

णामइअं। अहमं नियाणचिंतण-मन्नाणाणुगयमच्चंतं ॥ ४ ॥ एअं चउव्विहं रा-गदोसमोहंकिअस्स जीवस्स। अट्टज्झाणं संसा-रवद्धणं तिरिअगइमूलं ॥५॥" रौद्रध्यानमपि चतुर्धा। यथा—हिंसानन्दरौद्रं १, मृषानन्दरौद्रं २, चौर्यानन्दरौद्रं ३, संरक्षणानन्दरौद्रं ४ चेति। तथा चाह—"सत्तवहवेहबंधण-डहणंकणमारणाइपणिहाणं। अइकोहग्गहघत्थं, निग्घिणमण-सोऽहमविवागं ॥ १ ॥ पिसुणासब्भूसब्भू-अभूयघायाइवयणपणिहाणं। मायाविणो अ संधण-परस्स पच्छन्नपावस्स ॥२॥ तह तिव्वकोहलोहा-उलस्स भूओवघायणमणज्जं। परदव्वहरणचित्तं, परलोगावायनिरविक्खं ॥ ३ ॥ सद्दाइविसयसाहण-धणसंरक्खणपरायणमणिट्ठं। सव्वाभिसंकणपरो-वघायकलुसाउलं चित्तं ॥४॥ एअं चउव्विहं रा-गदोसमोहंकिअस्स जीवस्स। रुद्दज्झाणं संसा-रवद्धणं नरयगइमूलं ॥५॥" अथ धर्मध्यानं, तच्च त्रिभिः प्रकारैश्चतुर्धा—"मैत्र्यादिभिश्चतुर्भेदं, यद्वाऽऽज्ञादि चतु-र्विधम्। रूपस्थादि चतुर्धा वा, धर्मध्यानं प्रकीर्तितम् ॥१॥" तत्र मैत्र्यादिभिश्चतुर्धा। यथा—मैत्री१, प्रमोदः २, कारुण्यं ३, माध्यस्थ्यं ४ चेति। यदाहुः श्रीहेमचन्द्रसूरिपादाः—"मैत्री प्रमोदकारुण्य-माध्यस्थ्यानि नियोजयेत्। धर्मध्यानमुपस्कर्तुं, तद्धि तस्य रसायनम् ॥ १ ॥ मा कार्षीत् कोऽपि पापानि, मा च भूत्कोऽपि दुःखितः। मुच्यतां जगदप्येषा, मतिर्मैत्री निग-द्यते ॥ २ ॥ अपास्ताशेषदोषाणां, वस्तुतत्त्वावलोकिनाम्। गुणेषु पक्षपातो यः, स प्रमोदः प्रकीर्तितः ॥ ३ ॥ दीनेष्वार्तेषु भीतेषु, याचमानेषु जीवितम्। प्रतीकारपरा बुद्धिः, कारुण्यमभिधीयते ॥ ४ ॥ क्रूरकर्मसु निःशङ्कं, देवतागुरुनिन्दिषु। आत्मशंसिषु योपेक्षा, तन्माध्यस्थ्यमुदीरितम् ॥ ५ ॥" तथा आज्ञादिभिश्चतुर्धा। यथा—आज्ञाविचयः १, अपायविचयः

१ ङ-पुस्तके 'एवं' इत्यपि ॥

२, विपाकविचयः ३, संस्थानविचयः ४ चेति । यदाह—"आज्ञाऽपायविपाकानां, संस्थानस्य च चिन्तनात् । इत्थं वा ध्येयभेदेन, धर्मध्यानं चतुर्विधम् ॥ १ ॥ आज्ञां यत्र पुरस्कृत्य, सर्वज्ञानामबाधिताम् । तत्त्वतश्चिन्तयेदर्थान्, तदाज्ञाध्यानमुच्यते ॥ २ ॥ रागद्वेषकषायाद्यै-र्जायमानान् विचिन्तयेत् । यत्रापायांस्तदपाय-विचयध्यानमिष्यते ॥ ३ ॥ प्रतिक्षणं समुद्भूतो, यत्र कर्मफलोदयः । चिन्त्यते चित्ररूपः स, विपाकविचयो मतः ॥ ४ ॥ अनाद्यन्तस्य लोकस्य, स्थित्युत्पादव्ययात्मनः । आकृतिं चिन्तयेद्यत्र, संस्थानविचयः स तु ॥ ५ ॥" अथ रूपस्थादि चतुर्धा । यथा—रूपस्थं १, पदस्थं २, पिण्डस्थं ३, रूपातीतं ४ चेति । यदवाचि—"रूपस्थं च पदस्थं च, पिण्डस्थं रूपवर्जितम् । धर्मध्यानं चतुर्भेद-मित्थं वा परिकीर्तितम् ॥ १ ॥ पश्यति प्रथमं रूपं, स्तौति ध्येयं ततः पदैः । तन्मयः स्यात्ततः पिण्डे, रूपातीतं ततो व्रजेत् ॥ २ ॥ यथाऽवस्थितमालम्ब्य, रूपं त्रिजगदीशितुः । क्रियते यन्मुदा ध्यानं, तद्रूपस्थं निगद्यते ॥ ३ ॥ स्वाध्याये यदि वा मन्त्रे, गुरुदेवस्तुतावपि । चित्तस्यैकाग्रता यत्त-त्पदस्थं ध्यानमुच्यते ॥ ४ ॥ नाभिपद्मादिरूपेषु, ध्यानं स्थानेषु योगिनाम् । यदिष्टदेवतादीनां, तत्पिण्डस्थं निगद्यते ॥५॥ निर्लेपस्य निरूपस्य, सिद्धस्य परमात्मनः । चिदानन्दमयस्य स्याद्, ध्यानं रूपविवर्जितम् ॥ ६ ॥" अथ शुक्लध्यानं चतुर्धा । यथा—पृथक्त्ववितर्कसप्रवीचारशुक्लं १, एकत्ववितर्काप्रवीचारशुक्लं २, सूक्ष्मक्रियाप्रतिपातिशुक्लं ३, व्यवच्छिन्नक्रियाप्रतिपातिशुक्लं ४ चेति । तत्स्वरूपं चेदम्—"एकत्रपर्यायाणां, विविधनयानुसरणं श्रुताद्द्रव्ये । अर्थव्यञ्जनयोगा-न्तरेष्वसंक्रमणमाद्यं तत् ॥१॥ एवं श्रुतानुसारा-देकत्ववितर्कमेकपर्यायम् । अर्थव्यञ्जनयोगा-न्तरेष्व[1]संक्रमणमन्यत्तु ॥ २ ॥ निर्वाणगमनसमये, केवलिनो दरनिरुद्धयोगस्य । सूक्ष्मक्रियाऽप्रतिपाति, तृतीयं कीर्तितं ध्यानम् ॥३॥ केवलिनः शैलेशी-गतस्य शैलवदकम्पनीयस्य । उच्छिन्नक्रियमप्रति-पाति तुरीयं परमशुक्लम् ॥४॥ एकं त्रियोगभाजा-माद्यं स्यादपरमेकयोगवताम् । तनुयोगिनां तृतीयं, निर्योगानां चतुर्थं च ॥ ५ ॥" इति षट्त्रिंशद्गुणयुतो गुरुर्जगत्यिति सर्वोत्कर्षेण प्रवर्तताम् । इति गाथार्थः ॥ २ ॥

१ क-ख-पुस्तके-"योगान्तरेषु सङ्क-" इत्यपि ॥

अथ द्वितीयषट्त्रिंशिकासूत्रगाथामाह—

**पणविहसम्मचरणवय-ववहारायारसमिइसज्झाए । इगसंवेगे अ रओ, छत्तीसगुणो गुरू जयउ ॥३॥**

व्याख्या—प्रत्येकं पञ्चविधेषु सम्यक्त्वचारित्रव्रतव्यवहाराचारसमितिस्वाध्यायेषु, एकस्मिंश्च संवेगे रतः, इति षट्त्रिंशद्गुणो गुरुर्जयत्विति संक्षेपार्थः । विस्तरार्थस्त्वयम्—पञ्चविधं सम्यक्त्वम् । क्षायिकं १, क्षायोपशमिकम् २, वेदकम् ३, औपशमिकं ४, सास्वादनं ५ चेति । यदुक्तम्—"खइअं १ खओवसमिअं २, वेअग ३ उवसामिअं ४ च सासणयं ५ । पंचविहं सम्मत्तं, पन्नत्तं वीयरागेहिं ॥ १ ॥" एतद्भावनिका यथा—कृतत्रिपुञ्जस्य चतुर्थगुणस्थानकादारभ्य क्षपकत्वे मारब्धे अनन्तानुबन्धिचतुष्कस्य मिथ्यात्वमिश्रसम्यक्त्वरूपपुञ्जत्रयस्य च क्षये क्षायिकसम्यक्त्वं भवति । अप्राप्तपूर्वोऽध्यवसायविशेषोऽपूर्वकरणमुच्यते । तत्र कृतत्रिपुञ्जस्य जीवस्य उदीर्णमिथ्यात्वक्षये अनुदीर्णस्य चोपशमे क्षायोपशमिकं सम्यक्त्वं भवति । तेष्वेवानन्तानुबन्ध्यादिषु षट्सु क्षपितेषु सम्यक्त्वपुञ्जे च बहुतरे क्षपिते चरमग्रासीकृतसम्यक्त्वपुद्गलानां

१ क-पुस्तके-"वाग" इत्यपि ॥

वेदने वेदकसम्यक्त्वं भवति । तथा अपूर्वकरणेनैव कृतग्रन्थिभेदस्य उदीर्णे मिथ्यात्वे क्षीणेऽनुदीर्णे चाप्राप्तस्य अन्तरकरणे अन्तर्मुहूर्तं कालं सर्वथैव मिथ्यात्वावेदकस्य औपशमिकं सम्यक्त्वं भवति । उपशमश्रेणिं वा समारूढस्य मिथ्यात्वादीनामुपशमे सति औपशमिकं सम्यक्त्वं भवति । कस्यचिज्जीवस्य औपशमिकसम्यक्त्वात्प्रपततोऽनन्तानुबन्ध्युदयात् कलुषितस्यापि मिथ्यात्वमप्राप्तस्य वमनवद्विरसतत्त्वरसास्वादनेन सास्वादनसम्यक्त्वं भवति । तथा चाह—"मिच्छाइखए खइओ, सो सत्तगि खीणि ठाइ बद्धाऊ । चउतिभवभाविमुक्खो, तब्भवसिद्धी उ (द्विउ) इअरो उ ॥ १ ॥ अप्पुव्वकयतिपुंजो, मिच्छमुइण्णं खवित्तु अणुइन्नं । उवसामिय अनिअट्टी-करणाउ परं खओवसमी ॥ २ ॥ वेअगसम्मत्ती पुण, कए दुपुंजक्खयंमि तइयस्स । खयकालचरमसमए सुद्धाणुअवेअणे [2] होइ ॥ ३ ॥ अकयतिपुंजो ऊसरदवइल्लियदड्डरुक्खनाएहिं । अंतरकरणुवसमिओ, उवसमिओ [3] वा ससेणिगओ ॥ ४ ॥ उवसमअद्धाइ ठिओ, मिच्छमपत्तो तमेव गंतुमणो । संमं सासायंतो, सासायणिमो इमो होइ ॥ ५ ॥ अंतमुहुत्तोवसमो, छावलि सासाणु वेअगो समओ । साहिअतित्तीसायर, खइओ दुगुणो खओवसमो ॥ ६ ॥ उक्कोसं सासायण, उवसामिआ हुंति पंचवाराउ । वेअगखयगा इक्कसि, असंखवारा खओवसमो ॥ ७ ॥" तथा पञ्चविधं चारित्रम् । यथा—सामायिकं १, छेदोपस्थापनीयं २, परिहारविशुद्धिकं ३, सूक्ष्मसंपरायं ४, यथाख्यातं ५ चेति । यदुक्तम्—"सामाइय[4]त्थ पढमं, छेओवट्ठावणं भवे बीयं । परिहारविसुद्धीयं, सुहुमं तह संपरायं च ॥ १ ॥ तत्तो य अहक्खायं, खायं सव्वंमि जीवलोगंमि । जं चरिऊण सुविहिआ, वच्चंतयरामरं ठाणं ॥ २ ॥ सामा-

सपरो य आयरिओ ॥ १ ॥ अपरिस्सावी सोमो, संगहसीलो अभिग्गहमई य । अविकत्थणो अचवलो, पसंतहियओ गुरू होइ ॥ २ ॥" अष्ट सूक्ष्माणि स्नेहसूक्ष्मादीनि । यथा—"सिणेहं१ पुप्फसुहुमं२ च, पाणु३ त्तिंगं४ तहेव य । पणगं५ बीय६ हरियं७ च, अंडसुहुमं८ च अट्ठमं ॥ १ ॥" इति गाथार्थः ॥ १८ ॥

अथाष्टादशीं षट्त्रिंशिकामाह—

**पंचदसजोगसन्ना–कहणेण तिगारवाण चाएण । सल्लतिगवज्जणेणं, छत्तीसगुणो गुरू जयउ ॥१९॥**

व्याख्या—गतार्थैव । पञ्चदश योगाः सत्यमनःप्रभृतयः । यदाह—"सच्चं१ मोसं२ मीसं३, असच्चमोसं मणं तह वई य । उरल विउव्वाहारा, मीस्सा कम्मिग पनर जोगा ॥ १ ॥" एतद्गमनिका–अस्ति जीवः सदसद्रूपो वा देहमात्रव्यापक इत्यादि यथाऽवस्थितवस्तुविकल्पनपरं सत्यं मनः १ । जल्पनपरं सत्यं वचः २ । तद्विपरीतं मनो वचो वाऽसत्यम् ४ । धवखदिरपलाशादिषु अशोकसद्भावादसत्यम्, नेषामपि संभवात् सत्यमिति मिश्रविकल्पनपरं मनो वचो वा मिश्रम् ६ । आमन्त्रणाज्ञापनादिरूपं हे देवदत्त ! घटमानय, धर्मं कुरु, इत्यादि विकल्पनजल्पनपरं मनो वचो वाऽसत्यामृषम् ८ । औदारिककाययोगः१, औदारिकमिश्रकाययोगः २, वैक्रियकाययोगः ३, वैक्रियमिश्रकाययोगः ४, आहारककाययोगः ५, आहारकमिश्रकाययोगः ६, कार्मणकाययोगः ७ चेति पञ्चदश योगाः । पञ्चदशसंज्ञास्त्वाहारसंज्ञादिकाः । यदाह—"चउसन्नाहाराई, दससन्न कसायओघलोगजुया । पनरससन्ना सुहदु-क्खमोहविचिगिच्छसोअजुया ॥१॥" तत्राहारसंज्ञा जलाद्याहारग्राहिणस्तृणादेरिव १ ।

१ ब=पुस्तके—"पलाशादिमिमेषु" इत्यपि । २ भवनमित्यादिकार्यवे ॥

भयमोहनीयोदयाद्भयसंज्ञा, संकोचिनीवल्ल्यादेरिव २ । लोभमोहनीयोदयात्परिग्रहसंज्ञा, तन्तुभिर्वृत्यादि वेष्टयन्त्या वल्ल्यादेरिव ३ । वेदमोहनीयोदयान्मैथुनसंज्ञा, चम्पकतिलकाशोकादीनामिव ४ । क्रोधोदयात्क्रोधसंज्ञा, कृपाणकोशकं प्रति धावतः पारदादेरिव ५ । मानोदयान्मानसंज्ञा, हुंकारान्मुञ्चतः कोकनदकन्दादेरिव ६ । मायोदयान्मायासंज्ञा, दलैः फलान्याच्छादयन्त्या गर्भटिकावल्ल्यादेरिव ७ । लोभोदयाल्लोभसंज्ञा, निधानं मरोर्हैर्वेष्टयतो बिल्वपलाशादेरिव ८ । ज्ञानोपयोगरूपा ओघसंज्ञा, संचरज्जनमार्गं परिहरन्त्या वृत्याद्यारोहन्त्या लतादेरिव ९ । दर्शनोपयोगरूपा लोकसंज्ञा, सूर्योदयाद्विकसतः कमलादेरिव १० । साताऽसातानुभवरूपे सुखदुःखसंज्ञे, सर्वजीवानां प्रतीते १२ । मिथ्यादर्शनरूपा मोहसंज्ञा, सूर्याभिमुखहस्तयोजिकोपाध्यादेरिव १३ । विप्लुतिरूपा विचिकित्सा, सा चाऽशुचिस्पर्शाद्दृष्टिदोषादेर्वा म्लानिं भजन्त्यास्तथाविधवल्ल्यादेरिव १४ । शोकमोहनीयोदयाच्छोकसंज्ञा, अश्रूणि विमुञ्चन्त्या रुदन्तीवल्ल्यादेरिव १५ । गारवत्रिकं च ऋद्धि १ रस २ सात ३ लक्षणम् । तथा चाह श्रीधर्मदासगणिः—" पवराइं वत्थपाया–सणोवगरणाइँ एस विभवो मे । अविय महाजणनेया, अहंति अह इड्ढिगारविओ ॥ १ ॥ अरसं विरसं लूहं, जहोववण्णं च निच्छए भुत्तुं । निद्धाणि पेसलाणि य, मग्गइ रसगारवे गिद्धो ॥ २ ॥ सुस्सूसई सरीरं, सयणासणवाहणापसंगपरो । सायागारवगुरुओ, दुक्खस्स न देइ अप्पाणं ॥ ३ ॥" शल्यत्रिकं माया १ निदान २ मिथ्यादर्शन ३ शल्यरूपम् । यदाह—"पढमं मायासल्लं १, नियाणसल्लं २ तहा भवे बीयं । तइयं मिच्छादंसण–सल्लं ३ भणियं कडुविवागं ॥ १ ॥ एएहिं सल्लेहिं, सल्लियहियओ मरेइ जो जीवो । सो असुहासुं गच्छइ, गईसु बहुसो चिणिअपावो ॥ २ ॥" इति गाथार्थः १९ ॥

१ कसो । २ चिणपाव. ॥

अथैकोनविंशतितमीं षट्त्रिंशिकामाह—

**सोलससोलसउग्गम–उप्पायणदोसविरहियाहारो ।**
**चउविहभिग्गहनिरओ, छत्तीसगुणो गुरू जयउ ॥ २० ॥**

व्याख्या—प्रकटार्था । नवरं षोडशोद्गमदोषा आधाकर्मादयः । यदाह—"आहाकम्मु १ द्देसिय२–पूइयकम्मे ३ य मीसजाए४ य । ठवणा५ पाहुडियाए६, पाओयर७ कीय८ पामिच्चे९ ॥१॥ परिअट्टिए१० अभिहड११–ब्भिन्ने१२ मालोहडे१३ य अच्छिज्जे १४ । अणिसिट्ठ१५ ज्झोयरए१६, सोलस पिंडुग्गमे दोसा ॥२॥" तद्गमनिका चेयम्–यत् षट्कायविराधनया यतिन आधाय संकल्पेनाशनादिकरणं तदाधाकर्म १ । यत्पुनर्गृहिणा स्वार्थं कृतं पश्चाद्यत्युद्देशेन पृथक् क्रियते तदौद्देशिकम् । तत्त्रेधा, तत्र यद्यथाभूतं समुद्धृतं तत्तथाभूतमेव यावदर्थिकादीनां चतुर्णामुद्दिश्यमानमुद्दिष्टौद्देशिकम् १ । यत्पुनः कूरादि दध्यादिना व्यञ्जनादिना वा जीवविराधनां विना संस्क्रियते तत्कृतौद्देशिकम् २ । यत्त्वग्न्यादिना जीवविराधनापूर्वं संस्क्रियते तत्कर्मौद्देशिकम् ३ ॥ तत्त्रिविधमपि चतुर्धा–यावदर्थिकमुद्देशम् १ । पाषण्डिकार्थं समुद्देशम् २ । श्रमणेभ्य आदेशम् ३ । निर्ग्रन्थेभ्यः समादेशम् ४ ॥ एवं द्वादशधा औद्देशिकम् । यदुद्गमकोटिदोषदुष्टसङ्गात् शुद्धमपि अपवित्रं तत्पूतिकर्म ३ । यदात्मनो हेतोर्गृहस्थेन यावदर्थिकादिहेतोश्च मिलितमारभ्यते तन्मिश्रम् ४ । यद्यतिनिमित्तं गृही स्थापयित्वा मुञ्चति तद्धृतः स्थापना ५ । यत्स्वनिमित्तमपि गृही यतिन आजिगमिषून् जिगमिषून् वा ज्ञात्वा अर्वाक् परतो वा तदर्थमारभते तत्प्राभृतिका ६ । यन्महान्धकारस्थितस्य यतिनिमित्तं दीपादिना प्रकटनं बहिरालोके नयनं वा तत्प्रादुष्करणम् ७ । यत्स्वकीयपरकीयाभ्यां मूल्येन विसाधितं तत्क्रीतम् ८ । यदुच्छिन्नं याचित्वा गृही दत्ते तत्प्रामित्यम् ९ । यत्पुनः परावर्त्य गृही यतिभ्यो दत्ते तत्प्रा(परा)वर्ति-

तम् १० । यद्ग्रामान्तराद्गृहाद्वा यतिनिमित्तमानीतं तदाहृतम् ११ । यन्मुद्रितकुतुपादिमुखं यतिहेतोरुन्मुद्रय गृही घृतादि दत्ते तदुद्भिन्नम् १२ । यत्करदुर्ग्राह्यं मालादिभ्य उत्तार्य गृही दत्ते तन्मालापहृतम् १३ । यद्बलात्कस्मादपि उद्दाल्य गृही दत्ते तदाच्छेद्यम् १४ । यद्बहुसाधारणं अन्यैरदत्तं एको गृही दत्ते तदनिसृष्टम् १५ । यद्गृहिणा मूलारम्भे स्वार्थकृते तन्मध्ये यतिनिमित्तमधिकावतारणं सोऽध्यवपूरकः १६ । इत्युद्गमदोषाः षोडश ॥ " धाई दूइ निमित्ते, आजीव वणीमगे तिगिच्छा य । कोहे माणे माया, लोभे य हवंति दस एए ॥ १ ॥ पुव्विं पच्छा संथव, विज्जा मंते य चुण्णजोगे य । उप्पायणाइदोसा, सोलसमे मूलकम्मे य ॥ २ ॥ " यदा पिण्डार्थं दातुरपत्यानामङ्कारोपणादिलालनं करोति तदा धात्रीदोषः १ । पिण्डार्थमेव संदेशकनयनादिकरणे दूतीदोषः २ । पिण्डार्थं लाभालाभकथने निमित्तदोषः ३ । पिण्डार्थं दातुः सत्कजात्यादि स्वस्य प्रकाशयतः आजीवनादोषः ४ । यो दाता यद्भक्तस्तस्याग्रतस्तद्भक्तमात्मानं दर्शयतः साधोर्वनीपकदोषः ५ । पिण्डार्थं दातृगृहे औषधादिना वमनादिना वा प्रतिकुर्वतो वैद्यादि सूचयतो वा चिकित्सादोषः ६ । बलविद्याराजवर्णकतपःशक्तिप्रभावादिकोपभयाद्यं लभते स कोपपिण्डः ७ । प्रशंसितोऽपमानितो वा दातुरभिमानोत्पादनेन यल्लभते स मानपिण्डः ८ । एकगृहाद्गृहीत्वा रूपान्तरं कृत्वा मायावशाद्यत्पुनर्ग्रहणार्थं प्रविशति स मायापिण्डः ९ । कस्यापि वस्तुनो गृद्ध्या बहुतरमटतो लोभपिण्डः १० । जननीजनकश्वश्रूश्वशुरादिसंबन्धपरिचयरूपं कुर्वतः पूर्वं पश्चाद्वा दानाद्दातारं वर्णयतो वा संस्तवदोषः ११ । स्त्रीरूपदेवताधिष्ठितं पूर्वैर्मेत्राऽऽराध्यं च समभाववर्णाम्नायं पिण्डार्थं प्रयुञ्जानस्य विद्यापिण्डः १२ । पुरुषदेवाधिष्ठितं पठितसिद्धं च समभाववर्णाम्नायं प्रयुञ्जानस्य पुनर्मन्त्रपिण्डः १३ । अदृशीकरणहेतुं नयनाञ्जनादिकं कुर्वतश्चूर्णपिण्डः १४ । सौ-

१ ड-पुस्तके-" प्रकाशने " इत्यपि । २ ब-पुस्तके-" पूर्वसेवोपचारसेवाराध्यम् " इत्यपि ॥

भाग्यदौर्भाग्यफलान् पादलेपप्रभृतीन् योगान् पिण्डार्थमेव प्रयुञ्जानस्य योगपिण्डः १५ । मङ्गलस्नानमूलिकाद्यौषधिरक्षादिना गर्भकरणविवाहभङ्गादि वशीकरणादि च पिण्डार्थं कुर्वतो मूलकर्म १६ ॥ इत्युत्पादनादोषाः षोडश ॥ तथाऽभिग्रहचतुष्कं द्रव्य १ क्षेत्र २ काल ३ भावा ४ भिग्रहरूपम् । यदाह—" दव्वओ १ खित्तओ २ चेव, कालओ ३ भावओ ४ तहा । अभिग्गहा उ साहूणं, एवं हुंति चउव्विहा ॥ १ ॥ " श्रूयते श्रीमन्महावीरस्य चतुर्धाऽप्यभिग्रहः । यथा—" पृथ्वीनायसुता भुजिप्यचरिता हंजीगिता मुण्डिता, क्षुत्क्षामा रुदती विधाय पदयोरन्तर्गतां देहलीम् । कुल्मापान् प्रहरद्वयव्यपगमे मे सूर्पकोणेन चेद्, दद्यात्पारणकं तदा भगवतः सोऽयं महाभिग्रहः ॥ १ ॥ " इति गाथार्थः ॥ २० ॥

अथ विंशतितमीं षट्त्रिंशिकामाह—

सोलसवयणविहिन्नू, सतरसविहसंजमंमि उज्जुत्तो ।
तिविराहणाविरहिओ, छत्तीसगुणो गुरू जयउ ॥ २१ ॥

व्याख्या—गतार्था । नवरं षोडशधा वचनविधिः कालत्रिकादिकः । यदाह—" कालतियं३ वयणतियं६, लिंगतियं९ तह परुक्खपच्चक्खं । उवणयवणय चउक्कं, अज्झत्थं चेव सोलसमं ॥ १ ॥ " कालत्रिकं अतीतादि । यथा—कृतवान् करोति करिष्यति । वचनत्रिकं एकवचनद्विवचनबहुवचनलक्षणम् । लिङ्गत्रिकं स्त्रीपुरुषनपुंसकलक्षणम् । परोक्षं स देवदत्तः । प्रत्यक्षं एष देवदत्तः । 'उवणयवणय' इति उपनीतोपनीतं वचनं चतुर्धा, तत्र उपनीतोपनीतं यथा—अयं

१ "हंजीरिता" इत्यपि । २ प्रशंसावचनमुपनम् निन्दावचनं त्वपनयो द्विकयोगे चत्वार । ३ अध्यात्ममन्यविवक्षितेऽपि अन्यवाद नम ॥

ऋद्धिमान् उदारश्च पुमान् १ । उपनीतापनीतं यथा—ऋद्धिमान् परं कृपणः २। अपनीतोपनीतं यथा—अयं दरिद्रोऽप्युदारः ३। अपनीतापनीतं यथा—अयं दरिद्रः कृपणश्च ४ । यद्वा स्त्री सुरूपा सुशीला च१ । सुरूपा कुशीला च २ । कुरूपा सुशीला च३ । कुरूपा कुशीला च४॥ 'अज्झत्थं' इति अध्यात्मवचनं यथा—मनोगतं किमप्यवक्तुकामोऽपि सहसा तदेव वक्ति तदध्यात्मवचनमिति । तथा सप्तदशधा संयमः पृथिव्यादियत्नलक्षणः । यदाह—" पुढविदगअगणिमारुअ—वणसइवितिचउपणिंदिअज्जीवे । पेहुप्पेहपमज्जण—परिठवणमणोवए काए ॥ १ ॥" ' परिठवणत्ति ' परिष्ठापनासंयमः । शेषाणि पदानि गतीतानि । विराधनात्रिकं ज्ञानादिविराधनालक्षणम् । यत्प्रतिक्रमणसूत्रम्—"पडिक्कमामि तिहिं विराहणाहिं, नाणविराहणाए दंसणविराहणाए चरित्तविराहणाए ।" इति गाथार्थः ॥ २१ ॥

अथैकविंशतितमीं षट्त्रिंशिकामाह—

नरदिक्खदोसे अट्ठा—रसेव अट्ठार पावठाणाइं । दूरेण परिहरंतो, छत्तीसगुणो गुरू जयउ ॥ २२ ॥

व्याख्या—कण्ठ्या । नवरं अष्टादश नरदीक्षादोषाः शिशुत्ववृद्धत्वादयः । यदाह—" बाले१ वुड्ढे२ नपुंसे३ य, कीवे४ जडे५ य वाहिए६ । तेणे७ रायावगारी८ य, उम्मत्ते९ य अदंसणे१० ॥१॥ दासे११ दुट्ठे१२ य मूढे१३ य, अणत्ते१४ जुंगिए१५ इय । उवट्ठिए १६ य भइए १७, सेहनिप्फेडिया १८ इय ॥२॥" तत्र सप्ताष्टौ वर्षाणि यावद्बालोऽभिधीयते १ । सप्ततिवर्षेभ्य ऊर्द्ध्वं वृद्धः २ । नपुंसकस्तृतीयवेदीयः ३ । स्त्रीभोगैर्निमन्त्रितोऽसंवृताया वा स्त्रियोऽङ्गोपाङ्गानि दृष्ट्वा शब्दं वा मन्मनोल्लापादिकं तासां श्रुत्वा समुद्भूतकामाभिलाषोऽधिसोढुं न शक्नोति स क्लीवः ४ । जडस्त्रिविधः, भाषया १ शरी-

१ व्यापारः । २ उपेक्षा ॥

रेण २ करणेन ३ च । भाषाजडः पुनरपि त्रिधा—जलमूकः १, मन्मनमूकः २, एलमूकः ३ । तत्र जलमग्न इव बुडबुडायमानो यो वक्ति स जलमूकः १ । यस्य तु ब्रुवतः खन्यमानमिव वचनं स्खलति स मन्मनमूकः २ । यस्त्वेलक इवाव्यक्तमूकतया शब्दमात्रमेव करोति स एलमूकः ३ ॥ मन्मनमूको मेधाविगुणादीक्षणीयो नेतरौ १ । यः पथि भिक्षाटने वन्दनादिषु वाऽतीवस्थूलतया शक्तो न भवति स शरीरजडः २ । करणं-क्रिया तस्यां जडः समितिगुप्तिमत्युपेक्षणासंयमपालनादिक्रियायां पुनः पुनरुपदिश्यमानोऽप्यतीव जडतया यो गृहीतुं न शक्नोति स करणजडः ३ । ५ । व्याधितो भगन्दरातीसारप्रभृतिरोगग्रस्तः ६ । स्तेनश्चौरः ७ । श्रीगृहान्तःपुरनृपतिशरीरतत्पुत्रादिद्रोहको राजापकारी ८ । उन्मत्तो भूतादिगृहीतः ९ । अदर्शनः काणोऽन्धः स्त्यानर्द्धिको वा १० । 'दासत्ति' दासोऽङ्कितो दासीजातो वा ११ । 'दुट्ठत्ति' दुष्टो द्विधा, कषायदुष्टो १ विषयदुष्टश्च २ । यदाह—" दुविहो य होइ दुट्ठो, कसायदुट्ठो १ य विसयदुट्ठो २ य । सासवपुत्तीओलगिन्थिसिहरणी पढम आहरणा ॥ ११ ॥ " तत्र सर्षपभर्जिकाभिनिविष्टसाध्वादिवदुत्कटकषायः कषायदुष्टः १ । अतीव परयोषिदादिषु गृद्धो विषयदुष्टोऽपि द्विधा, स्वपरपक्षाभ्यां चतुर्भङ्गी । विषयदुष्टस्त्रिधा, स्वलिङ्गगृहिलिङ्गान्यलिङ्गभेदात् । संजईकप्पठिए वा, सिज्जायरि अवउत्थिणीए वा । एसो उ विसयदुट्ठो, दुविहोऽवि न अरिहए दिक्खं ॥ १ ॥ " १२ । 'मूढत्ति' मूढो मूर्खो व्यामूढो वा १३ । 'अणत्तेत्ति' ऋणार्तः १४ । 'जुंगिएत्ति' जातिकर्मशरीरादिभिर्दूषितो जुङ्गितः, तत्र मातङ्गकोलिकवरडसूचिकादयोऽस्पृश्या जातिजुङ्गिताः, स्पृश्या अपि स्त्रीमयूरकुक्कुटादिपोषका वंशवरत्रारोहणनखप्रक्षालनशौकरिकत्वादिनीचकर्मकारिणः कर्मजुङ्गिताः, करचरणकर्णादिवर्जिताः शरीरजुङ्गिताः १५ । 'उवट्ठिएत्ति' उपस्थितो भोगलाहिकः १६ ।

१ सर्षपभर्जिकार्पणाचार्यस्य पातोराय दत्तम ... भरजगिका स्त्री ... च । २ सपत्नी ... ॥

'भइएत्ति' भृतको वृत्तिकिङ्करः १७ । 'सेहनिप्फेडिआइयात्ति' यो हि अनुज्ञां विनाऽपहृत्य दीक्ष्यते स शिष्यनिःस्फेटिकः १८ । एष तृतीयव्रतविलोपनप्रसङ्गाच्च दीक्षणीयो निरतिशयैरिति । अष्टादश पापस्थानानि प्राणातिपातादीनि । यदाह—" पाणाइवाय १ मलियं २, चोरिक्कं ३ मेहुणं ४ दविणमुच्छं ५ । कोहं ६ माणं ७ मायं ८, लोभं ९ पिज्जं १० तहा दोसं ११ ॥१॥ कलहं १२ अब्भक्खाणं १३, पेसुन्नं १४ रइअरइसमाउत्तं १५ परपरिवायं १६ मायामोसं १७ मिच्छत्तसल्लं १८ च ॥२॥" अपि च—" सुहुमे य बायरे वा, जो पाणे उवहिंसइ । रागदोसाभिभूयप्पा, लिप्पई पावकम्मुणा ॥१॥ जो मुसं भासए किंचि, अप्पं वा जइ वा बहुं । रागद्दोसाभिभूयप्पा, लिप्पई पावकम्मुणा ॥ २ ॥ अदत्तं गिण्हई जो उ, अप्पं वा जइ वा बहुं । रागद्दोसाभिभूयप्पा, लिप्पई पावकम्मुणा ॥ ३ ॥ मेहुणं सेवई जो उ, तिरिच्छं दिव्वमाणुसं । रागद्दोसाभिभूयप्पा, लिप्पई पावकम्मुणा ॥ ४ ॥ परिग्गहं गिण्हई जो उ, अप्पं वा जइ वा बहुं । गेही मुच्छाभिभूअप्पा, लिप्पई पावकम्मुणा ॥ ५ ॥ कोहं जो अ उईरेइ, अप्पणो य परस्स य । तन्निमित्ताणुबंधेणं, लिप्पई पावकम्मुणा ॥ ६ ॥ माणं जो उ उईरेइ, अप्पणो य परस्स य । तन्निमित्ताणुबंधेणं, लिप्पई पावकम्मुणा ॥ ७ ॥ मायं जो उ उईरेइ, अप्पणो य परस्स य । तन्निमित्ताणुबंधेणं, लिप्पई पावकम्मुणा ॥ ८ ॥ लोभं जो उ उईरेइ, अप्पणो य परस्स य । तन्निमित्ताणुबंधेणं, लिप्पई पावकम्मुणा ॥ ९ ॥ रागं जो उ उईरेइ, अप्पणो य परस्स य । तन्निमित्ताणुबंधेणं, लिप्पई पावकम्मुणा ॥ १० ॥ दोसं जो उ उईरेइ, अप्पणो य परस्स य । तन्निमित्ताणुबंधेणं, लिप्पई पावकम्मुणा ॥ ११ ॥ कलहं जो उईरेइ, अप्पणो य परस्स य । तन्निमित्ताणुबंधेणं, लिप्पई पावकम्मुणा ॥ १२ ॥ अभक्खाणं उईरेइ, अप्पणो य परस्स य । तन्निमित्ताणुबंधेणं, लिप्पई पावकम्मुणा ॥ १३ ॥ पेसुन्नं जो उईरेइ, अप्पणो य परस्स य । तन्निमित्ताणुबंधेणं, लिप्पई पावकम्मुणा ॥ १४ ॥ रइअरइं उईरेइ, अप्पणो य परस्स य । तन्निमित्ताणुबंधेणं, लिप्पई पावकम्मुणा ॥ १५ ॥ परपरिवायमुईरेइ, अप्पणो य परस्स य । तन्निमित्ताणुबंधेणं, लिप्पई पावकम्मुणा ॥ १६ ॥ मायामोसं उईरेइ, अप्पणो य परस्स य । तन्निमित्ताणुबंधेणं, लिप्पई पावकम्मुणा ॥ १७ ॥ मिच्छासल्लं उईरेइ, अप्पणो य परस्स य । तन्निमित्ताणुबंधेणं, लिप्पई पावकम्मुणा ॥ १८ ॥ " इति गाथार्थः ॥ २२ ॥

अथ द्वाविंशतितमीं षट्त्रिंशिकामाह—

**सीलंगसहस्साणं, धारंतो तह य बंभभेयाणं । अट्ठारसगमुयारं, छत्तीसगुणो गुरू जयउ ॥ २३ ॥**

व्याख्या—सुगमैव । नवरं अष्टादशसहस्रशीलाङ्गानामियं निष्पत्तिः । यथा—" करणे जोए सन्ना, इंदिय भोमाइ समणधम्मे य । सीलंगसहस्साणं, अट्ठारसगस्स निप्फत्ती ॥ १ ॥" ब्रह्माष्टादशधा दिव्यौदारिकादिभेदभिन्नम् । यदाह—" दिव्यौदारिककामानां, कृतानुमतिकारितैः । मनोवाक्कायतस्त्यागो, ब्रह्माष्टादशधा मतम् ॥ १ ॥ " इति गाथार्थः ॥ २३ ॥

अथ त्रयोविंशतितमीं षट्त्रिंशिकामाह—

**उस्सग्गदोसगुणवी—सवज्जओ सतरभेयमरणविहिं ।**
**भवियजणे पयडंतो, छत्तीसगुणो गुरू जयउ ॥ २४ ॥**

१ क-पुस्तके—" जे नो करंति मणसा, निज्जियआहारसन्नासोइंदि । पुढवीकायारंभं, खंतिजुआ ते मुणी वंदे ॥ १ ॥ इत्यादिका गाथा ग्रन्थान्तरात्[illegible] ... इत्यपि पाठः ॥

व्याख्या—सुबोधैव । नवरं उत्सर्गदोषाणामेकोनविंशतेर्वर्जको गुरुरिति । ते च घोटकादयो दोषाः । यदाह—" घोडग १ लय २ खंभाई ३, मालु ४ द्धी ५ सवरि ६ नियल ७ खलिण ८ वहू ९ । लंबुत्तर १० थणसंजई ११, भमुहं १२ गुलि १३ वायस १४ कविट्ठे १५ ॥ १ ॥ सिरकंप १६ मूय १७ वारुणि १८, पेहत्ति १९ चइज्ज दोस उस्सग्गे । लंबुत्तरवहुयाई, तिय चउ नो समणिसड्ढीणं ॥ २ ॥ एतद्भमनिका—अश्ववद्विषमपादः कायोत्सर्गं करोतीति सर्वत्र योज्यम् १ । वाताहतलतावत्कम्पमानः २ । स्तम्भे कुड्यादौ वाऽवष्टभ्य ३ । माले शिरोऽवष्टभ्य ४ । शकटोर्द्धिवदङ्गुष्ठौ पार्ष्णी वा मेलयित्वा ५ । विवसनशवरीवद्गुह्याग्रे करौ कृत्वा ६ । निगडितवच्चरणौ पृथुलौ संकीर्णौ वा विधाय ७ । कविकवद्रजोरहणं गृहीत्वा ८ । वधूवदवनतोत्तमाङ्गः ९ । जान्वधः प्रलम्बमाननिवसनः १० । दंशादिरक्षार्थं अज्ञानाद्वा हृदयं प्रच्छाद्य संयतीवत्प्रावृत्य ११ । आलापकगणनार्थमङ्गुलीर्भ्रुवौ वा चालयन् १२ । वायसवच्चक्षुर्गोलकौ भ्रा(भ्र)मयन् १३ । कपित्थवत्परिधानं पिण्डयित्वा १४ । यक्षाविष्ट इव शिरः कम्पयन् १५ । मूकवत् हूहूकुर्वन् १६ । वारुणी सुरा, तद्वद्बुडबुडायमानः १७ । अनुप्रेक्ष्य(क्ष)माणो वानर इवौष्ठपुटौ चालयंश्च १८ । कायोत्सर्गं करोतीत्येकोनविंशतिर्दोषाः । तथा सप्तदशभेदं मरणमावीचिमरणादिकम् । यदाह—" आवीइ १ ओहि २ अंतिय ३, वलायमरणं ४ वसट्टमरणं ५ च । अंतोसल्लं ६ तब्भव ७, बालं ८ तह पंडियं ९ मीसं १० ॥ १ ॥ छउमत्थ ११ मरणकेवलि १२, विहाणसं १३ गिद्धपिट्ठमरणं १४ च । मरणं भत्तपरिण्णा १५, इंगिणि १६ पाओवगमणं १७ च ॥ २ ॥ " एतद्विवरणश्लोकाश्चात्र—" मरणं सप्तदशधा—ऽऽवीचिमरणमादिमम् । जीवानां प्रतिसमया—युःकर्मदलिकत्रुटिः ॥ १ ॥ यान्यायुःकर्मदलिका—न्यनुभूय मृतः सकृत् । मर्तोऽनुभूय तान्येवा—

१ ड-पुस्तके—" एतद्विवरणं चात्र " इत्यपि ॥

वधिमृत्युरयं स्मृतः ॥ २ ॥ नानुभूय च मर्ता च, तदन्तिकमितीरितम् ३ । संयमयोगसन्नस्य, वलाकामरणं भवेत् ४ ॥ ३ ॥ इन्द्रियार्थवशार्तस्य, वशार्तमरणं भवेत् ५ । सशल्यमरणं माय—श्चित्तहीनस्य देहिनः ६ ॥ ४ ॥ मुक्त्वा संख्यायुपस्तिर्यग्—नरान् देवांश्च नारकान् । केषांचिदपि शेषाणां, स्यान्मृतिस्तद्भवाभिधा ७ ॥ ५ ॥ वालाख्यं स्यादविरते ८, विरते विरताभिधम् ९ । मरणं मिश्रमाख्यातं, विरताविरते पुनः १० ॥ ६ ॥ चतुर्ज्ञानवतां याव—च्छद्मस्थं मरणं स्मृतम् ११ । स्यात् केवलिमरणं तु, केवलज्ञानशालिनाम् १२ ॥ ७ ॥ गृद्धादिभक्षणाद्गार्द्धपृष्ठं मरणमुच्यते १३ । उद्बन्धनादिना मृत्यु—र्भवेद्वैहानसाभिधम् १४ ॥ ८ ॥ मृत्युर्भक्तपरिज्ञाख्यः, सर्वाहारविवर्जनात् । मुक्तनिःशेषसङ्गस्य, जन्तोः सप्रतिकर्मणः १५ ॥ ९ ॥ इङ्गित्या(ता)ख्यं तदेवान्य—त्प्रतिकर्मविवर्जितम् १६ । पादपोपगमाख्यं तु, निश्चलं छिन्नवृक्षवत् १७ ॥ १० ॥ मरणेष्वेषु सर्वेषु, त्रयमन्तिममुत्तमम् । ज्वलनाद्युपघातैस्तत्र कर्तव्यं विवेकिना १८ ॥ ११ ॥ इति गाथार्थः ॥ २४ ॥

अथ चतुर्विंशतितमीं षट्त्रिंशिकामाह—

**वीसमसमाहिठाणे, दसेसणा पंच गासदोसे य ।**
**मिच्छत्तं च चयंतो, छत्तीसगुणो गुरू जयउ ॥ २५ ॥**

व्याख्या—विंशतिरसमाधिस्थानानि, दशैषणादोषान्, पञ्च ग्रासैषणादोषान्, मिथ्यात्वं च त्यजन्, इत्येवं षट्त्रिंशद्गुणो गुरुर्जयत्विति संक्षेपार्थः, विस्तरार्थस्त्वयम्—विंशतिरसमाधिस्थानानि द्रुतद्रुतचारादीनि । यदागमः—" दवदवचारि १ पमज्जिय २, दुपमज्जिय ३ रित्तसिज्ज ४ आसणिए ५ । रायणियपरिभासी ६, थेर ७ भूओवाई ८ य ॥ १ ॥

२ ड-पुस्तके—"—वैहायानसाभिधम् " इत्यपि ॥

संजलण ९ कोहणे १० पि—ट्ठमंसिए ११ भिक्खभिक्खमोहारी १२ । अहिगरणकरोदीरण १३, अकालसज्झायकारी १४ य ॥ २ ॥ ससरक्खपाणिपाए १५, सद्दकरे १६ कलह १७ झंझकारी १८ य । सूरप्पमाणभोई १९, वीसइमे एसणासमिए २० ॥ ३ ॥ " इत्येतत्पदसंस्कारश्चायम्—द्रुतद्रुतचारी १, अप्रमार्जितस्थायी २, दुष्प्रमार्जितस्थायी ३, घट्टशालादिसेवी ४, अतिरिक्तशयनादिसेवी ५, रत्नाधिकपरिभाषी ६, स्थविरोपघाती ७, भूतोपघाती ८, संजलनोपघाती ९, दीर्घकोपी १०, पराङ्मुखावर्णवादी ११, अभीक्ष्णमभीक्ष्णं चौरस्त्वमित्यादिवादी १२, उपशान्ताधिकरणोदीरकः १३, अकालस्वाध्यायकारी च १४, सरजस्कपाणिपादः १५, रात्रावुच्चैः शब्दकरः १६, कलहकरः १७, गणभेदकारी १८, सूरप्रमाणभोजी १९, एषणायामसमितः २० इति ॥ तथा दशैषणादोषाः शङ्कितादयः । यदाह—" संकीय १ मक्खिय २ निक्खित्त ३ पिहिय ४ साहरिय ५ दायगु ६ म्मीसे ७ । अपरिणय ८ लित्त ९ छड्डिय १०, एसणदोसा दस हवंति ॥ १ ॥ " एतद्भमनिका यथा—शुद्धमप्यशुद्धमिति शङ्कितमकल्प्यम् १ । म्रक्षितं सचित्तेन आगमगर्हितेन वा खरण्टितम् २ । सचित्तपृथिव्यादिषु स्थापितं निक्षिप्तम् ३ । सचित्तेन फलादिना छन्नं पिहितम् ४ । अयोग्यसचित्तादिपृन्सार्य यद्दीयते तत्संहृतम् ५ । दायकदोषा आभिर्गाथाभिरवसेयाः—" थेरऽपहुपंडवेविरजरियंधव्वत्तमत्तउम्मत्ते । करचरणच्छिन्नपगलिय—नियलंडुपाउयारूढे ॥ १ ॥ खंडइ पीसइ भुंजइ, कत्तइ लोढेइ विक्खिणइ पिंजइ । दलइ विरोलइ जेमइ, जा गुव्विणि बालवच्छा य ॥ २ ॥ तह छक्काए गिण्हइ, घट्टइ आरभइ खिवइ दट्ठु जई । साहरण चोग्गियंग, देइ परक्कं परट्ठं वा ॥ ३ ॥ ठवइ वलिं उव्वत्तइ, पिढराइ तहा सपच्चवाया जा । दिंतेसु एवमाइसु, ओहेण मुणी न गिण्हंतिद ॥ ४ ॥ योग्यमयोग्यं च

१ स्थविरप्रभुपण्डकवेपथुज्वरितान्धाव्यक्तमत्तो मत्तः । छिन्नकरचरणप्रगलितकुष्ठनिगडितदिवपादुकारूढ ॥ २ क-पुस्तके—" ठवउत्तइ " इत्यपि ॥

संमीलय यद्दीयते तदुन्मिश्रम् ७ । अपरिणतं द्विधाऽप्रासुकीभूतं द्रव्यापरिणतं, दायकादेरशुद्धे भावे भावापरिणतम् ८। दध्या-दिलेपकृतसंसृष्टाभ्यां मात्रकराभ्यां सावशेषद्रव्येण च त्रिभिः पदैरष्टभङ्ग्यां विषमभङ्गेषु लिप्तम् ९ । यत्र दीयमाने परिसाटि-स्तच्छर्दितम् १० । एते एषणादोषा दश । ग्रासैषणादोषाः पञ्च संयोजनाद्याः । यदाह—"संजोअणा१ पमाणे२, इंगाले३ धूम४ कारणे५ तह य ।" इति । संयोजनं लौल्यात् क्षीरशर्करादिमीलनम् १। प्रमाणातिरिक्तं षड्भागोनमात्राधिकम् २ । इ-ङ्गालं सरागप्रशंसम्३ । सधूमकं सद्वेषनिन्दितम् ४। अकारणं वेदनादिषट्कारणरहित५मिति ॥ एकविधं मिथ्यात्वं चादेवादि-ष्वपि देवत्वादिबुद्धिलक्षणम् । यदाह—"अदेवे देवबुद्धिर्या, गुरुधीरगुरौ च या । अधर्मे धर्मबुद्धिश्च, मिथ्यात्वं तद्विपर्य-यात् ॥ १ ॥ मिथ्यात्वं परमो रोगो, मिथ्यात्वं परमं तमः । मिथ्यात्वं परमः शत्रु-र्मिथ्यात्वं परमं विषम् ॥ २ ॥ जन्मन्येक-त्र दुःखाय, रोगो ध्वान्तं रिपुर्विषम् । अपि जन्मसहस्रेषु, मिथ्यात्वमचिकित्सितम् ॥ ३ ॥" इत्येतान् दोषान् त्यजन् षट्त्रिं-शद्गुणो गुरुर्जयतु । इति गाथार्थः ॥ २५ ॥

अथ पञ्चविंशतितमीं षट्त्रिंशिकामाह—

**इगवीससबलचाया, सिक्खासीलस्स पनरठाणाणं ।**
**अंगीकरणेण सया, छत्तीसगुणो गुरू जयउ ॥ २६ ॥**

व्याख्या—गदितार्थैव । नवरं शबलतास्थानान्येकविंशतिः दगलेपादीनि । यदागमः—"वरिसंतो दस१ मास-स्स तिन्नि दगलेव माइठाणाई। आउट्टिया करंतो२,वह३ लिया४ दिन्न५ मेहुन्ने६ ॥१॥ निसिभत्त७ कम्म८निवपिं-ड९ कीयमाई अभिक्खसं-वरिए १४ । कंदाई भुजंतो १५, उदउल्लहत्थाइगहणं च १६ ॥ २ ॥ सचित्तसिलाकोले १७, अइरावणिठाण १८ णिद्धस-सरक्खे १९ । छम्मासंतो गणसं-कमं च २० करकम्म २१ मिय सबला ॥ ३ ॥" एतद्भावनिका यथा—वर्षान्तर्लेपानां दशकमाकुट्या कुर्वतः साधोः प्रथमं शबलस्थानम् १ । मासान्तर्दकलेपत्रयं कुर्वतो द्वितीयम् २ । वधं कुर्वतस्तृतीयम् ३ । पर-मत्रानाकुट्येति घटाकोटिमाटीकते । आकुट्टिवधे हि मूलप्रायश्चित्तापत्तिः, शबलता त्वप्राप्तमूलस्येति । यदुच्यते—"अवराहंमि पयणुए, जेणं मूलं न वचए साहू । सबलंनि तं चरित्तं, तम्हा सबलत्तणं विंति ॥ १ ॥" तथा-ऽलीकं अल्पनश्चतुर्थम् ४ । अदत्तं गृह्णतः पञ्चमम् ५ । मैथुनं सेवमानस्य षष्ठम् ६ । निशि भुञ्जानस्य सप्त-मम् ७ । आधाकर्मिकं भुञ्जानस्याष्टमम् ८ । नृपपिण्डं भुञ्जानस्य नवमम् ९ । क्रीतं गृह्णतो दशमम् १० । आदिशब्दात्संप्र-दायाच्च प्रामित्यं गृण्हत एकादशमम् ११ । अभ्याहृतं गृह्णतो द्वादशमम् १२ । अच्छिद्यं गृह्णतस्त्रयोदशमम् १३ । अभीक्ष्ण-मसंवरस्यामत्याख्यानवतश्चतुर्दशम् १४ । कन्दादि भुञ्जानस्य पञ्चदशम् १५ । उदकार्द्रहस्ताद्गृह्णतः षोडशम् १६ । सचित्त-शिलाकोलस्थायिनः सप्तदशं, तत्र शिला सचित्तपृथिवीकायमयी, कोलो घुणस्तद्युक्तं काष्ठादिकमपि कोलमिति १७ । तथाऽनन्तरितावनिस्थाने निषीदतोऽष्टादशम् १८ । स्निग्धसरजस्कशरीरस्य भुञ्जानस्यैकोनविंशतितमम् १९ । षण्मासान्त-र्गणाद्गणान्तरसंक्रमणं कुर्वतो विंशतितमम् २० । करकर्मानङ्गक्रीडादिककामोपक्रमं कुर्वत एकविंशतितमम् २१ । शबलतास्था-नमिति । एतेषां परित्यागेन परिहारेणेत्यर्थः । तथा शिक्षाशीलस्य पञ्चदशस्थानानामङ्गीकरणेन, तानि च नीचैर्वृत्त्यादीनि । यदार्षम्—"अह पनरठाणेहिं, सिक्खासीलुत्ति वुच्चइ । नीयावित्ती १ अचवले २, अमाई ३ अकुतूहले ४ ॥ १ ॥ अप्पं चाहिक्खिवई ५, पबंधं च न कुव्वई ६ । मित्तिज्जमाणो भयई ७, सुअं लद्धुं न मज्जई ८ ॥ २ ॥ न य पावपरिक्खेवी ९,

१ ड-पुस्तके-"पनरस-" इत्यपि ॥

न य मित्तेसु कुप्पइ १० । अप्पियस्सावि मित्तस्स, रहे कल्लाणभासई ११ ॥ ३ ॥ कलहडमरवज्जए १२, बुद्धे अभिजाइए १३ । हरिमं १४ पडिसंलीणे १५, सुविणीउत्ति वुच्चइ ॥ ४ ॥ वसे गुरुकुले निच्चं, जोगवं उवहाणवं । पियंकरे पियंवाई, से सिक्खं लद्धुमरिहइ ॥ ५ ॥" इति गाथार्थः ॥ २६ ॥

अथ षड्विंशतितमीं षट्त्रिंशिकामाह—

**बावीसपरीसहहियासणेण चाएण चउदसण्हं च । अब्भिंतरगंथाणं, छत्तीसगुणो गुरू जयउ ॥२७॥**

व्याख्या—उत्तानार्थैव । नवरं द्वाविंशतिपरीषहाः क्षुत्पिपासादयः । यदागमः—"खुहा१ पिवासा२ सी३ उण्हं४ दंसा५ऽचेला६ रइत्थिओ८ । चरिया९, निसीहिया१० सिज्जा११, अक्कोस१२ वह१३ जायणा१४ ॥१॥ अलाभ१५ रोग१६ तणफासा१७, मल१८ सक्कार१९ परीसहा । पन्ना२० अन्नाण२१ सम्मत्तं२२, इअ बावीस परीसहा ॥२॥" तथा—"पन्नाऽना-णपरीसह, नाणावरणंमि हुंति दो चेव । इक्को अ अंतराए, अलाभपरीसहो चेव ॥ १ ॥ अरई अचेल इत्थी, निसीहिया जा-यणा य अक्कोसा । सक्कारपुरक्कारे, चरित्तमोहंमि सत्तेव ॥ ४ ॥ दंसणमोहे दंसण-परीसहो नियमसो हवइ इक्को । सेसा परी-सहा खलु, इक्कारस वेयणिज्जंमि ॥ ३ ॥ बावीसं बायरसं-पराइ चउदस य सुहुमरागंमि । छउमत्थवीयरागे, चउदस इक्कार-स जिणंमि ॥ ९ ॥ वीसं उक्कोसपए, वट्टंति जहण्णओ य इक्कं च । सीओसिणचरियनिसी-हिया य जुगवं न वट्टंति ॥ ५ ॥" अभ्यन्तरग्रन्थचतुर्दशकं रागद्वेषादिकम् । यदाह—"रोगो दोसो अ मिच्छत्तं, कसाया हासछक्कगं । एगो वेउत्तिमे गंथा, अंतरंगा चउद्दस ॥ १ ॥" इति गाथार्थः ॥ २७ ॥

अथ सप्तविंशतितमीं षट्त्रिंशिकामाह—

**पणवेईयाविसुद्धं, छद्दोसविमुक्क पंचवीसविहं । पडिलेहणं कुणंतो, छत्तीसगुणो गुरू जयउ ॥२८॥**

व्याख्या—पञ्चविधवेदिकाविशुद्धं षड्दोषविप्रमुक्तं पञ्चविंशतिविधां प्रतिलेखनां कुर्वन्, इति षट्त्रिंशद्गुणो गुरुर्जयत्विति संक्षेपार्थः । विस्तरार्थस्त्वयम्—पञ्चविधवेदिकादोषाः प्रमारितपादादयः । यदाह—" पमरियपय १ जाणुवर्हि २, अंतोलग्गंति ३ गेगभुअवाहिं ५ । इअ वेइयपणगेणं, सुद्धं पडिलेहणं कुज्जा ॥ १ ॥ " षड्दोषा आरभटादयः । यदाह—" आरभडा १ संमद्दा २, मोसलि ३ पप्फोडणा ४ य वक्खित्ता ५ । नच्चाविय ६ त्ति पडिले–हणाए वज्जिज्ज छद्दोसे ॥ १ ॥ वितहकरणेण तुरियं, अन्नन्नागिन्हणे व आरभडा । अंतो व हुज्ज कोणा, निसियण तत्थेव संमद्दा ॥ २ ॥ अह उड्ढतिरिय-भूमा–लभित्तिसंघट्टणा भवे मुसली । पप्फोडण वत्थस्स य, गाढं रयगुंडियस्सेव ॥ ३ ॥ वक्खित्ता सुत्ताइसु, विमग्गणेणं च जा कया होइ । वत्थे अप्पाणम्मि उ, चउहा नच्चाविआ होइ ॥ ४ ॥ " प्रतिलेखनायाः पञ्चविंशतिभेदास्तु दृष्टिप्रतिलेखनाद्याः । यदाह—" दिट्ठिपडिलेह एगा, छ उड्ढपक्खोड तिगतिगंतिरिया । अक्खोडपमज्जणया, नव नव पणवीस पडिलेहा ॥ १ ॥ " इति गाथार्थः ॥ २८ ॥

अथाष्टाविंशतितमीं षट्त्रिंशिकामाह—

**सत्तावीसविहेहिं, अणगारगुणेहिं भूसियसरीरो । नवकोडिसुद्धगाही, छत्तीसगुणो गुरू जयउ ॥ २९ ॥**

व्याख्या—कण्ठ्या । नवरं अनगारगुणा व्रतषट्केन्द्रियनिग्रहादिकाः । यदाह—" वयछक्कमिंदियाणं, (वि)निग्गहो भावकरणसच्चं च । खमयाविरागयाविं य, मणमाईणं निरोहो अ ॥ १ ॥ कायाण छक्कजोग–म्मि जुत्तया वेयणाहियासणया । तह मारणंतिअहिया–सणा य एएऽणगारगुणा ॥ २ ॥ " नवकोटिविशुद्धं त्वनाहतादिकम् । यदाह—" न हणइ न हणावेइ, हणंतं नाणुजाणइ । न पयइ न पयावेइ, पयंतं नाणुजाणइ ॥ १ ॥ न किणइ न किणावेइ, किणंतं नाणुजाणइ । जो भिक्खू तस्स तं होइ, नवकोडिविसुद्धयं ॥ २ ॥ " इति गाथार्थः ॥ २९ ॥

अथैकोनत्रिंशत्तमीं षट्त्रिंशिकामाह—

**अडवीसलद्धिपयडण–पउणो लोए तहा पयासंतो ।**
**अडविहपभावगत्तं, छत्तीसगुणो गुरू जयउ ॥ ३० ॥**

व्याख्या—सुबोधैव । नवरं अष्टाविंशतिलब्धय आमर्षौषध्यादयः । यदाह—"आमोसहि १ विप्पोसहि २, खेलोसहि ३ जल्लमोसही चेव ४ । सव्वोसहि ५ संभिन्ने ६, ओहि ७ रिउ ८ विउलमइलद्धी ९ ॥ १ ॥ चारण १० आसीविस ११ के–वली य १२ गणहारिणो १३ य पुव्वधरा १४ । अरिहंत १५ चक्कवट्टी १६, वलदेवा १७ वासुदेवा य १८ ॥ २ ॥ खीरमहुसप्पिआसव १९, कुट्ठयबुद्धी २० पयाणुसारी य २१ । तह बीअबुद्धि २२ तेअग २३, आहारग २४ सीयलेसा य २५ ॥ ३ ॥ वेउव्वियदेहलद्धी २६, अक्खीणमहाणसी २७ पुलागा य २८ । परिणामतववसेणं, एगाओ हुंति लद्धीओ ॥४॥" एतद्विवरणगाथाश्चेमाः—" संफरिसणमामोसो, मुत्तपुरीसाण विप्पुसो वावि । अन्ने विडित्ति विट्ठं, भासंति पइत्ति पासवणं ॥ १ ॥ एए अन्नेवि वहू, जेसिं सव्वेवि सुरहिणोऽवयवा । रोगोवसमसमत्था, ते हुंति तहोसहिं पत्ता ॥ २ ॥ जो सुणइ सव्वओ सुण–इ सव्वविसए य सव्वसोएहिं । सुणइ वहुए व सद्दे, भिन्ने संभिन्नसोओ सो ॥ ३ ॥ रिउ सामन्नं तम्मत्तगाहिणी रिउमई मणोनाणं । पायं विसेसविमुहं, घडमित्तं चिंतियं मुणइ ॥ ४ ॥ विउलं वत्थुविसेसं, नाणं तग्गाहिणी मई विउला । चिंतियमणुसरइ घडं, पसंगओ पज्जवसएहिं ॥५॥ अइसयचरणसमत्था, जंघाविज्जाहिं चारणा मुणओ । जंघाइ जाइ पढमो, निस्सं काउं रविकरेवि ॥ ६ ॥ एगुप्पाएण गओ, रुअगवरम्मी तओ पडिनियत्तो । वीएणं नंदीसरमेइ इह तइयएण पुणो ॥ ७ ॥ ऊर्ध्वम्—पढमेण पंडगवणं, वीउप्पाएण नंदणं एइ । तइउप्पाएण तओ, इह जंघाचारणो एइ ॥८॥ पढमेण माणुसोत्तर-नगंमि नंदीसरं तु वीएणं । एइ तओ तइएणं, कयचेइयवंदणो इहयं ॥ ९ ॥ पढमेण नंदणवणं, वीउप्पाएण पंडगवणंमि । एइ इहं तइएणं, जो विज्जाचारणो होइ ॥ १० ॥ आसीविसा उ दुविहा, जाइकम्मेहिं तत्थ पढमिल्ला । सप्पाई वीया पुण, मुणिणो खलु निग्गहसमत्था ॥ ११ ॥ केवलिगणपुव्वधरा–ऽरिहंतवलवासुदेवचक्कित्ति । सत्त महालद्धीओ, पाएणं सुप्पसिद्धाओ ॥ १२ ॥ खीरमहुसप्पिसा ओ–वमाणवयणा तयासवा हुंति । कुट्ठयधन्नसुनिच्चल–सुत्तत्था कुट्ठबुद्धी य ॥ १३ ॥ जो सुत्तपएण वहुं, सुअमणुधावइ पयाणुसारी सो । जो अत्थपएणऽत्थं, अणुसरइ स वीयबुद्धीओ ॥ १४ ॥ चत्तारि अ वाराओ, चउदसपुव्वी करेइ आहारं । संसारंमि वसंतो, एगभवे दुन्नि वाराओ ॥ १५ ॥ समओ जहण्णमंतर, उक्कोसेणं तु जाव छम्मासा । आहारसरीराणं, उक्कोसेणं नवसहस्सा ॥ १६ ॥ तित्थयररिद्धिदंसण, सुहुमपयत्थो-वगाहहेउं वा । संसयवुच्छेअत्थं, गमणं जिणपायमूलंमि ॥ १७ ॥ समणे अवगअवेअं, परिहारपुलायमप्पमत्तं च । चउदसपुव्वि आहा–रगं च न कयाइ संहरइ ॥ १८ ॥ वेउव्वियलद्धीए, अणु व्व सुहुमा खणेण जायंति । कंचणगिरि व्व गुरुणो, लहुदेहा अक्कतूलं व ॥ १९ ॥ पडओ पडकोडीओ, पकुणंति घडाओ घडसहस्सा उ । चिंतिअमित्तं रूवं, खणेण विरयंति किं वहुणा ? ॥ २० ॥ अंतमुहुत्तं नरए, मुहुत्त चत्तारि तिरियमणुएसु । देवेसु अद्धमासो, उक्कोस विउव्वणाकालो

---

* " [illegible] " इति लिखितप्रतौ ।

॥ २१ ॥ अक्खीणमहाणसिया, भिक्खं जेणाणियं पुणो तेणं । परिभुत्तं चिय खिज्जइ, बहुएहिवि न उण अन्नेहिं ॥ २२ ॥"
अक्षीणमहालयाऽप्येनदन्तर्गतैव । " संखाइयाण कज्जे, चुण्णिज्जा चक्कवट्टिमवि जीए। तीए लद्धीइ जुओ, लद्धिपुलाओ मुणे-
यव्वो ॥ २३ ॥ भवसिद्धियपुरिसाणं, एयाओ हुंति सयललद्धीओ । भवसिद्धियमहिलाणं, जित्तिय जायंति तं वुच्छं ॥२४॥
अरिहंतचक्किकेसव-बलसंभिन्ने य चारणा पुव्वा । गणहरपुलायआहा-रगं च न हु भवियमहिलाणं ॥ २५ ॥ अभवियपुरि-
साणं पुण, दसपुव्विल्लाउ केवलित्तं च । उज्जुमई विउलमई, तेरस एयाओ न हवंति ॥ २६ ॥ अभवियमहिलाणं पुण, ए-
याओ न हुंति भणियलद्धीओ । महुखीरासवलद्धी, वि नेव सेसाउ अविरुद्धा ॥ २७ ॥ " तथाऽष्टविधप्रभावकता प्राव-
निकादिभिर्गुणैः । यदाह—" पावयणी १ धम्मकही २, वाई ३ नेमित्तिओ ४ तवस्सी य ५ । विज्जा ६ सिद्धो ७ अ
कई ८, अट्ठेव पभावगा भणिया ॥ १ ॥ कालुचियसुत्तधरो, पावयणी तित्थवाहगो सूरी । पडिबोहियभव्वजणो, धम्मकही
कहणलद्धिल्लो ॥ २ ॥ वाई पमाणकुसलो, रायदुवारेऽवि लद्धमाहप्पो । नेमित्तिओ निमित्तं, कज्जंमि पउंजए निउणं ॥ ३ ॥
जिणमयमुब्भासंतो, विगिट्ठतववणेहिं भुंजइ तवस्सी । सिद्धबहुविज्जमंतो, विज्जावंतो य उचियण्णू ॥ ४ ॥ संखाइकज्जसाह-
ग-चुण्णंजणजोगसिद्धओ सिद्धो । भूयत्थसत्थगंथी, जिणसासणजाणओ सुकवी ॥ ५ ॥ अज्ज(ज)रक्ख १ नंदिसेणो २,
सिरिगुत्तविणेय ३ भद्दबाहु य ४ । खवग ५ ज्जखवड ६ समिया ७, दिवायरो ८ वाईयाहरणा ॥ ६ ॥ अमीषां चरित्राणि
कथानकेभ्योऽवसेयानि । इति गाथार्थः ॥ ३० ॥

अथ त्रिंशत्तमीं षट्त्रिंशिकामाह—

१ " दक्खट्ठिमवि " इति ॥ २ ब-पुस्तके-" वा इहाहरणा " इत्यादि । ३ ड-पुस्तके-' अमीषां चरित्राणि दर्शनशुद्धिप्रकरणवृत्तौ ज्ञेयानि " इत्यधिकः पाठः ॥

**एगूणतीसभेए, पावसुए दूरओ विवज्जंतो। सगविहसोहिगुणण्णू, छत्तीसगुणो गुरू जयउ ॥ ३१ ॥**

व्याख्या—सुगमैव । नवरं एकोनत्रिंशत् पापश्रुतभेदा अष्टनिमित्ताद्याद्याः। यदाह—" अट्ठनिमित्तंगाइं, दिव्वुप्पायं-
तलिक्खभोमं च । अंगं सरलक्खण वं-जणं च तिविहं पुणिक्किक्कं ॥ १ ॥ सुत्तं वित्ती तह व-त्तियं च पावसुअमउणतीसविहं ।
गंधव्वनट्टवत्थु-माउं धणुवेयसंजुत्तं ॥ २ ॥ " सप्त शोधिगुणास्तु लघुताह्लादजनकत्वादयः । यदागमः—" लहुया १
ऽल्हाईजणणं २, अप्पपरनियत्ति ३ अज्जवंसोही ४ । दुक्करकरणं ५ विणओ ६, निस्सल्लत्तं च सोहिगुणा ७ ॥ १ ॥ विय-
डंतस्स उ दोसे, असंकिलिट्ठस्स सुद्धवित्तस्स । सो परिहायइ बहुसो, पुव्वज्जियकम्मपब्भारो ॥ २ ॥ जह जह सुद्धसहावो,
दोसे वियडेइ सम्ममुवउत्तो । तह तह पल्हाइ मुणी, नवनवसंवेगसद्धाए ॥ ३ ॥ न कुणइ पुणोऽवराहे, पच्छित्तभया निय-
त्तिओ अप्पा । तं दट्ठुं अकुणंतो, पावाओ नियत्तिया अन्ने ॥ ४ ॥ सोही उज्जुयभूयस्स, धम्मो सुद्धस्स चिट्ठइ । निव्वाणं
परमं जाइ, घयसित्तु व्व पावए ॥ ५ ॥ लज्जा अभिमाणाई, महाबलेऽणेगभवसदब्भत्या । वियडंति जे अगणिउं, ते दुक्कर-
कारगा भणिया ॥ ६ ॥ तित्थयराणापालण, गुरुजणविणओ पसेविओ होइ । आलोअणापयाणे, सम्मं नाणाइविणओऽवि
॥ ७ ॥ जं जायइ निस्सल्लो, नियमा आलोइउं कुणइ सत्थो । नो अन्नहत्ति तम्हा, निस्सल्लत्तं गुणो तीए ॥ ८ ॥ " इति
गाथार्थः ॥ ३१ ॥

अथैकत्रिंशत्तमीं षट्त्रिंशिकामाह—

**महमोहबंधठाणे, तीसं तह अंतरारिछक्कं च । लोए निवारयंतो, छत्तीसगुणो गुरू जयउ ॥ ३२ ॥**

व्याख्या—स्फुटार्थैव । नवरं त्रिंशन्महामोहबन्धस्थानानि अतिसंक्लिष्टपरिणामेन जन्तुघातकत्वादीनि । यदागमः—"वा-
रिमज्झेऽवगाहित्ता, तसे पाणेवि हिंसइ १ । छाएइ मुहं हत्थेणं, अंतोनायं गलेरवं २ ॥ १ ॥ सीसावेढेण वेढित्ता, संकिलेसेण मारइ ३ ।
सीसम्मि जे य आहंतु, दुहमारेण हिंसइ ४ ॥ २ ॥ बहुजणस्स नेयारं, दीवं ताणं च पाणिणं ५ । साहारणे गिलाणंमि, पहुकिच्चं न कु-
व्वइ ६ ॥ ३ ॥ साहूण धम्मकम्माओ, जो भंसेइ उवट्ठियं ७ । नेयाउयस्स मग्गस्स, अवगारंमि वट्टइ ८ ॥ ४ ॥ जिणाणं णंतनाणीणं, अवण्णं
जे पभासइ ९ । आयरियउवज्झाए, खिंसई मंदबुद्धिए १० ॥ ५ ॥ तेसिमेव य नाणीणं, सम्मं नो पडितप्पइ ११ । पुणो पुणो अहिगरणं,
उप्पाए तित्थ भेयए १२ ॥ ६ ॥ जाणं आहम्मिए जोए, पउंजइ पुणो पुणो १३ । कामे वमित्ता पत्थेइ, इहंमि भविए इय १४ ॥ ७ ॥ अ-
भिक्खणं अबहुस्सुत्तं, जे भासंति बहुस्सुए १५ । तह य अतवस्सी य, जे तवस्सित्तिऽहं वए १६ ॥ ८ ॥ जायतेएण बहुजणं, अन्तोधू-
मेण हिंसई १७ । अकिच्चमप्पणा काउं, कयमेएण भासइ १८ ॥ ९ ॥ नियडुवहिपणिहीए, पलिउंचे साइजोगजुत्ते य १९ । बेइ सव्वं
मुसं वयसि, अज्झीणं झंझए सया २० ॥ १० ॥ अद्धाणंमि पवेसित्ता, जो धणं हरइ पाणिणं २१ । वीसंभित्तो उवाएणं,
दारे तस्सेव लुब्भइ २२ ॥ ११ ॥ अभिक्खमकुमारेउ, कुमारेऽहं च भासए २३ । एवमबंभयारीउ, बंभयारित्तिऽहं वए २४
॥ १२ ॥ जेणेवेसरियं नीए, वित्ते तस्सेव लुब्भइ २५ । तप्पभावुट्ठिए वावि, अंतरायं करेइ से २६ ॥ १३ ॥ सेणावइं पस-
त्थारं, भत्तारं च विहिंसइ २७ । इट्ठस्स वावि निगमस्स, नायगं सिट्ठिमेव वा २८ ॥ १४ ॥ अपस्समाणे पस्सामि, अहं दे-
वत्ति वा वए २९ । अवण्णेणं च देवाणं, महामोहं पकुव्वइ ३० ॥ १५ ॥" अन्तरङ्गारिषट्कं तु अयुक्ततामयुक्तं कामादिकम् ।

१ भारविशेषेण पदे । २ त्वदस्पनाहेऽन्यति । ३ चरमे वस्तुन्यवमस्य योऽर्न्न सातियोग. । ४ मनिच्छेदेन छित्वापि सदा । ५ स्त्रिया । ६ ड-पुस्तके-" कुमारी "॥

यदाह—"कामो१ कोहो२ लोहो३, हरिसो४ माणो५ मओ६ य इअरूवं । दुरियारिछक्कमंतर-मेलद्दपसरं सया कुज्जा ॥ १ ॥" इति गाथार्थः ॥ ३२ ॥

अथ द्वात्रिंशत्तमीं षट्त्रिंशिकामाह—

**इगहियतीसविहाणं, सिद्धगुणाणं च पंच नाणाणं । अणुकित्तणेण सम्मं, छत्तीसगुणो गुरू जयउ ॥३३॥**

व्याख्या—सुगमैव । नवरं एकत्रिंशत् सिद्धगुणाः संस्थानाद्यभावलक्षणाः । यदाह—"पडिसेहणसंठाणे, वण्ण गंध रस फासवेए य । पणपणदुपणट्ठतिहा, इगतीसमकायसंगरुहा ॥ १ ॥" अकायोऽशरीरः१, असङ्गः सङ्गवर्जितः२, अरुहोऽजन्मा३, एभिः सहैकत्रिंशद्भवन्ति । तथा चोक्तम्—"से न दीहे१, न वट्टे२, न तंसे३, न चउरंसे४, न परिमंडले५, न किण्हे६, न नीले७, न लोहिए८, न हालिद्दे९, न सुक्किल्ले१०, न सुरभिगंधे११, न दुरभिगंधे१२, न तित्ते१३, न कडुए१४, न कसाए१५, न अंबिले१६, न महुरे१७, न कक्कडे१८, न मउए१९, न गुरुए२०, न लहुए२१, न सीए२२, न उण्हे२३, न निद्धे२४, न लुक्खे२५, न संगे२६, न रुहे२७, न काए२८, न इत्थी२९, न पुरिसे३०, न नपुंसे३१ । अहवा कम्मे—"नवदरिसणंमि चत्ता-रि आउए पंच आइमे अंते । सेसे दो दो भेया, खीणभिलावेण इगतीसं ॥ १ ॥" ज्ञानपञ्चकं आभिनिबोधिकादिकम् । यदाह—"आभिणिबोहियनाणं, सुअनाणं चेव ओहिनाणं च । तह मणपज्जवनाणं, केवलनाणं च पंचमयं ॥ १ ॥ एतद्विवरणं यथा—अर्थाभिमुखो नियतो बोधोऽभिनिबोधः, अभिनिबोध एव आभिनिबोधिकम्, इकणि, तच्च तत् ज्ञानं चेति समासः । उत्पन्नाविनष्टार्थग्राहकं सांप्रतकालविषयं अवग्रहाद्यष्टाविंशतिभेदभिन्नं आत्मप्रकाशकं

१ अकायविस्तार ॥ २ "सुक्को" इत्यपि । ३ अकायस्य असङ्गस्य अरुहत्वम ॥

आभिनिबोधिकं ज्ञानं, मतिज्ञानमित्यपरपर्यायम् । तथा श्रूयते इति श्रुतं शब्दात्मकं, श्रुतं च तज् ज्ञानं चेति श्रुतज्ञानम् । उत्पन्नानुत्पन्नाविनष्टार्थग्राहकं त्रिकालविषयं अङ्गानङ्गादिभेदभिन्नं इति स्वपरप्रकाशकं श्रुतज्ञानमिति । यत उक्तम्—"सुअनाण महिड्ढीयं, केवलं तयणंतरं । अप्पणो य परेसिं च, जम्हा तं पविर्योहियं ॥ १ ॥" 'चः' समुच्चये, 'एवः' अवधारणे । अवधीयतेऽनेनेत्यवधिः, स च ज्ञानं चेति अवधिज्ञानं, इदमप्युत्पन्नानुत्पन्नविनष्टार्थग्राहकं त्रिकालविषयं अनुगाम्यादिषड्भेदभिन्नं अवधिज्ञानम् । तथा परिः सर्वतो भावे अवनं अवः गमनं वेदनं वा, ततः पर्यवः, मनसि मनसो वा पर्यवः, स एव ज्ञानं मनःपर्यवज्ञानम् । मनुष्यक्षेत्रवर्त्तिसंज्ञिपञ्चेन्द्रियद्रव्यमनोगतभावविज्ञानविषयं, तच्च ऋद्धिप्राप्ताप्रमत्तसंयतसम्यग्दृष्टिपर्याप्तसंख्यातायुष्ककर्मभूमिकगर्भव्युत्क्रान्तिकमनुष्याणामेव संभवि, नैतद्विपरीतानामिति, ऋजुविपुलमतिभेदभिन्नमिति । केवलमसहायं मत्यादिज्ञाननिरपेक्षं, केवलं च तज् ज्ञानं चेति केवलज्ञानं सकललोकालोकप्रकाशकं, तच्च पञ्चमं पञ्चमसंख्यात्मकम् । इति गाथार्थः ॥ ३३ ॥

अथ त्रयस्त्रिंशत्तमीं षट्त्रिंशिकामाह—

**तह बत्तीसविहाणं, जीवाणं रक्खणंमि कयचित्तो । जियचउव्विहोवसग्गो, छत्तीसगुणो गुरू जयउ ॥३४॥**

व्याख्या—उत्तानार्थैव । द्वात्रिंशद्विधा जीवाः, भूजलानलानिलानन्तवनस्पतिरूपाः पञ्च पञ्चापि सूक्ष्मबादरभेदभिन्नत्वाद्दश, ते च समत्येकवनस्पतिका एकादश, तेऽपि द्वित्रिचतुरिन्द्रियाऽसंज्ञिसंज्ञियुताः षोडश, ते च षोडशापि पर्याप्तापर्याप्तभेदभिन्नत्वाद् द्वात्रिंशदिति । तथा चाह—"सुहुमियरभूजलानलवाउवणणंत दस सपत्तेया । बितिचउसन्नियरजुया

१ क-पुस्तके—"-वाहिन-" इत्यपि । २ तद् प्रकाशकतया प्रत्याख्यातम् । ३ पवित्रासग । ४ स्फुटार्थैव ॥

सोलस पज्जेयर दुतीसं ॥ १ ॥" चतुर्विधोपसर्गास्तु देवकृतमानवकृततिर्यक्कृतात्मसंवेदनलक्षणाः । तत्र देवकृतोपसर्गश्चतुर्धा, हास्याद्वा रागाद्वा द्वेषाद्वा विमर्शाद्वा । तत्र हास्याद् व्यन्तरीकृतोपसर्गं ईडरीक्षुल्लकस्येव । रागात् स्नेहरागात् सीतेन्द्रकृतः श्रीरामचन्द्रस्येव । प्रद्वेषात् सङ्गमकृतः श्रीवर्धमानस्येव । विमर्शाद् अश्रद्धानपरामरकृतो नन्दिषेणस्येव ॥ तथा मानवकृतोपसर्गोऽपि चतुर्धा, हास्याद्वा रागाद्वा द्वेषाद्वा विमर्शाद्वा । तत्र हास्याद्वेश्यासुताकृतः क्षुल्लकस्येव । रागात्कोशाकृतः श्रीस्थूलभद्रस्येव । प्रद्वेषात्सोमिलकृतो गजसुकुमालस्येव । विमर्शान्नृपतिकारितो गजाभिरूढमहामात्रोत्पादितत्रासक्रमत्यक्तकतिचिच्चीवराया वृद्धार्यिकाया इव ॥ तिर्यक्कृतोपसर्गोऽपि चतुर्धा, भयाद्वा प्रद्वेषाद्वा आहारहेतोर्वा अपत्यालयसंरक्षणार्थं वा । तत्र भयात् मण्डलकुण्डलिप्रभृतिकृतो भवति इति सुप्रतीतमेव । प्रद्वेषाच्चण्डकौशिकसर्पकृतो भगवद्वीरस्येव । आहारहेतोर्व्याघ्रीकृतः सुकोशलस्येव । अपत्यालयसंरक्षणार्थं गोसिंहादिकृतो भवतीत्यपि सुप्रतीतमेव ॥ तथाऽऽत्मसंवेदनोपसर्गोऽपि चतुर्धा, सङ्घट्टनाद्वा, प्रपतनाद्वा, स्तम्भनाद्वा, लेशनाद्वा । तत्र संघट्टनात्स्वयमेवाक्षिरजोमलनादिकृतः स्यादिति । प्रपतनाद्दुःस्थपादस्य सहसालग्नगाढप्रहारस्येव । स्तम्भनान्मूर्छितवातप्रयोगक्षणस्तब्धीभूतहस्तपादादेरिव । लेशनाद्गाढरोगकर्शिताङ्गभाग्यस्येव ॥ अन्ये तु देवकृतोपसर्गभेदेषु रागाद्वेति पदं परिहृत्य चतुर्थं पदं विमर्ष ( र्श ) प्रद्वेषादिद्विक्त्रिसंयोगसंभवं पठन्ति । तथा मानवकृतोपसर्गभेदेष्वपि रागाद्वेति पदं परिहृत्य कुशीलप्रतिसेवनाख्यं चतुर्थं पदं वदन्ति इति । तथा चोक्तम्—"उवसज्जणमुवसग्गो, तेण तओ वाऽवसज्जए जम्हा । सो दिव्वमणुयतेरिच्छआ...ऽभेयणाभेओ ॥ १ ॥ हासप्पओसवीमंसुभयपयभेयओ भवे दिव्वो । एवं चिय माणुस्सो, कुसीलपडीसेवण चउत्थो ॥ २ ॥ तिरिओ भयप्पओसा-हारावच्चाइरक्खणत्थं वा । घट्टणथंभ पवडण-

२ क-पुस्तके—"चतुर्विधः" इत्यपि ॥

लेसणओ वाऽऽयसंवेओ ॥ ३ ॥" इति गाथार्थः ॥ ३४ ॥

अथ चतुस्त्रिंशत्तमीं षट्त्रिंशिकामाह—

**बत्तीसदोसविरहिय-वंदणदाणस्स निच्चमहिगारी। चउविहविगहविरत्तो, छत्तीसगुणो गुरू जयउ ॥३५॥**

व्याख्या—कण्ठ्या । नवरं द्वात्रिंशद् वन्दनकदोषाः, अनादृतादयः । यदाह—" अणाढियं१ च थद्धं२ च, पविद्धं३ परिपिंडियं ४ । टोलगइ५ अंकुसं६ चेव, तहा कच्छभरिंगियं ७ ॥ १ ॥ मच्छुव्वत्तं८ मणसा, पउट्टं९ तह य वेइयाबद्धं१० । भयसा ११ चेव भयंतं१२, मित्ती१३ गारव१४ कारणा१५ ॥ २ ॥ तेणियं१६ पडिणियं१७ चेव, रुट्ठं१८ तज्जियमेव१९ य । सढं२० च हीलियं२१ चेव, तह विप्पलिउंचियं२२ ॥ ३ ॥ दिट्ठमदिट्ठं२३ च तहा, सिंगं२४ च करमोयणं २५। आलिद्ध२६ मणालिद्धं २७, ऊणं२८ उत्तरचूलियं२९ ॥ ४ ॥ मूयं३० च ढड्ढरं३१ चेव, चुडलियं च अपच्छिमं३२ । बत्तीसदोसपरिसुद्धं, किइकम्मं पउंजए ॥ ५ ॥ आयरकरणं आढा, तव्विवरीयं अणाढियं होइ । दव्वे भावे थद्धो, चउभंगो दव्वओ भइओ ॥ ६ ॥ पव्विद्धमणुवयारं, जं अप्पंतोणिजंतिओ होइ । जत्थ व तत्थ व उज्झइ, कयकिच्चोऽवक्खरं चेव ॥७॥ संपिंडिए वि वंदइ, परिपिंडियवयणकरणओ वावि । टोलु व्व उप्फिडंतो, ओसक्कहिसक्कणं कुणइ ॥८॥ उवगरणे हत्थंमि य, घित्तु निवेसेइ अंकुसं चेव । ठियविट्ठरिंगणं जं, तं कच्छभरिंगियं नाम ॥ ९ ॥ उट्ठिंत निवेसंतो, उव्वत्तइ मच्छउ व्व जलमज्झे । वंदिउकामो वऽन्नं, झसु व्व परिअत्तए तुरियं ॥ १० ॥ अप्पपरपच्चएणं, मणप्पओसो अणेगउट्ठाणो । पंचेव वेइयाई, भयंति निज्जूहणाईयं ॥ ११ ॥ भयइ व भइस्सइत्ति य, इय वंदइ ण्होरयं निवेसंतो । एमेव य मित्तीए,

१ वदनामन्यद् नियन्त्रित इव भवति । २ अवकर इव कचवर इव । ३ शिरोनमदिति । ४ मत्स्य इव । ५ निष्काशनादिकम् । ६ ब-पुस्तके—" भयसइत्ति" इत्यपि । ७ आगाम् ॥

तेव । यत्प्रतिक्रमणसूत्रम्—"पडिक्कमामि चउहिं विकहाहिं,—इत्थीकहाए भत्तकहाए देसकहाए रायकहाए ।" अन्यत्रापि पठ्यते—" सातन्वी सुभगा मनोहररुचिः कान्तेक्षणा भोगिनी, तस्या हारि नितम्बबिम्बमथवा विप्रेक्षितं सुभ्रुवः । धिक् तामुष्ट्रगतिं मलीमसतनुं काकस्वरां दुर्भगा-मित्थं स्त्रीजनवर्णनिन्दनकथा दूरेऽस्तु धर्मार्थिनाम् ॥ १ ॥ अहो ! क्षीरस्यान्नं मधुरमधुरं चाज्यखण्डान्वितं चेद्, रसः श्रेष्ठो दध्नो सुखमुखकरं व्यञ्जनेभ्यः किमन्यत् । न पक्वान्नादन्यद्रमयति मनः स्वादु ताम्बूलमेकं, परित्याज्या प्राज्ञैरशनविषया सर्वदैवेति वार्ता ॥ २ ॥ रम्यो मालवकः सुधान्यजनकः काञ्च्यास्तु किं वर्ण्यते ?, दुर्गा गूर्जरभूमिरुद्भटभटा लाटाः किराटोपमाः । काश्मीरे वरमुन्यतां सुखनिधौ स्वर्गोपमाः कुन्तला, वर्ज्या दुर्जनसङ्गवच्च भणिया देशी कथैवंविधा ॥ ३ ॥ राजाऽयं रिपुवारदारणसहः क्षेमङ्करश्चौरहा, युद्धं भीममभूत्तयोः प्रतिकृतं साध्वस्य तेनाधुना । दुष्टोऽयं म्रियतां करोतु सुचिरं राज्यं ममाप्यायुषा, भूयो बन्धनिबन्धनं बुधजनै राज्ञां कथा हीयताम् ॥ ४ ॥" इति गाथार्थः ॥ ३५ ॥

अथ पञ्चत्रिंशत्तमीं षट्त्रिंशिकामाह—

**तित्तीसविहासायण-वज्जणजुग्गो य वीरिआयारं। तिविहं अणिगूहंतो, छत्तीसगुणो गुरू जयउ ॥३६॥**

व्याख्या—सुगमैव । नवरं त्रयस्त्रिंशदाशातना गुरुपुरोगमनादिकाः । यदाह—"पुरओ पक्खाऽसन्ने गंता३ चिट्ठण६ निसीयणा९ऽऽयमणे१० । आलोअण११पडिसुणणे१२,पुव्वालवणे१३य आलोए१४ ॥१॥ तह उवदंस१५ निमंतण१६, खद्धा१७ ययणे१८ तहा अ पडिसुणणे१९ । खद्धत्ति अ२० तत्थगए२१, किं२२ तुम२३ तज्जाय२४ नोसुमणे२५ ॥ २ ॥

१ ब-पुस्तके " कश्मीरे वरमुन्यता" इत्यपि ॥

गारवसिक्खाविणीओहं ॥ १२ ॥ नाणाइतिगं मुत्तुं, कारण इहलोगसाहगं होइ । पूयागारवहेउं, नाणगहणेवि एमेव ॥ १३ ॥ आयरतरेण हंदी, वंदामि तेण पच्छ पणइस्स । वंदणगमुल्लभावो, न करिस्सइ मे पणयभंगं ॥ १४ ॥ होउं परस्स दिट्ठिं, वंदंतो तेणियं हवइ एयं । तेणो विव अप्पाणं, गूहइ उव्भावणा मा मे ॥ १५ ॥ आहारस्स उ काले, नीहारस्सावि होइ पडिणीयं । रोसेण धमधमंतो, जं वंदइ रुट्ठगं तु ॥ १६ ॥ नवि कुप्पसि न पसीयसि, कट्ठसिवो चेव तज्जियं एयं । सीसंगुलिमाईहिं, तज्जेइ गुरुं पणिवयंतो ॥ १७ ॥ वीसंभट्ठाणमिणं, सब्भावजढे सढं हवइ एयं । कवडंति कयवयंति य, सढयावि य हुंति एगट्ठा ॥ १८ ॥ गणिवायगजिट्ठज्जत्ति हीलियं किं तुमे पणिवएणं । दरवंदियंमि वि कहं, करेइ पलिउंचियं एयं ॥ १९ ॥ अंतरिओ तमसे वा, न वंदइ वंदई उ दीसंतो । एवं दिट्ठमदिट्ठं, सिंगं पुण कुंभपासेहिं ॥ २० ॥ करमिव मन्नइ दिंतो, वंदणयं आरिहंतियकरोत्ति । लोइयकराओ मुक्का, न मुच्चिमो वंदणकरस्स ॥ २१ ॥ आलिद्धमणालिद्धं, गुरुपयसीसे य होइ चउभंगो । वयणक्खरेहिं ऊणं, जहण्णकाले वि सेसेहिं ॥ २२ ॥ दाऊण वंदणं मत्थएण वंदामि चूलिया एसा । मूउ व्व सद्दरहिओ, जं वंदइ मूयगं तं तु ॥ २३ ॥ ढड्ढरसरेण जो पुण, सुत्तं घोसेइ ढड्ढरं तमिह । चुडलिं व गिण्हिऊणं, रयहरणं होइ चुडुलीयं ॥ २४ ॥ बत्तीसदोसपरिसुद्धं, किइकम्मं जो पउंजइ गुरूणं । सो पावइ निव्वाणं, अचिरेण विमाणवासं वा ॥ २५ ॥ किइकम्मंपि कुणंतो, न होइ किइकम्मनिज्जराभागी । पणवीसामन्नयरं, साहू ठाणं विराहंतो ॥ २६ ॥" विकथा चतुर्विधा स्त्रीभक्तदेशराजकथारूपा सुमती-

१ वचःदिवा । २ क्षपणाजना । ३ ब-पुस्तके—" विसेसेहिं" इत्यपि ॥ ४ ब-पुस्तके—" चुडुलिय त तु " इत्यपि । ५ ब-पुस्तके—" पडवए " इत्यपि ।
६ ब-पुस्तके—" पणवीसामन्नयरं " इत्यपि ॥

नोसरसि२६ कहं छित्ता२७, परिसं भित्ता२८ अणुट्ठियाइ कहे२९ । संथारपायघट्टण३०, चिट्ठु३१ च्च३२ समासणे३३ यावि ॥ ३ ॥" आसां व्याख्या—गुरोः पुरतः पार्श्वयोरासन्ने च पृष्ठतः प्रत्येकं गमनं स्थानं निषीदनं च कुर्वतः ९ । गुरोः पूर्वं बहिर्गतेनाचमनम् १० । पूर्वं गमनागमनालोचनम् ११ । रात्रौ कः स्वपिति को जागर्ति, इति पृच्छति गुरौ जाग्रतोऽप्यप्रतिश्रवणम् १२ । साध्वादेरागतस्य प्रथममालापनम् १३ । भिक्षां शैक्षकस्य कस्यचिदालोच्य पश्चाद्गुरोरालोचनम् १४ । एवमुपदर्शनम् १५ । निमन्त्रणं च१६ । गुरुमनापृच्छय यथारुचि साधुभ्यः 'खद्धति' प्रचुरं ददतः १७ । गुरोर्यत्किंचिद्दत्त्वा स्वयं स्निग्धमधुराद्युपभोगोऽदनम् १८ । अप्रतिश्रवणं रात्रिवच्छेषकालेऽपि १९ । 'खद्धत्ति' गुरुं प्रति निष्ठुरं भणनम् २० । 'तत्थगयत्ति' तत्रस्थस्यैव प्रतिवचनं ददतः २१ । गुरुं प्रति किमिति भणनम् २२ । त्वंकारश्च २३ । गुरुणा इदं कुरु इत्युक्तो यूयमेव किं न कुरुध्वं, इति तथावचनम् २४ । गुरौ कथां कथयति उपहतमनस्त्वम् २५ । न स्मरसि त्वं नायमर्थः संभवति २६ । स्वयं कथाकथनेन कथाछेदनम् २७ । अधुना भिक्षावेला, इत्यादिमिषैः पर्षद्भेदनम् २८ । अनुत्थितायां पर्षदि सविशेषकथनम् २९ । गुरुशय्यादेः पादेन घट्टनम् ३० । 'चिट्ठत्ति' गुरुशयनादौ निषीदनादि ३१ । एवमुच्चासने, समासनेऽपीति ३२ ॥ तथा त्रिविधं वीर्याचारं मनोवचनकायवीर्याचारलक्षणं सुमतीतमेव । इति गाथार्थः ॥ ३६ ॥

अथ षट्त्रिंशत्तमीं षट्त्रिंशिकामाह—

**गणिसंपयट्ठ चउविह, वत्तीसं तेसु निच्चमाउत्तो । चउविहविणयपवित्तो, छत्तीसगुणो गुरू जयउ ॥३७॥**

व्याख्या—गणिसंपदस्तावदष्टाष्टसंख्याकाः ताः प्रत्येकं चतुर्विधाः इति द्वात्रिंशत्, तेषु द्वात्रिंशद्गणिसंपद्भेदेषु नित्य-

१ ब-पुस्तके—"स्वय कथनेन" इत्यपि ॥

मायुक्तः, तथा चतुर्विधविनयप्रवृत्तः, इति षट्त्रिंशद्गुणो गुरुर्जयत्विति संक्षेपार्थः । विस्तरार्थस्त्वयम्—आचारसंपत् १, श्रुतसंपत् २, शरीरसंपत् ३, वचनसंपत् ४, वाचनासंपत् ५, मतिसंपत् ६, प्रयोगमतिसंपत् ७, संग्रहपरिज्ञासंपत् ८, इत्येता अष्टौ गणिसंपदः । तत्र चाचारसंपच्चतुर्धा—चरणसप्ततियुक्तता १, निर्मदता २, अनियतविहारिता ३, अचञ्चलेन्द्रियत्वं ४ चेति । तथा श्रुतसंपच्चतुर्धा—युगप्रधानागमज्ञता १, परिचितसूत्रार्थता २, उत्सर्गादिविदित्वम् ३, उदात्तादिघ्रुववर्णोच्चारित्वम् ४ । तथा शरीरसंपच्चतुर्धा—समचतुरस्रसंस्थानता १, संपूर्णाङ्गोपाङ्गता २, अविकलेन्द्रियत्वम् ३, तपःपरीषहादेः सहिष्णुता ४ चेति । तथा वचनसंपच्चतुर्धा—अनाहतप्रतिभात्वम् १, मधुरवाक्यता २, निर्विकारवचनता ३, स्फुटवचनता ४ चेति । तथा वाचनासंपच्चतुर्धा—योग्यायोग्यपात्रज्ञता १, पूर्वस्मिन् सूत्रार्थजाते परिणतेऽपरसूत्रार्थदानम् २, सूत्रं प्रति निर्यापणमुत्साहनम् ३, अर्थं प्रति निर्वाहित्वं ४ चेति । तथा मतिसंपच्चतुर्धा—अवग्रहोऽव्यक्तग्रहणम् १, इहा विमर्शः २, अपायो निश्चयः ३, धारणा अविस्मारणं ४ चेति । प्रयोगमतिर्वादबुद्धिः, साऽपि चतुर्धा—स्वशक्तिपरिज्ञानम् १, पुरुषपरिज्ञानम् २, स्वपरानुकूलक्षेत्रपरिज्ञानम्३, स्वपरानुकूलराजादिवस्तुविज्ञानं४ चेति । संग्रहपरिज्ञासंपच्चतुर्धा—गणविहारयोग्यक्षेत्रादिपरीक्षणम्१, भद्रकादीनामुपदेशतो गणचिन्तादौ स्थिरीकरणम्२, स्वाध्यायाङ्गानां पुस्तकादीनां संगच्छनम्३, तपोऽनुष्ठानादौ शैक्षकादीनां यथायोग्यकृत्यज्ञता४ चेति । एवं गणिसंपद्भेदा द्वात्रिंशदिति । तथाऽऽचारश्रुतविक्षेपदोषप्रतिघातभेदभिन्नत्वाद् विनयोऽपि चतुर्धा । तत्राचारविनयः स्वस्य परस्य वा संयमतपोगणप्रतिमाविहारादिसामाचारीसाधनलक्षणः१, श्रुतविनयः सू-

१ ब-पुस्तके-"मर्गोऽधारणम्" इत्यपि । २ ब-पुस्तके-"पूर्वसूत्रार्थजाते" इत्यपि । ३ ब-पुस्तके-"निर्वाहकत्व" इत्यपि । ४ नात्र किंतार्थता । ५ ब-पुस्तके-"परपुरुषपरिज्ञानम्" इत्यपि ॥ ६ ड-पुस्तके-"राज्यादि" इत्यपि । ७ ब-पुस्तके-"गणसहितविहार" इत्यपि । ८ "समो गच्छादनटि" । ९ ब-पुस्तके-"तत्र चाचार"॥

त्रार्थोभयभावरहस्यानां दानग्रहणधरणोपबृंहणादिभिः२, विक्षेपविनयो मिथ्यात्वतो गार्हस्थ्यतः प्रमादाद्वा विक्षिप्य सद्गुणभावेषु स्थापनमिति३, तद्दोषप्रतिघातविनयो विषयकषायादिदोषप्रतिघातनेनेति ४ । एतदर्थसूचिकाः पूर्वर्षिप्रणीतगाथाश्चेमाः—"आयार१ सुय२ सरीरे३, वयणे४ वायण५ मई६ पओगमई७ । एएसु संपया खलु, अट्ठमिया संगहपरिण्णा८ ॥१॥ चरणजुओ१ मयरहिओ२, अनिययवित्ती३ अचंचलो४ चेव । जुग१ परिचिय२ उस्सग्गो३, उदत्तघोसाइ विन्नाया४ ॥ २ ॥ चउरंस१ अंकुटाई२, बहिरत्तणवज्जिओ३ तवे सत्तो४ । वाइ१ महुरत्त२ निस्मिय३, फुडवयणो४ संपया वयणे ॥ ३ ॥ जोगे१ परिणयवयणो२, निज्जवया३ वायणाइ निव्वहणे४ । उग्गह१ ईह२ अवाया३, धारण४ मईसंपया चउरो ॥ ४ ॥ सत्ती१ पुरिसं२ खित्तं३, वत्थुं४ नाउं पउंजए वायं । गणजोगं१ संसत्तं२, सज्झाए३ सिक्खणं४ जाण ॥ ५ ॥ आयारे सुअविणए, विक्खेवे चेव होइ बोद्धव्वे । दोसस्स परिग्घाए, विणए चउहेस पडिवत्ती ॥ ६ ॥" इति गाथार्थः ॥ ३७ ॥

अथ सूरिवरगुणानामनन्तत्वं स्वस्य चात्यन्तं सामर्थ्याभावं दर्शयितुमाह—

**जइवि हु सूरिवराणं, सम्मं गुणकित्तणं करेउं जे । सक्कोवि नेव सक्कइ, कोऽहं पुण गाढमूढमई ॥३८॥**

व्याख्या—कण्ठ्या ॥ ३८ ॥ किं च—

**तहवि हु जहासुआओ, गुरुगुणसंगहमयाउ भत्तीए । इय छत्तीसं छत्तीसियाउ भणियाउ इह कुलए ॥३९॥**

व्याख्या—सुबोधैव ॥ ३९ ॥ अथैतद्गुरुगुणषट्त्रिंशिकासंग्रहगाथाकुलकार्थानुसारिणां प्राणिनामाशीर्वचनमाह—

सिरिवयरसेणसुहगुरु–सीसेणं विरइयं कुलगमेयं। पढिऊणमसढभावा, भव्वा, पावंतु कल्लाणं ॥४०॥

व्याख्या—सुगमैव ॥ ४० ॥

॥ समाप्ता चेयं सद्गुरुगुणषट्त्रिंशत्षट्त्रिंशिकाकुलकदीपिका ॥

श्रीमद्बृहद्गच्छपयोजहंसः, समस्तवादीन्द्रशिरोऽवतंसः। महापराभूतसुरेन्द्रसूरिर्जीयाज्जगत्यां गुरुदेवसूरिः ॥ १ ॥

तद्गच्छे स्वच्छमनाः, समजनि जयशेखरो गुरुः श्रीमान्। तत्पट्टगगनभानुः, सूरिः श्रीवज्रसेनाह्वः ॥ २ ॥

तत्पट्टनायकाः श्री—हेमतिलकसूरयस्तदादेशात्। श्रीरत्नशेखराख्यः, शिष्यो विवृतिं व्यधात् विशदाम् ॥ ३ ॥

॥ ग्रंथाग्रम् १२०० ॥

